# वैदिक-साहित्य-सौदामिनी

विद्वद्वर प्रो. श्री सत्यव्रत जी
को सादर, व सप्रेम भेंट।

शशिप्रभा गुप्ता
23-9-85.

लेखकः—

वागीश्वरो विद्यालङ्कारः

# प्रकाशकीयम्

अध्ययनकाले मया साहित्यदर्पणस्यैव कश्चिदंशो गुरुमुखादश्रावि। अतः साहित्यशास्त्रे मदीयं ज्ञानं यद्यपि चञ्चुप्रवेशमात्रमेव विद्यते, तथापि तादृशाल्पज्ञानेनैव मम मनीषाऽजायत—यथा लौकिकसाहित्य-ग्रन्थानां विवेचनाय काव्यप्रकाशादयो ग्रन्था मनीषिभिर्विरचिता-स्तथैवाऽऽद्यकवेः परमात्मन आदिकाव्यस्य वेदस्य विवेचनाय कश्चिद् लौकिकवैदिकोभयविधसाहित्यस्य पारदृश्वा वैदिकसाहित्यशास्त्रं संग्र-थ्नीयात् तर्हि वैदिकसाहित्यस्य सूक्ष्मेक्षिकयाऽनुशीलने महत् सौकर्यं संजायेत। अस्य कार्यस्य सम्पादनाय २०२१ तमे वैक्रमाब्दे मया तत्र भवन्त उभयविधसाहित्यपारङ्गता उन्नावनिवासिनो विद्वद्वर्या विद्या-सागरमहोदया भृशं प्रार्थिताः, परन्तु तेऽस्वस्थताकारणात् कार्यमिदं कर्तुं नापारयन्। कतिपयवर्षेभ्योऽनन्तरं च ते दिवंगताः। अस्मिन्ने-वान्तरालेऽन्यैरपि विद्वद्वर्यैः साकं मयैतत्कार्यसम्पादनाय सम्पर्को-ऽकारि, तथाऽप्यहं नात्र कृतकार्योऽभूवम्।

कतिपयवर्षेभ्योऽनन्तरं 'गुरुकुलपत्रिकायां' श्रीमतां विद्वच्छिरो-मणीनां वागीश्वरमहाभागानां[1] क्रमशः प्रकाश्यमाणां वैदिक-साहित्य-सौदामिनीं[1] दृष्ट्वा प्रसन्नं मे स्वान्तमभवत्। दैवदुर्विपाकात् किञ्चित् कालान्तरमेव श्रीमन्तो वागीश्वरमहोदया अपि परलोकं जग्मुः। तस्माद् वैदिक-साहित्य-सौदामिन्याः प्रकाशनमप्यवरुद्धम्।

वर्षत्रयात् प्राङ् मया विद्वद्वर्येभ्यः श्रीमनोहरवेदालङ्कारमहोदयेभ्यो निवेदितं यच्छ्रीमतां वागीश्वरमहोदयानां गृहे वैदिक-साहित्य-सौदा-मिन्या मुद्रणोत्तरस्यावशिष्टस्य भागस्यान्वेषणं कर्तव्यम्। यद्यवशिष्ट-स्यामुद्रितभागस्योपलब्धिर्भवेच्चेत् तस्य प्रकाशनस्य कथंचिद् व्यवस्था कर्तुं शक्यते। श्रीमद्भिः पण्डितवर्यैरन्विष्य सूचितं—यावान् भागो वैदिक-साहित्य-सौदामिन्या गुरुकुलपत्रिकायां प्रकाशितस्ततः परस्य भागस्य लेखनमकृत्वैव वागीश्वरमहाभागाः स्वर्ययुः।

एतद्वृत्तं विज्ञाय गुरुकुलपत्रिकायां प्रकाशितस्यैवांशस्य पुस्तक-

---

१. श्रीमतां वागीश्वरमहानुभावानां वैदिक-साहित्य-सौदामिन्याश्च परि-चयः श्रीमद्भिः पण्डितवर्यैः रामनाथवेदालङ्कारैर्लिखिते 'अथ द्वित्राः शब्दा लेखक-विषये ग्रन्थ-विषये च' शीर्षके लेखे द्रष्टव्यः।

रूपेण पुनः प्रकाशनाय मे मतिरजायत । यतो ह्ययं वैदिक-साहित्य-सौदामिन्याः स्वल्पोऽपि भागो भाविनां वेदविदां कृते पथप्रदर्शकः प्रकाशस्तम्भो वा भवितुमर्हति । अपि च **'कालोऽयं निरवधिर्विपुला च पृथिवी'** इति सुभाषितानुसारमनेन ग्रन्थेन प्रेरणां प्राप्य कश्चिद् विद्वान् पुनरेतादृशस्य ग्रन्थस्य लेखनाय प्रयतेत । अत एवास्मिन् महार्घे कालेऽप्यस्य ग्रन्थस्य पुनर्मुद्रणाय मयैष प्रयत्नो व्यधायि ।

अस्यात्युत्कृष्टस्य ग्रन्थस्य यादृशं सम्पादनकार्यमपेक्षितं न तथा कर्तुमहमपारयम् । तत्र कारण द्वयम्—(१) साहित्यशास्त्रे नास्ति मम तादृशं ज्ञानं, यादृशमेतादृशस्य ग्रन्थस्य सम्पादनेऽपेक्षितम्, (२) चिरकालीना शरीरस्यास्वस्थता च । सत्यप्येवं मया यथाकथंचिदस्य मुद्रणे प्रयतितं, येनास्य ग्रन्थस्य महत्त्वं प्रख्यापितं भवेत् । मुद्रणकाले मयाऽस्मिन् ग्रन्थे काश्चन टिप्पण्य उट्टङ्किताः । ग्रन्थकारस्य स्वस्य च टिप्पणीनां भेदपरिज्ञानाय मया प्रायेण सर्वत्र स्वटिप्पणीनामन्ते 'यु० मी०' इति संकेतः कृतस्तथापि ६८, ७२, १०४, १७४ तमेषु पृष्ठेषु प्रथमटिप्पणीनामन्ते, २८६ तमे च पृष्ठे १-२ टिप्पण्योरन्ते 'यु० मी०' इति संकेतः प्रमादान्नैव मुद्रितः ।

**आर्थिकी सहायता**—अस्य ग्रन्थस्य पुनर्मुद्रणाय श्रीमद्भिः पण्डितवर्यैर्**मनोहरलालवेदालङ्कार**महोदयैः १२५०-०० सार्धद्विशतोत्तरसहस्र रूप्यकाणां साहाय्यमाचरितम् । इत्थमेव श्रीमतां वागीश्वरमहानुभावानां सुपुत्रैस्तत्र भवद्भिः श्रीकुलभूषण—श्रीशशिभूषण-श्रीविनयभूषणाख्यै रूप्यकाणां २५००-०० पञ्चशतोत्तरं सहस्रद्वयं प्रदत्तम् । एवं मुद्रणकार्ये आर्थिकीं सहायतां विदधद्भ्यः सर्वेभ्यो धन्यवादः प्रदीयते।

**विशेषधन्यवादार्हाः**—श्रीमतां वागीश्वरमहोदयानां जीवन-परिचय लेखनाय मया श्रीमन्तो विद्वद्वर्या **रामनाथवेदालङ्कारमहोदयाः** सम्प्रार्थिताः । तत्र भवद्भिर्मदीयां प्रार्थनां स्वीकृत्य श्रीमतां वागीश्वरमहोदयानां जीवनवृत्तं, वैदिक-साहित्य-सौदामिन्याः परिचयः, ग्रन्थस्थविषयाणां सूचीपत्रं, ग्रन्थ उद्धृतानां व्याख्यातानां च वेदमन्त्राणां वर्णानुक्रमेण सूचीपत्रं सद्यो निर्माय प्रेषितम् । एतत्कार्यायाहं विद्वद्वर्याणां रामनाथवेदालङ्कारमहोदयानामतीव कृतज्ञोऽस्मि ।

**विदुषां वशंवदः—**

**युधिष्ठिरो मीमांसकः**

# अथ द्वित्राः शब्दा लेखक-विषये ग्रन्थ-विषये च

वैदिक-साहित्य-सौदामिन्या अस्या लेखकः पण्डितप्रवरो विद्यालङ्कारो वागीश्वरः श्रीरामप्रसादतनयः १८९६तमे ईसवीयवर्षे मईमासस्य त्रयोदश्यां तिथौ बिजनौरजनपदान्तर्गतजलाबादनाम्नि स्थाने जनिं लेभे । गुरुकुलार्थं कांगड़ीग्रामस्य तदन्तिकस्थाया इतरस्याश्च भूमेर्दानदाता सात्त्विकवृत्तिः श्रीमान् श्रेष्ठी अमनसिंहः पुत्रवदेनं स्वीकृत्य शिक्षादिकमस्य कारयामास । एषोऽपि तमेव पूज्यतातपादत्वेन तद्भार्याम् ईश्वरदेवीं च जननीत्वेन सदादृतवान् । शिक्षादीक्षाऽस्य प्रारम्भत एव गुरुकुलकांगड़ीविश्वविद्यालये सञ्जाता । तत्रैवायं प्राचीनार्वाचीनविविधविषयानधीत्य १९१९तमे ईसवीयवर्षे विद्यालङ्कारपरीक्षामुदतरत् । आदित एव लौकिकसंस्कृतसाहित्ये वेदवेदाङ्गादिषु च प्राच्यविषयेष्वस्य शेमुषी सविशेषं प्रसरति स्म । छात्रावस्थायामेवायं संस्कृतपत्रिकासम्पादने लघुनाटकप्रहसननिबन्धश्लोकगीतिकारचनादौ च परां रुचिं प्रदर्शयामास । आर्यभाषायां देवभाषायां च समानरूपेणास्य प्रतिभोन्मेषो दरीदृश्यते स्म । तथैवाङ्ग्लभाषायामितिहासेऽर्थशास्त्रे राजनीतिशास्त्रे भारतीयसंस्कृतीत्यादिषु चाप्यस्य नैपुण्यमवर्तत ।

गुरुकुलाद् विद्यालङ्कारोपाधिग्रहणानन्तरं वाराणस्याः संस्कृतविश्वविद्यालयात् सबहुमानं साहित्याचार्यपरीक्षामप्युत्तीर्णवान् । पश्चात् तेन आगराविश्वविद्यालयात् संस्कृतविषये एम०ए० परीक्षापि प्रथमविभागे समुत्तीर्णा । संस्कृतविषयेऽस्य प्रखरपाण्डित्यप्रभाविता गुरुकुलकांगड़ीविश्वविद्यालयाधिकारिणोऽमुं गुरुकुले संस्कृतविभागाध्यक्षपदे प्रतिष्ठापितवन्तः । १९२०तमादब्दादारभ्य १९५९तमाब्दपर्यन्तमसौ मनोयोगेन गुरुकुलस्य सेवामकरोत् । तत्र संस्कृतविभागाध्यक्षपदातिरिक्तमन्यान्यपि पदानि समलञ्चकार । हिन्दी-

विभागाध्यक्षाः प्रख्याताः साहित्यसेविनः पण्डितपद्मसिंहशर्माणो यदा हिन्दीविभागाध्यक्षपदं परित्यज्य गुरुकुलाद् गतवन्तस्तदा कतिपय-वर्षाणि हिन्दीविभागाध्यक्षपदेऽप्ययमेव कार्यमकरोत् । एतदतिरिक्तं गुरुकुलीयपुस्तकालयस्य प्रधानाध्यक्षपदं सम्मानास्पदं विश्वविद्यालयस्य कुलसचिवपदम्, शिक्षाध्यक्षपदम्, कलामहाविद्यालयस्य प्रधानाचार्यपदम्, विज्ञानमहाविद्यालयस्याध्यक्षपदं चाप्यनेन मनीषिणा समलङ्कृतम् । इतरविश्वविद्यालयैः प्रशासनद्वारा च गुरुकुलस्योपाधीनां मान्यतायै, गुरुकुलस्य चतुर्मुखोत्कर्षार्थं च कर्मठेन विपश्चिताऽनेन सुमहान् प्रयत्नोऽनुष्ठितः, साफल्यं चापि तत्र लब्धम् ।

एतेन विद्वत्तल्लजेन प्रणीताः केचन ग्रन्थाः सन्ति **साहित्यसुधा-संग्रहः** (महाविद्यालयेषु पाठनार्थं भागद्वये संकलितः) **छात्रकौतुकम्** (एकाङ्कं संस्कृतनाटकम्), **विदूषकपरिषद्** (एकाङ्कं संस्कृतनाटकम्) **शकुन्तला** (कालिदासकृतस्य 'अभिज्ञानशाकुन्तलम्' इत्याख्यस्य नाटकस्य गद्यपद्यमयः हिन्दीभाषानुवादः), **विक्रमोर्वशीय** (कालिदासीय-संस्कृतनाटकस्य गद्यपद्यमयः हिन्दीभाषानुवादः) **मालविकाग्निमित्र** (कालिदासीयसंस्कृतनाटकस्य गद्यपद्यमयः हिन्दीभाषानुवादः), **कुन्द-माला** (संस्कृतनाटकस्य गद्यपद्यमयः हिन्दीभाषानुवादः), **कालिदास की काव्यकला** (समालोचनात्मको वैदुष्यपूर्णो ग्रन्थः), **नीराजना** (हिन्दीकवितासंग्रहः)। एतदतिरिक्तं संस्कृतश्लोकाः, भूयस्यः संस्कृत-गीतिकाः, बहवो निबन्धाः, अनेकानि हिन्दीगीतानि चाप्यनेन रचितानि ।

प्रस्तुता 'वैदिक-साहित्य-सौदामिनी' नाम रचना विद्वल्ललामस्यैतस्य सर्वथा मौलिकी नवीना कृतिः । यादृशी प्रतिभा लौकिकालङ्कार-शास्त्रे काव्यप्रकाशे मम्मटेन, साहित्यदर्पणे विश्वनाथेन, रसगङ्गाधरे च पण्डितराजजगन्नाथेन प्रदर्शिता तादृश्येव वैदिकालङ्कारशास्त्रे पण्डितवरेण वाचामीश्वरेण वागीश्वरेणानेन निरूपिता । पूर्वं कारिकाः, ततस्तासां व्याख्यानम्, ततो लौकिकवैदिकोदाहरणानि, उदाहृतानां वेदमन्त्राणां व्याख्यानं च सर्वमेतत् पाठकानां चेतस्यपूर्वं प्रभावं जनयति । यान् वेदान् लक्षीकृत्य कालिदासेन **'वेदाभ्यासजडः'** इति ब्रह्मणो विशेषणमुक्तं तेषु वेदेषु कापि सालङ्कारा साभिधालक्षणा-व्यञ्जना सरसाऽपूर्वा चमत्कारमयी शब्दार्थयोजना समुल्लसतीति कस्य कौतुकं नावहेत् । वेदानां वैदुष्यं साहित्यमर्मज्ञत्वं चोभयमेकत्र

विरलम्, अत एव शुष्का विरसाश्च वेदा इति प्रवादपरम्परा प्रचलिता। तदेव ग्रन्थलेखको भूमिकायां प्रतिपादयति—

**"सन्त्येके श्रुतिपाठमात्रजरठाः साहित्यविद्वेषिणो**
**ये साहित्यपरायणाः सहृदयास्तेषां न वेदे गतिः।**
**एकस्मिन्नसति द्वयोरपि गुणाभिज्ञे श्रुतिः, सीदति**
**मर्मज्ञे पुरुषे द्वयोर्हि घटते योगो मणिस्वर्णयोः"** ॥इति॥

वेददुर्दशां दर्शं दर्शं विदीर्णहृदयः स स्वविकलतामेवं प्रकटयति—

**अनाद्यनन्तान् मनुराह वेदांस्तथाऽखिलज्ञाननिधीन् प्रभोः सः।**
**यज्ञेषु पाठार्थमनर्थकांश्च विपश्चितोऽन्ये प्रतिजज्ञिरे तान्॥**
**कदाचिदज्ञैरथवाल्पधीभिः क्वचित् खलैः स्वार्थपरायणैश्च।**
**विकृष्यमाणा बधिकैरिवोग्रैः कां दुर्दशां प्राप न वेदधेनुः** ॥इति॥

यस्य वेदस्य विषये श्रुतिः स्वयमेव व्याहरति—**देवस्य पश्य काव्यं न ममार न जीर्यति** (अथर्व० १०।८।३२) इति, यं च परमेश्वरं वेदकाव्यस्य कर्तारमपूर्वं कविं वर्णयति—'**सत्यमहं गभीरः काव्येन**' '**न त्वदन्यः कवितरः**' (अथर्व० ५।११।३, ४) '**कविर्मनीषी परिभूः स्वयम्भूः**' (यजु० ४०।८) इति, तस्य वेदस्य काव्यत्वं तद्रचयितुः परमेश्वरस्य च महाकवित्वं साधयितुमेव ग्रन्थकृता सौदामिनीयं विरचिता, यत्रालङ्कारशास्त्रस्य विभिन्नविषयेषु द्विशतं वेदमन्त्रा उदाहृता व्याख्याताश्च।

वैदिक-साहित्य-सौदामिनीयं पञ्चसून्मेषेषु प्रविभक्ताऽस्ति। यस्मिन् यस्मिन्नुन्मेषे यो यो विषयः प्रकाशितस्तत्परिचयार्थं पृथग् विषयसूची प्रदत्ता। संक्षेपतः, **प्रथमोन्मेषः**—वेदस्य परमात्मनः श्रव्यकाव्यत्वम्, काव्य-साहित्य-कलानां स्वरूपम्, कविषु सहृदयेषु च प्रज्ञा-कल्पना-भावनानां कार्यं, काव्यकारणचतुष्टयमित्यादि वर्णितम्। **द्वितीयोन्मेषः**—काव्यस्वरूपविमर्शविषयकः, यत्र शब्दस्यैव काव्यत्वम् इति पण्डितवरजगन्नाथमतमपास्य काव्यत्वं शब्दार्थयोर्व्यासक्तमेवेति संस्थाप्य, मम्मटस्य काव्यलक्षणे दर्पणकृतो दोषोद्भावनं 'रीतिरात्मा काव्यस्य' इति वामनोक्तिं च समालोच्य स्वमते काव्यस्वरूपं सोदाहरणं प्रतिपादितम्। **तृतीयोन्मेषः**—शब्दविमर्शपरः, यत्र साम्प्रतिके काले प्रवृत्तं भाषाविज्ञानशास्त्रमाधारीकृत्य भाषालक्षणं प्रदर्शितम्,

भाषोत्पत्तौ विविधवादाश्च समीक्षिताः, वर्णपदवाक्यमहावाक्यादि-स्वरूपं च निरूपितम् । **चतुर्थोन्मेषः**—अर्थविमर्शविषयकः, यत्राभिधा-लक्षणाव्यञ्जनावृत्तीना मर्म समुद्घाटितम् । **पञ्चमोन्मेषः**—ध्वनि-विमर्शविषयः, यत्रोत्तमकाव्यस्य ध्वनेर्मध्यमकाव्यस्य गुणीभूत-व्यङ्ग्यस्य च भेदोपभेदाः सोदाहरणं प्रतिपादिताः । सर्वत्र लौकिको-दाहरणान्यपि प्रदत्तानि ।

वस्तुतस्तु लेखकः सम्पूर्णमेव वैदिकालङ्कारशास्त्रमुपनिबन्धुं प्रवृत्त आसीत् । किन्तु, हा ! हन्त, मध्य एव ३०मई १९७८ दिवसे स काल-कवलितो जात इति तत्कृतिरपूर्णैव स्थिता । पञ्चमोन्मेषान्तमेव मह-त्तमस्यास्य रचनां कर्तुमपारयत् । काव्यशास्त्रस्य महत्त्वपूर्णमङ्गं रस-गुणालङ्काररूपं तल्लेखनी नैव चित्रयामास । दोषा यद्यपि पूर्णस्य परमात्मकवेः काव्ये नैव सम्भवन्ति, तथापि वेदेषूच्यमानानां पुन-रुक्त्यादिदोषाणां समाधानं तु कर्तव्यमासीदेव । सर्वमेतल्लेखकेन सार्द्धमेव गतम् । तथापि निराशा न वैदिकी वृत्तिः । समायास्यति सहृदयः कश्चिद् विद्वदग्रणीर्योऽपूर्णमेतत् कार्यं पूरयिष्यतीत्याशास्महे ।

सौदामिन्याः प्रणेता श्रीमान् वागीश्वरो विद्यालङ्कारो न केवलं काव्यमर्मज्ञः प्रत्युत स्वयमपि कविरासीत् । एतद्ग्रन्थस्य श्लोकबद्धा भूमिकैव तत्र प्रमाणम्, यत्र द्वाविंशत्युत्तरैकशतसंख्यकानि तत्प्रणी-तानि मञ्जुलानि पद्यानि विलसन्ति । सौदामिन्या उन्मेषेष्वपि यत्र तत्र स स्व-रचितानि पद्यान्युदाहरणरूपेण विन्यस्यति । ग्रन्थे सर्वाः कारिका अपि तत्प्रणीताः सन्त्येव ।

एतद्ग्रन्थप्रणयनेन वेदानां या सेवा तेनानुष्ठिता तत्कृते स सर्वेषां वेदप्रणयिनां धन्यवादार्हो नमस्करणीयश्चेत्युक्त्वैव विरमामः, सश्रद्धा गुरुवर्याय प्रणामाञ्जलिं च विनिवेदयामः ।

एषा 'वैदिक-साहित्य-सौदामिनी' गुरुकुलकांगड़ीविश्वविद्यालयस्य गुरुकुलपत्रिकायां प्रतिमासं १९६५तमात् खीष्टसंवत्सरात् १९७५तमं संवत्सरं यावत् क्रमशः प्रकाशिता । सैव साम्प्रतं श्रीमता पण्डित-प्रवरेण युधिष्ठिरमीमांसकेन स्वयं पुस्तकाकारेण प्रकाश्यते ।

**विदुषां वशंवदः—**

**रामनाथो वेदालङ्कारः**

# विषयसूची

## प्रथम उन्मेषः—प्रस्तावना

भूमिका पृष्ठसंख्या १-२८

## द्वितीय उन्मेषः—काव्यस्वरूपविमर्शः

## चतुर्थ उन्मेषः—अर्थविमर्शः

विभागाध्यक्षाः प्रख्याताः साहित्यसेविनः पण्डितपद्मसिंहशर्माणो यदा हिन्दीविभागाध्यक्षपदं परित्यज्य गुरुकुलाद् गतवन्तस्तदा कतिपय-वर्षाणि हिन्दीविभागाध्यक्षपदेऽप्ययमेव कार्यमकरोत् । एतदतिरिक्तं गुरुकुलीयपुस्तकालयस्य प्रधानाध्यक्षपदं सम्मानास्पदं विश्वविद्यालयस्य कुलसचिवपदम्, शिक्षाध्यक्षपदम्, कलामहाविद्यालयस्य प्रधानाचार्यपदम्, विज्ञानमहाविद्यालयस्याध्यक्षपदं चाप्यनेन मनीषिणा समलङ्कृतम् । इतरविश्वविद्यालयैः प्रशासनद्वारा च गुरुकुलस्योपाधीनां मान्यतायै, गुरुकुलस्य चतुर्मुखोत्कर्षार्थं च कर्मठेन विपश्चिताऽनेन सुमहान् प्रयत्नोऽनुष्ठितः, साफल्यं चापि तत्र लब्धम् ।

एतेन विद्वत्तल्लजेन प्रणीताः केचन ग्रन्थाः सन्ति **साहित्यसुधा-संग्रहः** (महाविद्यालयेषु पाठनार्थं भागद्वये संकलितः) **छात्रकौतुकम्** (एकाङ्कं संस्कृतनाटकम्), **विदूषकपरिषद्** (एकाङ्कं संस्कृतनाटकम्) **शकुन्तला** (कालिदासकृतस्य 'अभिज्ञानशाकुन्तलम्' इत्याख्यस्य नाटकस्य गद्यपद्यमयः हिन्दीभाषानुवादः), **विक्रमोर्वशीय** (कालिदासीय-संस्कृतनाटकस्य गद्यपद्यमयः हिन्दीभाषानुवादः) **मालविकाग्निमित्र** (कालिदासीयसंस्कृतनाटकस्य गद्यपद्यमयः हिन्दीभाषानुवादः), **कुन्द-माला** (संस्कृतनाटकस्य गद्यपद्यमयः हिन्दीभाषानुवादः), **कालिदास की काव्यकला** (समालोचनात्मको वैदुष्यपूर्णो ग्रन्थः), **नीराजना** (हिन्दीकवितासंग्रहः)। एतदतिरिक्तं संस्कृतश्लोकाः, भूयस्यः संस्कृत-गीतिकाः, बह्वो निबन्धाः, अनेकानि हिन्दीगीतानि चाप्यनेन रचितानि ।

प्रस्तुता 'वैदिक-साहित्य-सौदामिनी' नाम रचना विद्वल्ललामस्यैतस्य सर्वथा मौलिकी नवीना कृतिः । यादृशी प्रतिभा लौकिकालङ्कार-शास्त्रे काव्यप्रकाशे मम्मटेन, साहित्यदर्पणे विश्वनाथेन, रसगङ्गाधरे च पण्डितराजजगन्नाथेन प्रदर्शिता तादृश्येव वैदिकालङ्कारशास्त्रे पण्डितवरेण वाचामीश्वरेण वागीश्वरेणानेन निरूपिता । पूर्वं कारिकाः, ततस्तासां व्याख्यानम्, ततो लौकिकवैदिकोदाहरणानि, उदाहृतानां वेदमन्त्राणां व्याख्यानं च सर्वमेतत् पाठकानां चेतस्यपूर्वं प्रभावं जनयति । यान् वेदान् लक्षीकृत्य कालिदासेन **'वेदाभ्यासजडः'** इति ब्रह्मणो विशेषणमुक्तं तेषु वेदेषु कापि सालङ्कारा साभिधालक्षणा-व्यञ्जना सरसाऽपूर्वा चमत्कारमयी शब्दार्थयोजना समुल्लसतीति कस्य कौतुकं नावहेत् । वेदानां वैदुष्यं साहित्यमर्मज्ञत्वं चोभयमेकत्र

विरलम्, अत एव शुष्का विरसाश्च वेदा इति प्रवादपरम्परा प्रचलिता । तदेव ग्रन्थलेखको भूमिकायां प्रतिपादयति—

"सन्त्येके श्रुतिपाठमात्रजरठाः साहित्यविद्वेषिणो
ये साहित्यपरायणाः सहृदयास्तेषां न वेदे गतिः ।
एकस्मिन्नसति द्वयोरपि गुणाभिज्ञे श्रुतिः, सीदति
मर्मज्ञे पुरुषे द्वयोर्हि घटते योगो मणिस्वर्णयोः" ।।इति।।

वेददुर्दशां दर्शं दर्शं विदीर्णहृदयः स स्वविकलतामेवं प्रकटयति –

अनाद्यनन्तान् मनुराह वेदांस्तथाऽखिलज्ञाननिधीन् प्रभोः सः ।
यज्ञेषु पाठार्थमनर्थकांश्च विपश्चितोऽन्ये प्रतिजज्ञिरे तान् ।।
कदाचिदज्ञैरथवाल्पधीभिः क्वचित् खलैः स्वार्थपरायणैश्च ।
विकृष्यमाणा बधिकैरिवोग्रैः कां दुर्दशां प्राप न वेदधेनुः ।।इति।।

यस्य वेदस्य विषये श्रुतिः स्वयमेव व्याहरति—**देवस्य पश्य काव्यं न ममार न जीर्यति** (अथर्व० १०।८।३२) इति, यं च परमेश्वरं वेदकाव्यस्य कर्तारमपूर्वं कविं वर्णयति—'**सत्यमहं गभीरः काव्येन**' '**न त्वदन्यः कवितरः**' (अथर्व० ५।११।३, ४) '**कविर्मनीषी परिभूः स्वयम्भूः**' (यजु० ४०।८) इति, तस्य वेदस्य काव्यत्वं तद्रचयितुः परमेश्वरस्य च महाकवित्वं साधयितुमेव ग्रन्थकृता सौदामिनीयं विरचिता, यत्रालङ्कारशास्त्रस्य विभिन्नविषयेषु द्विशतं वेदमन्त्रा उदाहृता व्याख्याताश्च ।

वैदिक-साहित्य-सौदामिनीयं पञ्चसून्मेषेषु प्रविभक्ताऽस्ति । यस्मिन् यस्मिन्नुन्मेषे यो यो विषयः प्रकाशितस्तत्परिचयार्थं पृथग् विषयसूची प्रदत्ता । संक्षेपतः, **प्रथमोन्मेषः**—वेदस्य परमात्मनः श्रव्यकाव्यत्वम्, काव्य-साहित्य-कलानां स्वरूपम्, कविषु सहृदयेषु च प्रज्ञा-कल्पना-भावनानां कार्यं, काव्यकारणचतुष्टयमित्यादि वर्णितम् । **द्वितीयोन्मेषः**—काव्यस्वरूपविमर्शविषयकः, यत्र शब्दस्यैव काव्यत्वम् इति पण्डितवरजगन्नाथमतमपास्य काव्यत्वं शब्दार्थयोर्व्यासक्तमेवेति संस्थाप्य, मम्मटस्य काव्यलक्षणे दर्पणकृतो दोषोद्भावनं 'रीतिरात्मा काव्यस्य' इति वामनोक्ति च समालोच्य स्वमते काव्यस्वरूपं सोदाहरणं प्रतिपादितम् । **तृतीयोन्मेषः**—शब्दविमर्शपरः, यत्र साम्प्रतिके काले प्रवृत्तं भाषाविज्ञानशास्त्रमाधारीकृत्य भाषालक्षणं प्रदर्शितम्.

भाषोत्पत्तौ विविधवादाश्च समीक्षिताः, वर्णपदवाक्यमहावाक्यादि-स्वरूपं च निरूपितम्। **चतुर्थोन्मेषः**—अर्थविमर्शविषयकः, यत्राभिधा-लक्षणाव्यञ्जनावृत्तीना मर्म समुद्घाटितम्। **पञ्चमोन्मेषः**—ध्वनि-विमर्शविषयः, यत्रोत्तमकाव्यस्य ध्वनेर्मध्यमकाव्यस्य गुणीभूत-व्यङ्ग्यस्य च भेदोपभेदाः सोदाहरणं प्रतिपादिताः। सर्वत्र लौकिको-दाहरणान्यपि प्रदत्तानि।

वस्तुतस्तु लेखकः सम्पूर्णमेव वैदिकालङ्कारशास्त्रमुपनिबन्धुं प्रवृत्त आसीत्। किन्तु, हा! हन्त, मध्य एव ३०मई १९७८ दिवसे स काल-कवलितो जात इति तत्कृतिरपूर्णैव स्थिता। पञ्चमोन्मेषान्तमेव महत्तमस्यास्य रचनां कर्तुमपारयत्। काव्यशास्त्रस्य महत्त्वपूर्णमङ्गं रस-गुणालङ्काररूपं तल्लेखनी नैव चित्रयामास। दोषा यद्यपि पूर्णस्य परमात्मकवेः काव्ये नैव सम्भवन्ति, तथापि वेदेषूच्यमानानां पुन-रुक्त्यादिदोषाणां समाधानं तु कर्तव्यमासीदेव। सर्वमेतल्लेखकेन सार्द्धमेव गतम्। तथापि निराशा न वैदिकी वृत्तिः। समायास्यति सहृदयः कश्चिद् विद्वदग्रणीर्योऽपूर्णमेतत् कार्यं पूरयिष्यतीत्याशास्महे।

सौदामिन्याः प्रणेता श्रीमान् वागीश्वरो विद्यालङ्कारो न केवलं काव्यमर्मज्ञः प्रत्युत स्वयमपि कविरासीत्। एतद्ग्रन्थस्य श्लोकबद्धा भूमिकैव तत्र प्रमाणम्, यत्र द्वाविंशत्युत्तरैकशतसंख्यकानि तत्प्रणी-तानि मञ्जुलानि पद्यानि विलसन्ति। सौदामिन्या उन्मेषेष्वपि यत्र तत्र स स्व-रचितानि पद्यान्युदाहरणरूपेण विन्यस्यति। ग्रन्थे सर्वाः कारिका अपि तत्प्रणीताः सन्त्येव।

एतद्ग्रन्थप्रणयनेन वेदानां या सेवा तेनानुष्ठिता तत्कृते स सर्वेषां वेदप्रणयिनां धन्यवादार्हो नमस्करणीयश्चेत्युक्त्वैव विरमामः, सश्रद्धा गुरुवर्याय प्रणामाञ्जलिं च विनिवेदयामः।

एषा 'वैदिक-साहित्य-सौदामिनी' गुरुकुलकांगड़ीविश्वविद्यालयस्य गुरुकुलपत्रिकायां प्रतिमासं १९६५तमात् ख्रीष्टसंवत्सरात् १९७५तमं संवत्सरं यावत् क्रमशः प्रकाशिता। सैव साम्प्रतं श्रीमता पण्डित-प्रवरेण युधिष्ठिरमीमांसकेन स्वयं पुस्तकाकारेण प्रकाश्यते।

**विदुषां वशंवदः—**

**रामनाथो वेदालङ्कारः**

# विषयसूची

## प्रथम उन्मेषः—प्रस्तावना

भूमिका — पृष्ठसंख्या १–२८

## द्वितीय उन्मेषः—काव्यस्वरूपविमर्शः

## तृतीय उन्मेषः—शब्दविमर्शः

## चतुर्थ उन्मेषः—अर्थविमर्शः

## पञ्चम उन्मेषः—ध्वनिविमर्शः

*. १८७तमपृष्ठस्थ दशमकारिकानन्तरं कारिकासंख्यासु अव्यवस्था दृश्यते । ११-१६ संख्याः क्वचिदपि नैव प्रत्ताः । एवं प्रतीयते यल्लेखकेन अर्थ-शक्त्युद्भवध्वनेः स्वरूपविषये द्वादशभेदविषये च ११-१६ संख्या कारिका निबद्धा आसन्, या गुरुकुलपत्रिकायां मुद्रणसमयेऽनवधानतावशात् परित्यक्ताः । १६५ तम पृष्ठे ऽर्थशक्त्युद्भवध्वनेस्तुरीयो भेदः प्रारब्धः आद्यास्त्रयो भेदाः तत्सम्बद्धाः कारिकाश्च प्रलुप्ता एव । १७-२६ संख्याः कारिकाभिन्नेषु उदाहरणश्लोकेषु निपतिताः ।

ओ३म्

# वैदिक-साहित्य-सौदामिन्यां[1]

## भूमिका

सन्त्येके श्रुतिपाठमात्रजरठाः साहित्यविद्वेषिणो
ये साहित्यपरायणाः सहृदयास्तेषां न वेदे गतिः ।
एकस्मिन्नसति द्वयोरपि गुणाभिज्ञे श्रुतिः सीदति
मर्मज्ञे पुरुषे द्वयोर्हि घटते योगो मणिस्वर्णयोः ॥१॥

अस्माकं दुर्दैववशादतीते
कालेऽतिदीर्घे विपुलत्वमाप्ते ।
साहित्यराशौ निगमागमानां
छिन्ने समाजे गहनैः प्रदेशैः ॥२॥

पुरातनो श्रुत्यनुशीलनस्य
परम्परा लोपमवाप लोके ।
शाखादिभेदेन च यत्र तत्र
निरङ्कुशोऽसौ ववृधे विरोधः ॥३॥

अहं कविः काव्यमिदं गभीर[2]-
मिति प्रभूक्ति नितरामुपेक्ष्य ।

---

१. सौदामनी, सौदामिनी, सौदाम्नीति आपटे कोशे तृतीयपुटकस्य १७०७ तमे पृष्ठे । 'तेनैकदिक्' (पाणिनि० ४।३।११२) सूत्रेण सुदाम्नाद्रिणा एकदिगिति सिद्धान्तकौमुद्यां श्रीदीक्षिताः । श्रीहेमचन्द्रास्तु 'सौदामिनी तडिद्भेदेऽप्सरोभिदि०' ॥ तथा—'सुदामा पर्वते मेघे०' इत्यपि तत्रैव । सुदाम्ना मेघेनैकदिगित्यर्थः । किं च 'सौदामिनीव जलदोदरसन्धिलीना०' इति मृच्छकटिके ।

२. (क) सत्यमहं गभीरः काव्येन सत्यं जातेनाऽस्मि जातवेदाः ।
न मे दासो नार्यो महित्वा व्रतं मीमाय यदहं धरिष्ये ।

कृतान्यनेकैः कृतिभिः स्ववेद-
भाष्याणि दूष्याणि मया न तानि ॥४॥

अनाद्यनन्तान्[1] मनुराह वेदां-
स्तथाऽखिलज्ञाननिधीन् प्रभोः सः।
यज्ञेषु पाठार्थमनर्थकाँश्च[2]
विपश्चितोऽन्ये प्रतिजज्ञिरे तान् ॥५॥

कदाचिदज्ञैरथवाऽल्पधीभिः
क्वचित्खलैः स्वार्थपरायणैश्च।
विकृष्यमाणा बधिकैरिवोग्रैः
कां दुर्दशां प्राप न वेदधेनुः ॥६॥

मूर्धाऽभिषिक्तोऽखिलवेदभाष्य-
कृतां नवानां च पुरातनानाम्।
श्रीसायणो[3] जैमिनिपक्षपाती
मेने न वेदेष्वितिहासपक्षम् ॥७॥

---

(ख) न त्वदन्यः कवितरो न मेधया धीरतरो वरुण स्वधावन्।
त्वं ता विश्वा भुवनानि वेत्थ, स चिन्नु त्वज्जनो मायी बिभाय ॥
अथर्व० ५।११।३,४॥

(ग) स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ यजु० ४०।८॥

१. (क) पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।
अशक्यमप्रमेयं च वेदशास्त्रमिति स्थितिः ॥ मनु० १२।९४॥

(ख) चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक्।
भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिध्यति ॥ मनु० १२।९७॥

(ग) सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ मनु० १२।१००॥

२. यदि मन्त्रार्थप्रत्ययाय ? अनर्थकं भवतीति कौत्सः (निरुक्ते १।५)।

३. "उक्तश्चाऽनित्यसंयोग" १।२।५० इति मीमांसायाः प्रथमपादस्याऽन्तिमाधिकरणे सोऽयमनित्यसंयोगदोष उक्तःपरिहृतः। तथाहि—"तत्र पूर्वपक्षे वेदानां

तथाऽप्यनार्षैः कृतबुद्धिमोहो
ग्रन्थैरवज्ञाय निजां प्रतिज्ञाम् ।
क्वचित् क्वचिद् वेदरहस्यचक्र-
व्यूहेऽभिमन्युत्वमवाप हन्त ।।८।।

न किन्तु निन्द्यो निगमाऽऽगमेषु
श्रुतेः षडङ्गेषु कृतश्रमोऽसौ ।
नवेऽध्वनि ध्वान्तचये च घोरे
पदं स्खलत्येव सुचक्षुषोऽपि ।।९।।

[1]असङ्गताऽर्थत्व-मनर्थकत्व[2]-
मस्पष्टतां[3] ये ब्रुवते श्रुतीनाम्[4] ।
कुर्वन्तु यत्नं न निरीक्षतेऽन्धश्चेत्
स्थाणुमन्धस्य हि तत्र दोषः ।।१०।।

---

पौरुषेयत्वं वक्तुं काठकं कालापकमित्यादि पुरुषसम्बन्धाभिधानं हेतु कृत्वा-ऽनित्यदर्शनाच्चेति हेत्वन्तरं सूत्रितम्—बबरः प्रावाहणिरकामयतेत्यनित्यतां बबरादीनामर्थानां दर्शनात् ततः पूर्वमसत्त्वात् पौरुषेयो वेद इति । तस्योत्तरं सूत्रितम्—परं तु श्रुतिसामान्यमिति । तस्याऽयमर्थः—यत्काठकादिसमाख्यानं तत् प्रवचननिमित्तम् । यत्तु बबराद्यनित्यदर्शनं तच्छब्दसामान्यमात्रम् । न तु तत्र बबराख्यः कश्चित् पुरुषो विवक्षितः । किन्तु बबरशब्दानुकृतिः । तथा सति बबरं शब्दं कुर्वन् वायुरभिधीयते । स च प्रावाहणिः प्रकर्षेणवहनशीलः । एव-मन्यत्राऽप्यूहनीयम् । तदेवं कस्यचिदपि दोषस्याऽसंभवात् (पूर्वपक्षप्रतिपादित-दोषाऽभावात्) विवक्षिताऽर्था मन्त्राः स्वाऽर्थप्रकाशनायैव प्रयोक्तव्याः" । सूत्रम्—विधिशब्दाच्च ।।१।२।५३।। मन्त्रव्याख्यानरूपो ब्राह्मणगतः शब्दो विधिशब्दः उच्यते । शतं हिमाः शतं वर्षाणि जीव्यासमित्येवैतदाहेति । तत्र शतं हिमा इत्येतद् मन्त्रस्य प्रतीकम् । अवशिष्टं तु तस्य तात्पर्यव्याख्यानम् । तस्मात् विवक्षितार्था मन्त्राः प्रयोगकाले स्वार्थप्रकाशनायैवोच्चारणीयाः । न च मन्त्र-ब्राह्मणयोस्तुल्यबलत्वम् ।।

१--४. असंगताऽर्थकत्वमिति—गच्छतीति गौरिति व्युत्पत्या कश्चिद् गच्छन् गौरित्युच्यते । अपरः शयानोऽपि गौरुच्यते । नैष दोषः । प्रायो गमनात् रूढया गौरिति प्रसिद्धः पशुविशेषः शयानोऽपि गौरुच्यते योगाद् रूढिर्बलीयसीति सिद्धान्तात् ।

अनर्थकम्—ओषधे त्रायस्व, स्वधिते मैनं हिंसीः (यजु० ४।१) इत्याह

शङ्का—

पदप्रयोगे नियतक्रमोऽयं
यथाऽस्ति वेदे न तथा तु लोके ।
न वेद पाठेऽनुमतो विधातु-
मीडेऽग्निमित्यादि विपर्ययेण ॥११॥

समाधत्ते—

याऽऽनुपूर्वी श्रुतावस्ति सा हिच्छन्दोऽनुरोधतः ।
नैष दोषोऽस्ति लोकेऽपि वागर्थाविति पठ्यते ॥१२॥

पद्यार्थे तु विधातव्ये यथा प्रागिष्यतेऽन्वयः ।
सौकर्याय तथाऽर्थस्य स मन्त्रेऽपि विधीयते ॥१३॥

अर्थज्ञानविहीनेन पाठेन पुण्यकल्पना ।
विद्यमाने फले दृष्टे वृथाऽदृष्टस्य कल्पना ॥१४॥

पुनः शङ्कते—

यदाह स्वधिते मैनं हिंसीर्व्यापादयन्नपि ।
शब्दाऽर्थयोर्विरोधेन वेदेष्वर्थो न मृग्यते ॥१५॥

तत्समाधत्ते—

नैवाऽयमपि दोषोऽस्ति मुख्यार्थस्य न बाधनात् ।
मन्त्राऽऽशयमजानद्भिर्यज्ञे हिंसा विधीयते ॥१६॥

---

हिंसन् । तस्मादनर्थका मन्त्रा इति । नैष दोषः । शिशोः मुण्डनसंस्कारे विनियुक्तस्य मन्त्रस्य सार्थकत्वात् । पशुहिंसायां प्रयुक्तस्य मन्त्रस्यास्य विनियोगो हिंसा च उभयमनुचितम् ।

अस्पष्टार्थता—जर्भरी तुर्फरीत्यादीनि पदानि अविस्पष्टार्थानीति यदुच्यते तत्र शास्त्राणि शास्त्रविदः स्वाध्यायश्च शरणम् । नैष स्थाणोरपराधो यदेनमन्धो न पश्यति । प्रसंगेऽस्मिन् निरुक्तस्य अ० १३, खं० ५, पाठो द्रष्टव्यः ।

श्रुतेः पाठोऽर्थज्ञानफलकः—स्थाणुरयं भारहारः किलाभूद् अधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत् सकलं भद्रमश्नुते, नाकमेति ज्ञानविधूतपाप्मा ॥ निरुक्त अ० १, खं० १८ ।

त्रायस्वौषध एनं मा हिंसीरित्यभिधाय च।
न नापितेन बालस्य शिरश्छेदो विधीयते ॥१७॥
शिशोर्मुण्डनसंस्कारे क्षताद् रक्षा विवक्षिता।
स एवाऽर्थश्च मन्त्रस्य पदैरत्राऽभिधीयते ॥१८॥

अथ कर्मकाण्डप्रधाने यजुर्वेदे अश्वमेधादियज्ञेषु पशुहिंसा न विहितेति प्रतिपाद्यते—

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अनुवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥"
उपक्रमे[1] पशून् पाहि, बह्वीः स्यातेति योऽब्रवीत्।
मध्ये मध्ये तदभ्यासं[2] 'मा हिंसी' रिति चाकरोत् ॥१९॥

---

१. इषे त्वोर्जे त्वा···आप्यायध्वमघ्न्या इन्द्राय भागं, प्रजावतीरनमीवा, अयक्ष्मा, मा वस्तेन ईशत, माऽघशंसो, ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि ॥ यजु० अ० १। मं० १॥ अघ्न्याः अहन्तव्याः।

२. क—वातस्य जूतिं······हरिम् (अश्वम्) अद्रिबुध्नमग्ने मा हिंसीः परमे व्योमन्०॥ यजु० अ० १३। मं० ४२।

ख—अजस्रमिन्दुं···—'स पर्वभिर्ऋतुशः कल्पमानो गां मा हिंसीरदितिं विराजम्॥ यजु० अ० १३, मं० ४३।

ग—वरुत्रीं त्वष्टुर्वरुणस्य ···। अग्ने मा हिंसीः परमे व्योमन्।
यजु० अ० १३, मं० ४४।

घ—इमं मा हिंसीर्द्विपादं पशुं सहस्राक्षो मेधाय चीयमानः·······।
यजु० अ० १३, मं० ४७।

ङ—इमं मा हिंसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु।
यजु० अ० १३, मं० ४८।

च—अग्निः पशुरासीत्तेनाऽयजन्त, स एतं लोकमजयत् यस्मिन्नग्निः, स ते लोको भविष्यति, तज्जेष्यति, पिबैता अपः। वायुः पशुरासीत्तेनाऽयजन्त ······। सूर्यः पशुरासीत् तेनाऽयजन्त·······।" यजु० अ० २३, मं० १७।

"यस्तु सर्वाणि भूतान्यात्मन्येवाऽनु[1] पश्यति।
सर्वभूतेषु[2] चात्मानं ततो न विचिकित्सति॥
यजु० अ० ४०, मं० ६॥

यस्मिन्त्सर्वाणि[3] भूतान्यात्मैवाऽभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥
यजु० अ० ४०, मं० ७॥

असुर्या नाम ते लोका अन्धेन तमसावृताः।
ताँस्ते प्रेत्याऽभिगच्छन्ति ये के चात्महनो जनाः[4]॥
यजु० अ० ४०, मं० ३॥

वेदाऽहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वा अतिमृत्युमेति,
नाऽन्यः पन्था विद्यतेऽयनाय॥
यजु० अ० ३१, मं० १८॥

---

१--२. यो याथार्थ्यवित् सर्वभूतानि प्राणिन आत्मनि परमात्मनि स्थितानीति, सर्वेषु च प्राणिषु चात्मानं स्वसदृशं जीवं परमात्मानं वा विद्यमानं जानाति स न विचिकित्सति यज्ञेषु पशवो हन्तव्या न वेति संशयापन्नो न भवति।

३. तत्त्वज्ञानाऽभ्यासात् यस्य विजानतो याथार्थ्यविदः कृते सर्वाणि भूतानि आत्मैवाऽभूद् आत्मवदेव स्वसदृश एव भवति, सर्वप्राणिषु एकत्वं पश्यतः तस्य कः शोकः को मोहः? स्वर्गादौ निःस्पृहस्य तस्य हिंसाविरहितेषु पाकयज्ञादिष्वपि नाऽऽस्थाऽवशिष्यते, किमु हिंसात्मकेषु अर्वाचीनैः प्रकल्पितेषु पशुयागेषु। तदुक्तम्—सांख्यकारिकासु—'स ह्यविशुद्धिक्षयातिशययुक्तः'। तथा मुण्डकोपनिषदि—प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवाऽपियन्ति। तदेतत् सत्यं—मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा संततानि अर्थात् पुरातानि नासन्॥ प्रथमे मुण्डके द्वितीये खण्डे ७, १॥

४. आत्मन अन्तःकरणस्य आदेशं ये घ्नन्ति न शृण्वन्ति ते आत्महनः। अथवा—आत्मा तु अमरोऽस्ति तस्य हननाऽसंभवाद् इह आत्मपदेन आत्मवान्

प्राणी, आत्माधिष्ठानं तच्छरीरं वा गृह्यते, तस्माद् ये यज्ञेषु पशुहिंसां विदधति तेप्यात्महनः। यस्मिन् वेदे न केवलं मानवं प्रति किन्तु भूतमात्रं प्रति मित्रत्वभावनोपदिष्टा स यज्ञेषु पशुवधं कथमनुजानातु ? तदुक्तम्—"दृते दृꣳह, मा मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्। मित्रस्याऽहं चक्षुषा सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा समीक्षामहे ।। यजु० अ० ३६, मं० १८।

ननु चूडाकर्मसंस्कारे विनियुक्तस्य ओषधे त्रायस्वैनम्, स्वधिते मैनं हिंसीरिति मन्त्रस्य व्याख्यायां भवतु स्वधिति पदस्य स्वधितिहस्ते नापिते लक्षणा, मा हिंसीरिति पदयोश्च न मुख्यार्थबाधः। यजुर्वेदस्य षष्ठाऽध्याये सविस्तरं यज्ञियपशोः बन्धनप्रोक्षणसंज्ञपनादिवर्णनविषयकेषु मन्त्रेषु का गतिरिति चेत् ? उच्यते—देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। अग्नीषोमाभ्यां जुष्टं नियुनज्मि। अद्भ्यस्त्वौषधीभ्योऽनु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनुसखा सयूथ्यः। अग्नीषोमाभ्यां जुष्टं प्रोक्षामि। यजु० अ० ६, मं० ९ ।। माऽहिर्भूर्मा पृदाकु नमस्त आतान अनर्वा प्रेहि। घृतस्य कुल्या उप ऋतस्य पथ्या अनु। यजु० अ० ३। मं० १२ ।।" "वाचं ते शुन्धामि प्राणं ते शुन्धामि, चक्षुस्ते शुन्धामि, श्रोत्रं ते शुन्धामि, नाभिं ते शुन्धामि, मेढ्रं ते शुन्धामि, पायुं ते शुन्धामि, चरित्राँस्ते शुन्धामि ।।" यजु० अ० ६। मं० १४ ।। "मनस्त आप्यायताम्, वाक्त आप्यायताम्, प्राणस्त आप्यायताम्, चक्षुस्त आप्यायताम्, श्रोत्रं त आप्यायताम्। यत्त क्रूरं यदास्थितम्, तत्त आप्यायताम्, निष्ट्यायतां तत्ते शुध्यतु, शमहोभ्यः। ओषधे त्रायस्व, स्वधिते मैनं हिंसीः ।।" यजु० अ० ६। मं० १५ ।। इति

एषूद्धृतेषु प्रथममन्त्रस्य देवस्य त्वा सवितुरित्यादेः देवता—सविता। ऋषिः—दीर्घतमाः। छन्दः—प्राजापत्या बृहती पंक्तिः। मन्त्रेऽस्मिन्—विधिवदुपनीतं ब्रह्मचारिणं प्रति आचार्यस्य वचनम्। "वत्स ! सवितुः सर्वप्रेरकस्य सर्वोत्पादकस्य वा भगवतः प्रसवे आदेशे स्थितोऽहम् अश्विनोः देवानां भिषजोः नासत्ययोः नासायां भवयोः प्राणाऽपानयोर्बाहुभ्यां प्रच्छर्दनविधारणरूपाभ्यामजुष्टम्। "नासत्यावश्विनौदस्रावाश्विनेयौचताबुभौ" इत्यमरः। पूष्णः पोषकस्य तेजस्वित्वहेतोः ब्रह्मचर्यव्रतस्य हस्ताभ्यां दीर्घायुष्ट्वाऽऽरोग्यरूपाभ्यामथवा शारीरिकमानसिकबलाभ्यां युक्तं त्वां व्रतपालने नियुनज्मि नियोजयामि। किं च, अग्नीषोमाभ्यां जुष्टं सेवितं त्वां शिष्यत्वेनाङ्गीकरोमि। कठिनं तपोमयं द्वन्द्वं सहिष्णुजीवनम् अग्निः, गुरूणां स्नेहमयो व्यवहारः सोमः। अथवा शिष्यस्य

विनयसोम्यतादयो गुणा एव सोमः। तावग्नीषोमौ। देवता द्वन्द्वे च (पाणि० ६।३।२७) इति सूत्रेण देवताद्वन्द्वे अग्नेरीकाराऽऽदेशः। अग्नेः स्तुतस्तोमसोमाः (पाणि० ८।३।८२) इत्यनेन सूत्रेण सोम इत्यस्य षत्वम्। कुतस्त्वां व्रतपालने नियुनज्मि ? अद्भ्यत्वौषधीभ्यस्त्वां जलानिलाऽनलादिविषयकयावन्मात्रज्ञानोपलब्धये ओषध्यादिविषयक सर्वज्ञानोपार्जनाय चेति। अथवा इतः परम् आव्रतपूरणं तवाऽन्नपानाच्छादनादीनां सर्वा व्यवस्था ममाधीना। त्वं सकलचिन्तोन्मुक्तः सरस्वतीसमाराधनसक्तो भव। अस्मिन् कर्मणि च तव सर्वे स्वजना जननीजनकसहोदरसुहृदादयः सर्वेऽपि दत्तानुमतयो भवेयुः। एवं तैः दत्तानुमतिरहं पूर्वोक्ताभ्यामग्नीषोमाभ्यां जुष्टं प्रोक्षामि सर्वात्मना शुद्धं करोमि। शुद्धिः च पवित्रता। तदुक्तम्—अद्भिर्गात्राणि शुध्यन्ति, मनः सत्येन शुध्यति। विद्यातपोभ्यां भूतात्मा, बुद्धिर्ज्ञानेन शुध्यति॥ मनु ५। १०९

अथ द्वादशो मन्त्रः—"माऽहिर्भूर्मा पृदाकुरित्यादिः—देवता—विद्वांसः, आचार्यादयः। ऋषिर्मेधातिथिः। छन्दः—भुरिक् प्राजापत्यानुष्टुप्। इहाचार्यो ब्रह्मचारिणमुपदिशति। वत्स ! व्रतग्रहणाऽनन्तरम् इतः परं त्वम् अहिरिव कुटिलगतिको मा भूः। पृदाकुः पृदाकुवद् व्याघ्रादिवत् क्रूरो मा भूः। "पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमान्" इति मेदिनी। अत्र अहिपृदाकुपदयोर्गौणीलक्षणा। अहिपृदाकुशब्दौ स्वमुख्यमर्थं सर्पव्याघ्रादिरूपं सर्वथा परित्यज्य तत्सदृशकुटिलक्रूरादिरूपमर्थं लक्षयतः। तदतिशयद्योतनं प्रयोजनम्। नमस्ते आतान, आतन्यते विस्तार्यते इत्यातानो यज्ञः। तत्सम्बुद्धौ हे आतान ! यज्ञव्यापारस्य चेतनप्राणिवत् सम्बोधनं न संभवतीति, तेन यज्ञमयं जीवनं यस्य स पुरुषोऽपि यज्ञः तत्सम्बुद्धौ पदमिदम्। इह यज्ञस्य तत्सदृशपावनजीवनमतः पुरुषस्य अभेदप्रतिपादनादतिशयोक्तिः। अनर्वा अर्वतिर्हिंसा कर्मा। तत्कर्ता न भवतीत्यनर्वा। अहिंसकः सर्वप्रियस्त्वम्। घृतस्य कुल्या धाराः सात्विक भोज्यजातस्य ज्ञानस्य शुद्धजलादेश्च प्राचुर्यम् उप प्रेहि प्राप्नुहि। "ऋतमुञ्छशिले जले" इति मेदिनी। अथवा—अर्वा अश्वः, सोऽस्य नास्तीत्यनर्वा। ब्रह्मचारिणोऽश्वादिवाहनारोहणनिषेधात्।

अथ चतुर्दशो मन्त्रः—"वाचं ते शुन्धामित्यादिः—देवता—विद्वांसः। ऋषिः—मेधातिथिः। छन्दः—भूरिगार्षीजगती। आचार्यः पुनः स्वान्तेवासिनं ब्रूते। आचार्यः—आचिनोति शास्त्रार्थानाचारे स्थापयत्यपि। स्वयमाचरते यस्मात्तस्मादाचार्य उच्यते। वत्स, अहं तव ज्ञानेन्द्रियपञ्चकं

कर्मेन्द्रियपञ्चकम् एकादशं मनश्चेति सर्वं शुन्धामि, येन त्वं सत्कर्मस्वेव प्रवर्तेथाः नाऽसत्कर्मसु। मन्त्रस्यास्य देवता आचार्यादयो ब्रह्मचारिणश्चरित्रनिर्माणमाचरन्ति तेषां चित्तवृत्तिं कल्याणमार्गप्रवणां च विदधति। ननु ऋत्विङ् नामधेयास्ते निर्घृणा याजका ये सैनिका इव वराकं पशुं यूपे निबध्य विशस्य च तस्य प्रत्यङ्गं जलेन प्रक्षाल्य महताऽऽडम्बरेण जातवेदसि हुत्वाऽवशिष्टं मिथो विभज्य उदरस्थं कुर्वते। एषां मन्त्राणां पशुहिंसापरकां व्याख्यां कुर्वतां महीधरप्रभृतीनां पण्डितानां तैः कृतां व्याख्यामनुमोदमानानामन्येषां मनीषिणां च कीदृशोऽयं बुद्धिव्यामोहोऽजायतेति नास्माकं मतिर्निश्चेतुं शक्नोति। मन्त्रोऽयमतिसरलार्थत्वान्निगद व्याख्यातः। अस्य वाच्यार्थस्यैवोपपद्यमानत्वान्न लक्षणाया अपेक्षा। तथाहि—आचार्यो ब्रह्मचारिणं वदति—वत्स, अहं ते वाचं शुन्धामि सर्वप्रथमं वर्णोच्चारणस्य शुद्धशिक्षया तवोच्चारणं परिष्करोमि। प्राणांस्ते शुन्धामि प्राणायामाभ्यासेन प्राणांस्ते नियमे स्थापयामि। चक्षुरित्यादिभिः पदैः मनसा सह तव ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च पवित्राणि सन्मार्गगामीनि च विदधामि। पञ्चदशो मन्त्रः—'मनस्त आप्यायतामित्यादि॰ पूर्वोक्तरीत्या साधनायां कृतायाम्, हे वत्स! तव मनो मनसो मननशक्तिराप्यायतां परिपुष्टा भवतु। तव प्राणशक्तिः परिपुष्टा भवतु। तव चक्षुःश्रोत्रादीनां ज्ञानेन्द्रियाणां सामर्थ्यं सततमेधताम्। तव स्वभावे प्रकृतौ वा यत् किंचित् क्रूरं पाशवं तत्त्वम्, यत् आस्थितं यत् किमप्यनिष्टम् अवाञ्छितं वा बद्धमूलमस्ति तत् संहतं प्ररूढं भवतु। 'स्त्यै ष्टयै संघाते' इति धातो रूपम्। तदुक्तमन्यत्र—यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वाति तृण्णं बृहस्पतिर्मे तद् दधातु॥ यजु॰ अ॰ ३६। मं॰ २॥ तव जीवनस्य अहोभ्यो दिनेभ्यः, दिनपदमिह रात्रेरप्युपलक्षणम्। शं भवतु। तव सर्वकालाय शं कल्याणं भूयात्। हे ओषधे! अस्माकं शरीरस्य मनसो वा रोगाणां भेषजभूते शिक्षे एनं मम शिष्यं सर्वदुष्कृत्येभ्यस्त्रायस्व। यद्वा ओषधिपदेन जीवनयात्रार्थं सेव्यमानानाम् अन्नफलादीनामेव ग्रहणं कर्तव्यम्। हे स्वधिते! बहिः शस्त्रवत् कठोरगुरोः कदाचिन्प्रमादात् कृतापराधेऽस्मिन् भर्त्सनं ताडनं वा कुर्वन् मैनं हिंसीः। तदुक्तं भामिनीविलासे—उपरि करवालधाराक्रूराभुजङ्गमपुङ्गवात्। अन्तःसाक्षाद्द्राक्षादीक्षागुरवो जयन्ति केपि जनाः॥ अन्योक्त्युल्लासे १३। अस्मिन् बालके स्थितं पशुभावं जहि, न त्वेनमेव। मृतस्य पशोः वागादीनां प्रोक्षणाप्यायनादिकं बाधितम्। जीवति ब्रह्मचारिणि तु तदङ्गानामिन्द्रियाणां तच्छक्तीनां च परिष्करणाप्यायनादिकं सर्वमुपपन्नम्। अतो मुख्यार्थबाधाऽभावेऽत्र न लक्षणाया

विद्यां चाऽविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥
यजु० अ० ४०, मं० १४॥

अर्थात् अविद्याऽवबोधजन्येन अपूर्वेण मृत्यौ तीर्णे विद्याजन्येनाऽपूर्वेण अमृतमश्नुते। द्विर्बद्धं सुबद्धं भवतीति प्रकारान्तरेण द्विरुक्तिः॥

इत्यादिभिश्च यो मन्त्रैरुपसंहृतवान् यजुः।
यज्ञे भगवतस्तस्य हिंसाऽभीष्टा कथं भवेत्? ॥२०॥

निरीहान् प्राणिनो मूकान् बध्वा यूपेषु निर्ममम्।
निहत्य भक्षणं तेषामुपहासोऽध्वरस्य सः ॥२१॥

निबध्य रज्जुभिर्यस्मिन् बध्यन्ते पशवोऽध्वरे।
स हि काष्ठमयः स्तम्भो न यूपो वेदसंमतः ॥२२॥

किन्तु—

अत्र प्रवर्तते यज्ञः इति सूचयितुं जनान्।
केतुरुन्नीयतेऽत्युच्चः पुण्यः स यूप[1] उच्यते ॥२३॥

ये सरीसृपसिंहाद्या, ये चाऽन्यायपरायणाः।
बलात् परस्वहर्तारो ये दुष्टाश्चाततायिनः ॥२४॥

---

अवकाशः। तदुक्तम्—मुख्यार्थबाधे तद्योगे ययाऽन्योऽर्थः प्रतीयते। रूढेः प्रयोजनाद् वा स लक्षणाशक्तिरर्पिता॥ सा०दर्प०, परि०२। किं च नवममन्त्रे बध्यमानं पशुं यद् आह तव माता पिता इतरे बन्धवश्च तव वधाय अनुमन्यन्ताम् इति। वराकस्य पशोः के बन्धवस्तत्रोपस्थिताः कथं च ते स्वानुमतिं प्रकाशयेयुरिति सर्वमसमञ्जसमेव॥

१. (क) युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः।
तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः॥
ऋ० मं० ३। सू०८। मं० ४॥

(ख) आदित्या रुद्रा वसवः सुनीथा द्यावाक्षामा पृथिवी अन्तरिक्षम्।
सजोषसो यज्ञमवन्तु देवा ऊर्ध्वं कृण्वन्त्वध्वरस्य केतुम्॥
ऋ० मं० ३। सू० ८। मं० ८॥

शासनेन निगृह्यास्ते दण्ड्या न्यायाधिकारिभिः ।
तद्धिसा वैदिकी[1] हिंसा सा च वेदाऽनुमोदिता ॥२५॥

---

१. ननु वैदिकी हिंसा हिंसा न भवति । तदुक्तं मनुना—यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा । यज्ञस्य भूत्यै सर्वस्य तस्माद् यज्ञे वधोऽवधः ॥ मनुस्मृ० अ० ५ । श्लो० ३९ ॥ तस्मादश्वमेधादियज्ञेषु पशूनां हिंसा न प्रतिषिद्धा इति चेत् ? स्मृतेः श्रुतिर्बलीयसी । तस्माद् यज्ञेषु पशुबलिप्रतिषेधपरकेषु मन्त्रेषु जाग्रत्सु तद्विरुद्धा स्मृतिर्हीनबला । किं च हिंसा समर्थकानि स्मृतिवाक्यानि तुल्यबलैरधिकबलैर्वाऽपरैः स्मृतिवाक्यैः "योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया । स जीवंश्च मृतश्चैव न क्वचित् सुखमेधते ॥" मनु० अ० ५ । श्लो० ४५ ॥ "नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् । न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥ मनु० अ० ५ । श्लो० ४८ ॥" इत्यादिभिर्निरस्यन्ते । तथा "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति विधिवचने जागरूके "औदुम्बरी सर्वा वेष्टयितव्या" इति विधिवाक्याभासस्य लोभमूलकत्वकल्पनादप्रामाण्यमिति जैमिनिन्यायमालायां स्पष्टम् । अस्तु वा वैदिकी हिंसा अहिंसा । किन्तु का खलु वैदिकी हिंसा ? इत्यपि निर्णेतव्यम् । उच्यते—(क) वि न इन्द्र मृधो जहि, नीचा यच्छ पृतन्यतः । यो अस्माँ अभिदासत्यधरं गमया तमः ॥" यजु० अ० ८ । मं० ४४ । ऋग्० मं० १० । सू० १५२ । मं० ४ ॥ अथर्व० कां० १ । सू० २१ । मं० २ ॥ साम० १८६८ ॥ (ख) "इन्द्र जहि पुमांसं यातुधानमुत स्त्रियं मायया शाशदानाम् । विग्रीवासो मूरदेवा ऋदन्तु मा ते दृशन् सूर्यमुच्चरन्तम् ॥" अथर्व० कां० ८ । सू० ४ । मं० २४ ॥ तथा-आततायिनमायान्तं हन्यादेवाऽविचारयन् । स्त्रियं वा बालवृद्धं वा ब्राह्मणं वा बहुश्रुतम् ॥ आततायी तु—अग्निदो गरदश्चैव शस्त्रोन्मत्तो धनाऽपहः । क्षेत्रदारहरश्चैतान् षड् विद्यादाततायिनः ॥ एवं हिंस्राः प्राणिनः सिंहसरीसृपादयो दस्यवो देशधर्मद्रोहिणः परद्रव्यापहारकाश्चौराद्या राजपुरुषैर्निगृह्या न्यायाधिकारिभिश्च यथाऽपराधं दण्डनीयाः । वैदेशिका आक्रान्तारः समरे हन्तव्याः ।

ननु 'अपवादैरुत्सर्गा बाध्यन्ते' इति न्यायेन "मा हिंसीः" इत्यादय उत्सर्गा "अग्नीषोमीयं पशुमालभेत" "वायव्यं श्वेतमालभेत भूतिकामः ।" इत्यादिभिरपवादैर्बाध्यन्ते, इति चेत् न । "यज्ञेषु अश्वादीनां वधः समुचितो बध्यत्वात् सिंहादिवधवत् ।" इति तु न वक्तव्यम् । अत्र प्रतिषिद्धत्वमुपाधिः । सत्युपाधौ व्याप्तिग्रहाऽसंभवात् । किं च श्रुत्युक्ता उत्सर्गा ब्रह्मणोक्तैरपवादैर्न

कर्तव्यपालनधिया समरेषु हिंसा-
या क्षत्रियैर्जनहिताय विधीयतेऽत्र ।
दोषो न तत्र नृपतेः, स तु राजधर्म-
स्तस्मिन् कृता तु करुणा सुमहाननर्थः ॥२६॥

शत्रोर्वधाय विहितस्य रणस्य पापो-
च्छेदाय योऽल्पमतिभिर्विहितोऽश्वमेधः ।
स्नातस्य गाङ्गसलिलैरमलैर्नितान्तं
पङ्कानुलेपनविधिः कुधियः स गात्रे ॥२७॥

यो मङ्गलाय नृपतेः शुभलक्षणैश्च
यो भूभृतोऽखिलजगद्विजयस्वरूपः ।
तस्याऽध्वरे विशसनं हि निरागसोऽपि
पापाय केवलमहो न तु तन्निवृत्यै ॥२८॥

अर्वाग्भवैस्तु कुटिलैरनधीतशास्त्रै-
राज्ञां धनापहरणाय कृतप्रपञ्चैः ।
स्त्रीमद्यमांसरुचिभिर्विपरीतमार्गो-
ऽयं वञ्चनाय रचितो नवयज्ञ नामा ॥२९॥

अथाऽश्वमेधविमर्शः—

अथाऽश्वमेधमन्त्रेषु गतिः स्यात् केति चेद्भवेत् ।
प्राप्तत्वात् तत्प्रसङ्गस्य किंचिदत्र विचार्यते ॥३०॥

रहस्य भूतोपनिषद् दुर्ज्ञेया मन्दबुद्धिभिः ।
तत्रोक्तगूढवाक्यस्य व्याख्यायै लक्षणेष्यते ॥३१॥

उषा ह वा शिरोऽश्वस्य मेध्यस्येति स्फुटं वचः ।
महर्षेर्याज्ञवल्क्यस्य बृहदारण्यके खलु ॥३२॥

---

बाध्यन्ते, श्रुतेर्बलीयस्त्वात् । तथा—"पञ्च पञ्चनखा भक्ष्याः" इत्यपि वचो न श्रद्धेयम् । पूर्वोदाहृतैर्मनुवचनैः प्रत्याख्यातत्वात् । किं च—मांसाशनप्रतिपादकेषु येषां रागद्वेषमोहादीनां पुरुषदोषाणां बलवती संभावना न सा—"वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः । यश्च मांसं न खादेत तयोस्तुल्यं फलं भवेत्" । इत्यादि मांसाशनप्रतिषेधप्रतिपादनपरेषु स्मृतिवचनेषु नेति पूर्वेषामपेक्षया उत्तरेषां ज्यायस्त्वात् ।

उषाः[1] शिरो यस्य हयस्य कस्तं
हन्यात्तु मेधस्य वधाऽर्थता चेत् ।
लक्ष्योऽत्र सूर्योऽश्वपदेन तस्मान्-
मेधश्च तस्योचितसंप्रयोगः ॥३३॥

सूर्योऽत्र कालः स हि कालकर्ता-
ऽहोरात्रभेदेन, स सप्तरश्मिः ।
हिरण्यशृङ्गश्च स एव हंसः
सोऽर्वा स चाऽऽदित्यपदाऽभिधेयः ॥३४॥

उषा हि दृश्यते सूर्योदयात् प्राक् शृङ्गवत् पशोः ।
उषा हिरण्मयं शृङ्गमादित्यः स्वर्णशृङ्गवान ॥३५॥

स्वर्णोज्ज्वलैर्दिवि हिरण्यमयशृङ्गरूपै-
र्नव्यांऽशुभिर्ननु रविर्हि हिरण्यशृङ्गः ।
मध्याह्नकालपतितैः प्रखरैर्मयूखैः
पश्चादयोमयपदोऽपि स एव चोक्तः ॥३६॥

अयोमयास्तच्चरणास्तमिन्द्र
एवाऽध्यतिष्ठत् प्रथमः प्रबुद्धः ।
इन्द्रो हि तेजस्वितमो नराणां
तं प्राप्तकालः प्रथमं प्रयुङ्क्ते ॥३७॥

---

१. उषा ह वा अश्वस्य मेध्यस्य (अश्वमेधयज्ञे प्रयुज्यमानस्य पवित्रस्य) वाऽशिरः । सूर्यश्चक्षुः, वातः प्राणः, व्यात्तम् (विवृतं वदनम्) मुखम्, अग्निर्वैश्वानरः, संवत्सरः (कालरूपः) आत्मा अश्वस्य मेध्यस्य । द्यौः पृष्ठम्, अन्तरिक्षमुदरम्, पृथिवी पाजस्यम् (पादरक्षणस्थानम्) दिशः पार्श्वे (देहस्य दक्षिणवामभागौ) अवान्तरदिशः पर्शवः, ऋतवोऽङ्गानि, मासाश्चाऽर्धमासाश्च पर्वाणि (अङ्गसन्धयः) अहोरात्राणि प्रतिष्ठा, नक्षत्राण्यस्थीनि, नभो मांसानि, ऊवध्यम् (आमाशयस्थमजीर्णमन्नम्) सिकताः सिन्धवः गुदाः, यकृच्च क्लोमानश्च पर्वताः, ओषधयश्च वनस्पतयो लोमानि, उद्यन् पूर्वार्धः, निम्लोचनम् (अस्तगन्) जघनार्धः, यद् विजृम्भते तद्विद्योतते, यद् विधूनुते तत् स्तनयति (गर्जति) यन्मेहति तद्वर्षति, वागेषाऽस्य वागिति ॥" बृहदारण्यकोपनिषदि (१।१।१) ।

उषा शिरो यस्य हयस्य तादृक्
पशुर्न कश्चिन्न च सोऽस्ति बध्यः ।
योग्यस्य योग्येऽवसरे विधानं
कार्यस्य तस्मादिह लक्षितोऽर्थः ॥३८॥

अथवा वाजिनो वाचा मिनास्ते वाग्मिनो[1] बुधाः ।
ऋतज्ञा[2] अमृता[3] विप्रा भागभाजोऽध्वरेषु च ॥३९॥
विशेषणानि नैतानि संगतानि पशौ हये ।
सत्सङ्गस्तादृशैः सद्भिरश्वमेधोऽयमादिमः ॥४०॥

सदा सदाचारपरायणा[4] ये
शूरा नयज्ञा अथ देशभक्ताः ।
वादेन गूढार्थविनिश्चयाय
तत्सङ्गमो यज्ञपदाऽभिधेयः ॥४१॥

---

१. उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु ।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥
ऋ० मं० १० । सू० ७१ । मं० ५॥

वाजिनो वाग्मिनो विद्वांस इति श्रीसायणः ।

२, ३, ४. वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥
यजु० अ० २१ । मं० ११ ॥

स्वयं वाजिन् तन्वं कल्पयस्व, स्वयं यजस्व, स्वयं जुषस्व ।
महिमा तेऽन्येन न सन्नशे ॥ यजु० अ० २३ । मं० १५ ॥

एतानि विशेषणानि पशुमात्रे अश्वे बाधितानि विड्वर्गम्, क्षत्रम्, राजसभा-सदस्यगणादिकं वा लक्षयन्ति ।

शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद् युयवन्नमीवाः ॥
यजु० अ० ९ । मं० १६ ॥

हवेषु=आह्वानेषु रणाय विचारणाय वा । मितद्रवः—नियतगतयः सदाचारिणः, न तु उच्छृङ्खलाः । देवताती युद्धे यज्ञे वा । अथवा सभा-समितिषु । रक्षांसि—रक्ष्यते येभ्यस्तानि । स्वर्काः स्वञ्चनाः पूजनीयाः पूज्यानां

वाजिशब्दस्य सामान्यस्तृतीयार्थो हयो मतः ।
संग्रामो वाजिसेनानामश्वमेधस्तृतीयकः ॥४२॥

महीधराऽऽद्या इतरेऽश्वमेध-
यज्ञस्य तत्त्वं न धिया स्पृशन्तः ।
यदाऽलिखंस्तत्पठतोऽपि पुंसो
मतिर्मुहुर्ग्लायति लज्जते च ॥४३॥

राज्ञीनां शयनं[1] हयेन पशुना को बुद्धिमान् कल्पयेत्
पश्चात्तद्धननं नितान्तघृणितम्, तच्चर्मणश्छेदनम् ।

---

पूजका वा । एतानि विशेषणान्यपि पशौ बाधितार्थानि विदुषो ब्राह्मणान् वीरान् क्षत्रियान् सभासु वादकोविदान् लक्षयन्ति ।

१. 'गणानां त्वा गणपतिं हवामहे, प्रियाणां त्वा प्रियपतिं हवामहे ।
निधीनां त्वा निधिपतिं हवामहे वसो मम ।
आहमजानि गर्भधम्, आत्वमजासि गर्भधम् ॥"
यजु० अ० २३ । मं० १९ ॥

देवता–राजा च प्रजा च । मन्त्रस्याऽस्य उव्वटकृता व्याख्या–(राज)पत्न्यः त्रिः परियन्त्यश्वम् । एवमेव । प्रियाणां मनुष्याणां मध्ये त्वामेव (अश्वमेव)प्रियपतिं प्रियभर्तारं हवामहे ···। हे वसो ! अश्व मम त्वं हि पतिर्भूया इति । महिषी (राजमहिषी यजमानपत्नी वा) अश्वमुपसंविशति । इत्यादिकं सर्वं नितरामश्लीलं पातिव्रत्यविपरीतं च । ऋषिदयानन्दस्तु–हे जगदीश्वर (राजन् वा) प्रजागणानां गणपतिं त्वां हवामहे प्रभुत्वेन स्वीकुर्मः । प्रियाणां मध्येऽतिप्रियं सर्वेषां पालकं त्वां हवामहे स्तुमः । निधीनां विद्यादीनां धनधान्यानां च रक्षकं त्वां शरणं प्राप्नुमः । वसो सर्वेषामावासक प्रभो मम न्यायकर्ता भव । गर्भधं सकलविश्वमात्मनि गर्भमिव दधानं त्वामहम् अजानि प्राप्नुयाम् । अज गतिक्षेपणयोः । अथवा न जायते इति अजः जन्ममरणरहितः त्वमसि । अजोऽसीति वक्तव्ये अजासीति छान्दसम्* । सकलविश्वं स्वात्मनि दधानां प्रकृतिमपि यः स्वगर्भमिव दधाति तं गर्भधम् अहम् अजानि प्राप्नुयां जानीयां वा ।

[ * मन्त्रे 'अजासिं' इति क्रियापदं सर्वंनिघातात्, यथा 'अजानि' पदम् । यु० मी० ]

"ता उभौ चतुरः पदः संप्रसारयाव, स्वर्गे लोके प्रोर्णुवाथाम् ।

एतन्निन्दितकर्म कर्मकुशलो वेदोदितं को वदेत्
देशे नाशपरायणे सति मतिः प्राक्प्राणिनां नश्यति।४४।

अथ गोमेधः—

"गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् ।
स्त्री सौरभेयी दृग्बाणदिग्भूष्वप्सु भूम्नि च ।।
गायत्र्यामपि गम्भीरे जगत्यां भुवने जले ।
गो गणेशे च नाके च वियत्यपि पुमानयम् ।।इति मेदिनी

ब्रह्मचर्याऽऽश्रमे विद्याग्रहणं विधिवद् गुरोः ।
प्रभावोत्पादकं राजसभादौ भाषणं तथा ।।४५।।

भूकर्षणेन विधिवदन्नाद्युत्पादनं तथा ।
एतत् त्रयं हि गोमेधपदस्यार्थो न गोवधः ।।४६।।

श्रुतेरुपेक्ष्य याथार्थ्यमश्वमेधादिनामभिः ।
कलिकाले समारब्धं करालं वाममार्गिभिः ।।४७।।

बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति ।
उव्वटादिकृता वेदव्याख्या तस्य निदर्शनम् ।।४८।।

उपाकृतः पशुर्यज्ञे स्वर्गं यद्युपगच्छति ।
ऋत्विग्भिः स्वजनेष्वेव सा कृपा क्रियते न किम् ? ।।४९।।

निहतस्य पशोर्यज्ञे स्वर्गलाभो यदि ध्रुवा ।
ध्रुवं हित्वाऽध्रुवोऽध्वाऽन्यो यज्वभिः किन्तु गृह्यते ?।।५०।।

का माता, कः पिता, भ्राता, कोऽनुयूथ्यः सखाऽथवा ।
वराकस्य पशोर्हिंसाऽध्वरे 'येनाऽनुमन्यताम् ।।५१।।

---

वृषा वाजी रेतोधा रेतो दधातु ।। यजु० अ० २३ । मं० २० ।
देवता—राजप्रजे । ऋषिः—प्रजापतिः । छन्दः—स्वराडनुष्टुप् । उव्वटमहीधराभ्याम् अस्य मन्त्रस्य व्याख्या नितरां निर्लज्जतया यज्ञशालायां यजमानपत्नीनामश्वेन सह संभोगपरकाऽकारि साऽत्रानुवदितुं न शक्यते । ऋषिदयानन्दस्तु — "राजा च प्रजा च निश्चिनुतो यत् उभावावां चतुरः पदः धर्मार्थकाममोक्षरूपाणि चत्वारि पदानि प्रसारयावं त्रिलोकमिमं च स्वर्गोपमं सुखमयं करवाव । वृषा धर्मात्मा बलवान् वा शासकः प्रजासु रेतो वीर्यंबलं दधातु वर्धयतु ।।"

१. देवस्य त्वा सवितु ...... । अद्भ्यस्त्वौषधीभ्योऽनु त्वा माता मन्यताम्

संस्कारे पितृमेधे न पितॄणां क्रियते वधः ।
अश्वमेधादिशब्देषु कथं मेधो वधार्थकः ॥५२॥

सुरक्षितेषु गोष्ठेषु यद् गवां परिपालनम् ।
प्रजानां पोषणं शुद्धपयोदधिघृतादिभिः ॥५३॥

अतिथीनां च सत्कारो गोमेधो वैदिको मतः ।
न तु व्याजेन यज्ञानां[1] वधस्तासां सहस्रशः ॥५४॥

अद्य शासनतन्त्रेणाऽऽविष्कृतो नूतनो विधिः ।
यत्र सूनासु हन्यन्ते पशवो लक्षशोऽन्वहम् ॥५५॥

व्यापाराद्धनलाभाय चर्ममांसाऽस्थिमेदसाम् ।
वधान्निर्दोषजन्तूनामधिकं किन्नु पातकम् ॥५६॥

कालः पापमयो दूरे न ज्ञेयो दूरदर्शिभिः ।
व्यापाराय हनिष्यन्ते मानवैर्मानवा यदा ॥५७॥

निरन्तरमधोगामी प्रकृत्याऽध्वा तु पाप्मनः ।
सकृत्तत्र प्रवृत्तस्य मध्ये नाऽस्त्यवरोधनम् ॥५८॥

हिताय विकलाङ्गानामात्ममृत्योरनन्तरम् ।
समर्पणं निजाङ्गानां गोमेधोऽभिनवः शुभः ॥५९॥

ज्ञानकर्मन्द्रियाण्यस्मिन् यज्ञे गाव उदीरिताः ।
क्षतेन्द्रियाणां देहेषु तद्योगः परमः क्रतुः ॥६०॥

काष्ठां परामुपगते तु जगत्यनर्थे
वेदाऽनुयायिषु पतत्सु च वेदनाऽऽस्ये ।

---

अनुपिता अनुभ्राता सगर्भ्योऽनुसखा सयूथ्यः० ॥ यजु० ६ । मं० ९ ।

१. ऋग्वेदे गोवधनिषेधः—

माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः ।
प्र नु वोचं चिकितुषे जनाय, मा गामनागामदितिं वधिष्ट ॥

वचोविदं वाचमुदीरयन्तीं विश्वाभिर्धीभिरुपतिष्ठमानाम् ।
देवीं देवेभ्यः पर्येयुषीं गामा मावृक्त मर्त्यो दभ्रचेताः ॥

ऋ० मं० ८ । सू० १०१ । मं० १५,१६ ॥

धर्मं जने त्यजति लोभबलाच्छलाच्च
भूयो बभूव भगवान् करुणार्द्रचेताः ॥६१॥

स्मृत्वा [1]स्वकीयवचनं जगति प्रवृद्धेऽधर्मे,
क्वचित् सुचरिते च भयाद् विलीने ।
पापक्षयाय सुकृतस्य च रक्षणाया-
ऽत्मानं तदा भुवि तदर्थमहं सृजामि ॥६२॥

तस्यादेशादुदयमगमच्छ्रीदयानन्दनामा
निर्माणायाऽभिनवजगतो नैष्ठिकब्रह्मचारी ।
उच्छेदाय प्रबलतमसां मूर्तिमान् ज्ञानभानू
राशिः साक्षात् कठिनतपसां, वेदवक्ताऽद्वितीयः
॥६३॥

नूनं स भारतभुवः, सुधियां सतां च
पुण्यात्मनामविरतं तपसि स्थितानाम् ।
पूर्वाऽवशिष्टपरिणाम इवाऽऽविरासीद्
धर्मोच्चयो धृतवपुर्जगतो हिताय ॥६४॥

प्रादुर्बभूव भुवने स महानुभावस्
तस्य प्रभोर्भगवतः कृपया दयालुः ।
धर्माऽनुरागिवरगुर्जरवासिपुंसां
मर्त्यात्मना परिणतोऽद्भुतपुण्यपुञ्जः ॥६५॥

शास्त्राऽनुशीलननितान्तविशुद्धबुद्धि-
र्योगाङ्गसाधननिरस्तसमस्तदोषः ।

---

१. यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ भगवद्गीता
तत्पापाऽपनोदक्षमं कमपि महात्मानमहं सृजामि जगत्युत्पादयामीत्यर्थः ।
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ भगवद्गीता ।
संभवामि समर्थो भवामि ।

कर्मप्रपञ्चम्[1] इतिहासकथाश्च[2] मिथ्या
हित्वाऽकरोद् विशदयौगिकवेदभाष्यम् ॥६६॥
तत्त्वं श्रुतेरनवधार्य तथा महत्त्वं
दत्त्वा धिये सुरुचये गलहस्तिकां च ।
व्याख्याः श्रुतेरनधिकारिकृता निरस्य
तस्या मुखाच्चिरकलङ्कमपाचकार ॥६७॥
ये गोतमाऽत्रिजमदग्निवसिष्ठविश्वा-
मित्रादयः समभवन् परतः श्रुतीनाम् ।
तेषां कथा इतरभूमिभृतां च दान-
स्तुत्यादिवर्णनमसंगतमेव वेदे ॥६८॥
महर्षिणोन्मीलितदृष्टि-मुंशीरामो[3] महात्मा सुगृहीतनामा ।
वेदादिसच्छास्त्रपुनःप्रचारहेतोः प्रतिज्ञां कठिनामकार्षीत् ॥
६९॥
पञ्जाबार्यप्रतिनिधिसभायाः प्रधानोऽभिमानो-
यूनां, धीरः परमगरिमा, मूर्तिमान् वीरभावः ।
श्रीमान्जालन्धरनगरभूगौरवं, न्यायसत्यो-
त्साहः साक्षात्, स्थिरमतिदयोदारताऽऽवासभूमिः
॥७०॥
विशालशालोपमदिव्यदेहो
विशालवक्षाः सुविशालचेताः ।

---

१. पशुहिंसाप्रधानं कर्मकाण्डं प्रतिषिध्य, विश्वामित्रवसिष्ठादिविवाद-कथानकं कल्पितनृपाणां दानस्तुत्यादिकं त्रिवर्ज्यं अभिनवाऽपि प्राचीनतमपरम्परानुसारिणी यौगिकार्थप्रधाना व्याख्या व्यधायि ।

२. ये गोतमादयो यजुर्वेदे । अध्याये त्रयोदशे मन्त्रेषु ५४–५८ तमेषु शतपथब्राह्मणेषु च चक्षुरिन्द्रियादिरूपेण सप्तर्षित्वेन च वर्णिताः, न ते केचिदैतिहासिकाः पुरुषाः । (विशेष द्र० चतुर्थोन्मेषे पृष्ठ ९२) ।

३. महात्मविरुदः श्रीमुंशीरामो यः परस्ताद् गृहीतसन्यासः श्रीस्वामीश्रद्धानन्द इति नाम्ना ख्यातिमवाप्त् ।

शिवः सवर्णैश्चिरपीडितानां
त्राणाय मर्त्यत्वमिवाऽभिपन्नः ॥७१॥

एणीगणानजगरैरिव गीर्यमाणान्
आर्यान् विलोक्य सततं स विधर्मिवर्गैः ।
अन्तर्विदीर्णहृदयः परिरक्षणाय
तेषां निजपरिकरं सुदृढं बबन्ध ॥७२॥

येऽस्पृश्यतामज्ञजनैः सवर्णमन्यै-
र्बलात् पञ्चमतां च नीताः ।
संस्कृत्य यज्ञेऽधिकृतान् स्वतुल्यान्
भूयः सवर्णानकरोत् समस्तान् ॥७३॥

ततः—

यच्छान्ते, वन पर्वते परिवृते पुण्ये सरित्सङ्गमे,
दूरे दूषितमण्डलादपि पुरां विप्रो धिया जायते ।
तस्योत्पादनहेतवे समुचितो देशः क्व लभ्यो भवेत्,
त्रिंशद्रूप्यसहस्रकं धनमपीत्थासीत् स चिन्ताकुलः ।७४

किन्तु—

अब्धिर्गोष्पदतामुपैति, हिमवान् पाषाणखण्डायते,
सिंहव्याघ्रघनं वनं सुमनसामानन्दनं नन्दनम् ।
मृत्युर्जीवनतां प्रयाति कुसुमस्रक्तां फणी तक्षकः,
सत्त्वोत्साहधनस्य वर्त्म कठिनं केनाऽवरुद्धं क्वचित् ?
॥७५॥

इत्थंभूते व्यतिकरे । तदात्व एव—

शिवरुचिः शिवलालो वैश्यवंशावतंसो
व्रजनगरनिवासी, तस्य भार्याऽमृता च ।
सुतवरमलभेतां पूर्वपुण्यैरगण्यै-
रनघममनर्सिहं तातपादं मदीयम् ॥७६॥

वदान्यमान्याऽमनर्सिहसंज्ञाः स्वनामधन्या मम तातपादाः ।
निर्मूल्यमेवादिशताऽर्धभागं स्वग्रासभूमेः प्रथमं तदर्थम् ।७७।

सूच्यग्रमात्रमपि दित्सति नैव यस्या,
भूमेर्जनो जगति किं न करोत्यनर्थम् ।
अर्थस्य यस्य च कृते स्वजनान्निहत्य
तां तु व्यमुञ्चदचिरात् तृणवत् स धीमान् ॥७८॥

मूले हिमालयगिरेश्चरणैर्ऋषीणां
पूते च देवसरितः किल चारुकूले ।
सोऽस्थापयद् गुरुकुलं सह संस्कृतेन
ज्ञानस्य नूतनतमस्य च शिक्षणाय ॥७९॥

आचार्य एवाऽत्र पिता च माता
सुशिक्षका बन्धुजनाः परे च ।
तैः शिक्षकैः शिष्यजनस्य कश्चित्-
सम्बन्ध आसीन्मधुरोऽद्भुतश्च ॥८०॥

तादृग्विधे स्नेहमये पवित्रे
प्रसन्नवातावरणे विचित्रे ।
समुल्लसन्तः शिशवः कुमाराः
नैवाऽस्मरन् बन्धुजनं गृहं च ॥८१॥

विलोक्य चैतत् स्वयमेव पित्रो-
र्मनस्यकस्मादुदियाय बुद्धिः ।
एतादृशायाऽखिलमंगलाय
कुतो विधेयो न हि सर्वमेधः ॥८२॥

विचार्य पूर्वं च परं च सर्वं
सुनिश्चितो यः खलु दम्पतीभ्याम् ।
साप्ताहिकं यज्ञविधिं विधाय
स सर्वमेधो विधिवत् प्रपन्नः ॥८३॥

ग्रामस्य[1] शेषोऽप्यखिलाऽर्धभागो
महच्च हर्म्यं [2]बिजनौरसंस्थम् ।
लक्षाऽर्धकल्पैः सहरूप्यकैस्तत्
पूर्णाऽऽहुतौ सर्वमदायि ताभ्याम् ॥८४॥

---

१. बिजनौरमण्डले उपहरिद्वारं भागीरथीतीरे कांगड़ीग्रामः ।

२. उत्तरप्रदेशे बिजनौरनामकं नगरम् ।

एकां कुटीं तत्र विधाय लघ्वीं
निजेच्छयाऽकिंचनतां स वृत्वा ।
भवन् गृहस्थोऽपि विमुक्तसङ्गः
सन्यासिनां वृत्तिमवाप शान्तः ॥८५॥

तपोवनेऽस्मिन् नयनाऽभिरामे
महात्मनां पुण्यसुरक्षिते च ।
सरस्वतीसेवनतत्परेण
मया गुरुभ्यः किमु नोपलब्धम् ? ॥८६॥

धनप्रधानेऽपि करालकाले
कलौ विहाय स्वजनस्य चिन्ताम् ।
महर्षिकल्पैर्गुरुभिः कृतस्या-
ऽऽनृण्यं न सर्वस्वसमर्पणेन ॥८७॥

नवप्रभाते, दिवसे, निशायां
तथैव सायंसमयेऽप्यखिन्नाः ।
सदा सदुत्साहपदा उदाराः
श्रान्ताः कदाचिन्नहि पाठयन्तः ॥८८॥

शालग्रामाऽभिधानाः परमसहृदयाः काव्यसाहित्यमर्मा-
ऽभिज्ञा विद्यावताराः सुललित-कविता-कर्म-मर्म-प्रवीणाः ।
विस्मर्तव्याः कथं ते मम हृदि निहितं यैर्हि साहित्यबीजं
बाल्येऽप्येषोऽञ्जलिर्मे चरणकमलयोः स्वर्गिणामप्यमीषाम्
॥८९॥

शास्त्रे पाणिन्युपज्ञेऽप्रतिहतगतिकः पण्डितः श्रीकन्हैय्या-
लालो व्युत्पन्नबुद्धिर्विकसितवदनो वाक्पटुः क्वाऽप्यकुण्ठः ।
प्राप्तं यत् तस्मात् तनयवदमितं शब्दशास्त्रेण साकं
तन्मूल्यं नैव दातुं कथमपि सुशकं जन्मजन्मान्तरेषु ॥९०॥

श्रीविश्वनाथोपमविश्वनाथ-
पदारविन्दे भ्रमरत्वमाप्य ।
अपायि पीयूषभरः श्रुतेर्यैः
किं निष्क्रयस्तस्य कदापि शक्यः ? ॥९१॥

न भुव्यभावः श्रुतिवाचकानां
केचिच्च तत्स्थूलपदार्थविज्ञाः ।
निगूढवेदाऽर्थ-रहस्य-वेत्ता
श्रीविश्वनाथेन समस्तु नाऽन्यः ॥६२॥

भानौ लोकान्तरमुपगते मुद्रिता पद्मिनीव
यत्संपर्कादविकचवदना भारती भारतीया ।
कण्ठेऽकुण्ठा न्यवसदनिशं ब्राह्मणं ब्रह्मनिष्ठं
वन्दे द्वन्द्वपदकमलयोः सूर्यदेवं सदा तम् ॥६३॥

विशारदः शारदचन्द्रचारुः
सदा प्रसन्नः स्मितपूर्वभाषी ।
शालीनता मूर्तिरुदारकीर्तिः
स मे नमस्यो गुरुविष्णुमित्रः ॥६४॥

श्रीभीमसेनं विदुषां वरिष्ठं
नमामि चान्ते गुरुमन्त्रदं तम् ।
साहित्यमूर्ति कवितावतारं
समस्तशास्त्रेषु कृताऽधिकारम् ॥६५॥

वन्दे परेषामपि सद्गुरूणां
पदाम्बुजं ये मम ताततुल्याः ।
ब्रह्मा य एकाक्षरपाठकोऽपि
ये शास्त्रदाः कैव कथा तु तेषाम् ॥६६॥

श्रीनारायणदत्तशर्मतनुजं विद्वद्वरिष्ठं
ममज्येष्ठं भ्रातृसमं स्मरामि सुहृदं प्रेष्ठं प्रतिष्ठास्पदम् ।
यो वेदांश्चतुरोऽपि तीक्ष्णधिषणो व्याख्याय हिन्द्याम्
अनिन्द्योद्योगो जयदेव इत्यभिहितो भिन्नार्गलः स्वर्गतः॥६७॥

सातवलेकरकुलजो दामोदरभट्टसुतरत्नम् ।
जयति चतुर्वेदार्णवतरणिर्व्यासः कलौ काले ॥६८॥

यः श्रोत्रियः श्रुतिसमर्पितजीवनः
श्रीपादा[1]ऽभिधो विविधशास्त्ररहस्य वेत्ता ।

---

१. श्रीपाददामोदर-सातवलेकर इत्यर्थः ।

वेदाऽनुकूलचरितः खलु वेदमूर्ति-
ब्रंह्मर्षिभूयमनुभूय शतायुरासीत् ॥९९॥

उत्साहमन्दरममन्दमहर्निशं यः
स्वाध्याय-मण्डल-सुवासुकिनाऽभिवेष्ट्य ।
वेदोदधिं भवहिताय सुधाममथ्नात्
तस्मै नमोऽस्तु मम सातवलेकराय ॥१००॥

विश्वासोऽसौ मदीयः स्फुटमपि
लसतो लक्षणाव्यञ्जनाल-
ङ्कारादीन् प्रत्युपेक्षा व्यधित-
विपथगान् पण्डितान् सायणादीन् ।
आरम्भो मामकोऽयं प्रथित-
सुयशसां लाञ्छनाऽर्थं न तेषां
सन्तः पश्यन्तु किन्तु श्रुतिमपि
सरसां काव्यदृष्टयेति लक्ष्यम् ॥१०१॥

भानावस्तमिते, विधौ च विधुरे धाराधरैः सर्वतो
झञ्झावातपराहते च परितो दीपेऽपि निर्वापिते ॥
कान्तारे गहने घने च तमिरे पन्थानमन्विष्यतो ।
दिङ् निर्देशनमात्रमस्य कुरुते किं सौदामिनी ? ॥
॥१०२॥

वेदस्य साहित्यकलाकुमार्योद्वाहो मयाऽयं रचितो मनोज्ञः ।
विभावयन्तो गतमत्सरेण स्वान्तेन सन्तोऽस्य रसं पिबन्तु ॥
॥१०३॥

स्तोकं मेऽध्ययनं, मतिः परिमिताऽस्यां दिश्ययं चादिमो
यत्नो मे, पथदर्शको न सुलभो वेदार्णवो दुस्तरः ।
चापस्यं तु विचिन्त्य बाल्यसुलभमन्ये मनीषाधना
क्षंस्यन्ति स्खलितानि तानि कृपया सौजन्यधन्या जनाः ॥
॥१०४॥

# अथ मातृचरणानां पावनी स्मृतिः

माता कुले महति सर्वसुखेऽभिजाता
वंशे च तादृशि पतिं सदृशं प्रपन्ना ।
प्रेम्णा, गिरा, मधुरयाऽऽचरणेन सर्वान्
बालान् गुरून् प्रवयसोऽप्यकरोत् प्रसन्नान् ॥१॥

कान्ता लता कुसुमिताऽमितसौरभेणो-
द्यानं यथा सुषमयाऽभिनवं करोति ।
माता तथा मम, मनोहरया प्रकृत्या
पत्युर्गृहं सपदि नन्दनवच्चकार ॥२॥

अल्पीयसि व्यतिगते दुरदृष्टयोगात्
काले तु हन्त कठिने भिषजामसाध्ये ।
श्वासाऽऽमये कृतपदे वपुषि स्वभर्तुः
पीडामवाप परमां जननी मदीया ॥३॥

भवता प्रभोर्धृतिमतीश्वरदेव्यभिख्या
देवाधिदेवचरणाऽम्बुदत्तचिन्ता ।
भृत्येष्वनेकपरिचारपरेषु भर्त्तुः
सेवाव्रतं स्वयमुवाह दिवानिशं सा ॥४॥

कालक्रमेण परलोकगते तु पत्यौ
शोकाकुलेऽपि हृदयेऽनवधीर्य धैर्यम् ।
स्वल्पाऽशनाऽतिसरलाऽल्पपरिच्छदा च
वैधव्यधर्मपरिपालनतत्पराऽभूत् ॥५॥

मातेश्वरी मम निशम्य परार्तिवार्तां
याऽभूत् कथञ्चिदपि तां प्रतिकर्तुमार्ता ।
स्नेहाऽऽकुलं कुलजनं सकलं विहाय
स्वाध्यायतीर्थहरिकीर्तनतत्पराऽभूत् ॥६॥

यावज्जीवं परहितरता, सङ्गमे सज्जनानाम्
बद्धश्रद्धा प्रभुगुणगणान्नित्यमाकर्णयन्ती ।

दत्त्वा [1]'कन्यागुरुकुलकृते पञ्चमुद्रासहस्रं
स्वं सर्वस्वं व्यधित पतिवत् साऽपि तं सर्वमेधम् ।।७।।
श्रीमाता मे सुविदितकुले लब्धजन्मा,
तथोढा तादृश्येवामितगुणगणे चाग्रगण्या सतीनाम् ।
संत्साध्वीनां परमकठिनं जीवनं यापयन्ती
सत्यज्याऽस्मान् मिलितुमगमत् स्वं पतिं स्वर्गलोके ।।८

धन्यो वंशोऽलभत जननं तादृशी यत्र देवी
धन्यं गेहं सुभगमभवत् पावनैस्तच्चरित्रैः ।
मातृस्नेहं निरविशद् यो निर्विशङ्कस्तदङ्के
धन्यः सोऽहं जगती नितरामात्मजस्तज्जनन्याः ।।९।।

## समर्पणम्

यत्प्रेरणा वियति विद्युदिव स्फुरन्ती मे-
ऽङ्गेषु जीवनरणेऽनयदपग्रतो माम् ।
यस्या मुखे क्षणिकया स्मितरेखयाऽपि
नैराश्यसंशयनिशा अगमन् विनाशम् ।।१।।

यस्याः सुखं मम सुखं, मम दुःखचिन्ता
संभाविताऽपि विकलामकरोत् सदा याम् ।
याताऽसहायमिह मां करुणावती सा
सोढुं विहाय सकलं किल दुःखभारम् ।।२।।

यथा ज्वलन्ती कणशः प्रदीप-
शिखा निशान्ते प्रशमं प्रयाति ।
असाध्यरोगेण निगीर्यमाणां
तथाऽनिशं तां विवशः स्मरामि ।।३।।

---

१. देहरादूननगरस्थकन्यागुरुकुले एककन्याशिक्षणार्थंनियतं पञ्चसहस्ररूप्य-कराशिं स्थिरनिधिरूपेणादात् ।

कर्णे कर्णं, मम दृशि दृशं,
मानसे मानसं चे-
त्येकत्वार्थं विलयमनयन्
मय्यशेषात्मना या।
सा पञ्चत्वं ध्रुवमुपगता
हन्त दुर्दैवतोऽक्ष्णोर्
अद्यैकाऽपि व्रजति विषयं
नैव पाणौ गृहीता ॥४॥

नक्तं दिनं पुनरपीति चिरक्रमेण
पञ्चाधिकं द्विदशकसमयात् समानाम्।
अस्त्यद्य मानसमिदं स्मृतिमन्दिरं ते
स्थास्नु मे चिररुचा जरया च जीर्णम् ॥५॥

स्नेहार्चिषा ज्वलदनन्तशिखप्रदीपे
या पर्यपूजि सुमनोऽञ्जलिना हृदन्तः।
तां प्रेयसीं स्थिरयितुं भुवनेषु शश्वत्
सौदामिनी विरचिता मृदुभावनाभिः ॥६॥

सङ्गीत-सौरभ-सुधा-सुषमाऽनुरागात्
रुच्या समस्य मनसा विहिता विशात्रा।
तस्याः स्मृते-र्निवसनाय गृहं विधातुं
कश्चिन्नयेत् सहृदयः कठिनाऽश्मखण्डैः ॥७॥

नाम्ना ज्ञानवती प्रिये त्वम-
भवो वागीश्वरोऽहं तथा
योगोऽयं विधिना व्यधायि
हृदये किंचिद् विभाव्याऽऽवयोः।
तं सत्यापयितुं तव स्मृति
कृते दातुं निवासं स्थिरं
वाणीज्ञानसमागमेन रचिता
साहित्यसौदामिनी ॥८॥

यावज्ज्योत्स्नोरसि शशभृतो
वक्षसि श्रीश्च विष्णोर्
यावल्लोके सुजनहृदये
काव्यमर्मज्ञता च ।
आस्ते यावत् सुरभिर-
भितः पारिजाते सुजाते
तावत् स्वान्ते स्मृतिरपि
सतां प्राप्नुयात् ते प्रतिष्ठाम् ॥६॥

---



# वैदिक-साहित्य-सौदामिनी

## प्रथम उन्मेषः

### प्रस्तावना

सरस्वतीवन्दना—

**वन्दे भगवतीं वाणीममृतामात्मनः कलाम् ।**
**ययाऽमृतभुजः सर्वे रसज्ञकविनायकाः ।।१।।**

वाणी ह्यात्मनोऽमृतकला, यस्याः प्रसादेन रसज्ञाः कवयः काव्य-नायकादयश्च सर्वेऽप्यमृता भवन्ति । अतः समुचितमेव तस्या वन्दनमादौ । रसज्ञाः काव्यामृतं पिबन्ति । कवयः स्वकृतिभिरमृता भवन्ति । तदुक्तम्—

'जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ।।'

नायकादीनां रामप्रभृतीनां च काव्यद्वाराऽमृतत्वं सर्वविदितमेव । किं च दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् । रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ? अनेनापि वाण्या अमृतत्वं सुतरां सिद्धम् ।

अथ वैदिकसाहित्यस्य चर्चामाचरिष्यन् वेदस्य काव्यत्वं तत्कर्तुः परमात्मनः कवित्वं च निरूपयति—

**अवाप्तुं सच्चिदानन्दं सद्य एव यदीच्छसि ।**
**पश्य देवस्य काव्यं यन्न ममार न जीर्यति ।।२।।**

तच्च द्विविधम्—

हृद्यवर्णगुणाऽऽकीर्णमनन्तरससागरम् ।
काव्यमद्भुतसर्गाङ्कं श्रव्यं दृश्यं च तत्कवेः ।।३।।

**हृद्येति**—परमकवेः परमात्मनः श्रव्यं काव्यं वेदो दृश्यं च जगत् । श्रव्यकाव्यस्य पक्षे—हृद्या मनोहरा वर्णाः 'अग्निमीळे' प्रभृतिषु अकारादयः, गुणाः काव्यगुणाः प्रसादादयश्च तैराकीर्णं व्याप्तम् । अनन्तरसानां शृङ्गारवीरादीनां सागरभूतम् । अद्भुतः सर्गो विचित्रो रचनाप्रपञ्चः, अङ्कश्चिह्नम् अपौरुषेयत्वाऽऽदिज्ञापकं यस्य । अथवाऽद्भुतः सर्गोऽङ्के मध्ये यस्य । दृश्यकाव्यरूपस्य जगतः पक्षे—हृद्यै रमणीयैः शुक्लनीलपीताऽऽदिभिः, गुणैः सत्त्वरजःप्रभृतिभिश्च व्याप्तम् । अनन्ता अपरिमिता रसा मधुरलवणाम्लादयस्तेषां सागरभूतम् । किं च काव्ये सर्गा नाटकादौ चाङ्का भवन्तीत्यपि यथायथं योज्यम् ।

इदं जगदधुना काव्यरूपेण वर्णयति—

पञ्चसन्ध्यात्मकं व्यक्तकार्यावस्थमहानटम् ।
सूत्रधारकृतारम्भं दृश्यं काव्यमिदं जगत् ।।४।।

पञ्चमहाभूतानां सन्धिना समवायेन घटितम् । व्यक्तस्य महदादेः कार्यावस्थायां स्थूलभौतिकसृष्टौ विद्यमानो महानटः प्रकृतिस्वरूपाया महानट्याः स्वामी यस्मिन् । तस्य सर्वनियामकत्वात् । सकलजगत्सूत्रधारेण तेन परमात्मना कृतारम्भं प्रलये साम्यावस्थायां स्थितेषु गुणेषु वैषम्यनिमित्तस्य प्रथमविक्षोभस्य निमित्तकारणं स एव । ईदृशं जगत् तस्य दृश्यं काव्यमर्थात् नाटकमिव विद्यते ।

नाटकपक्षे तु मुखप्रतिमुखादिपञ्चसन्धिभिर्घटितम् । **मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः** इति पञ्चसन्धयः । व्यक्ता रङ्गमञ्चेऽभिनीयमानाः कार्याऽवस्था आरम्भ-यत्न-प्राप्त्याशा-नियताप्ति-फलागमा येषां तथाविधा महानटा उत्कृष्टाभिनेतारो यत्र । नाटकस्याऽऽरम्भः सूत्रधारेण क्रियते । सूत्रधारश्च—

'नाट्योपकरणादीनि सूत्रमित्यभिधीयते ।
सूत्रं धारयतीत्यर्थे सूत्रधारोभिधीयते इति ।।'

नाटकलक्षणम्—'नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्'

इति । पूर्वोक्तानां पञ्चार्थप्रकृतीनां पञ्चकार्यावस्थानां च योगेन नाटकस्यात्मलाभो भवतीति सर्वं साहित्यदर्पणादौ वर्णितम् ।

तस्य भगवतः श्रव्यं काव्यं वेद इत्याह—

यः कालेनानवच्छिन्नस्तस्याशेषजगद्गुरोः ।
विबुधामोदिनिःश्वासः श्रव्यं काव्यं बृहस्पतेः ॥५॥

**तस्येति**—बृहती वेदवाक्, तस्याः पतिर्बृहस्पतिः । वेदाश्च तस्य निःश्वसितभूताः । तथा चोक्तं बृहदारण्यके—**"अस्य महतो भूतस्य निःश्वसितमेतद्यद् ऋग्वेदः"** इत्यादि (बृह० २।४।१०) । स च निःश्वासो विबुधानामोदयतीति विदितमेव विदुषाम् । आमोदो हर्षः सौरभं च । सायणोऽपि वेदभाष्यारम्भे—'यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे परमानन्दमीश्वरम् ॥' इत्याह ।

स्वकवित्वं च भगवता स्वमुखेनैवाथर्वसु प्रतिपादितमित्थम्—

सत्यमहं गभीरः काव्येन, सत्यं जातेनास्मि जातवेदाः ।
न मे दासो नार्यो महित्वा, व्रतं मीमाय यदहं धरिष्ये ॥
न त्वदन्यः कवितरो न मेधया, धीरतरो वरुण स्वधावन् ।
त्वं ता विश्वा भुवनानि वेत्थ, स चिन्नु त्वज्जनो मायी
बिभाय ॥ अथर्व० काण्ड ५, सूक्त ११, मन्त्र ३,४ ।

यजुःष्वपि—

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्
व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ अध्याय ४०, मन्त्र ८ ।

अथ काव्यप्रयोजनवर्णनमुखेन कविवन्दनमपि प्रस्तौति—

ये स्वान्तःसुखहेतवे भगवतः सेवार्पणायैव वा
संमानाय धनाय कोमलधियां प्रेम्णां प्रबोधाय वा ।
सद्यो निर्वृतिदां हृदि सुमनसां ग्रथ्नन्ति काव्यस्रजं
वन्द्यास्ते कवयो न कस्य भुवने प्रीत्याभिनन्द्याथ वा ॥६॥

अथ काव्यसाहित्ययोः स्वरूपं तत्र काव्यस्य साहित्याङ्गतां कर्तृप्रधानतां च क्रमशः प्रदर्शयति—

काव्यं शब्दार्थयो रम्या रसभावात्मिका कृतिः ।
सगुणालंकृतिः प्रीत्यै सदोषा तु न सा तथा ॥७॥

लक्ष्यसाहित्यमात्रस्य काव्यमत्रोपलक्षकम् ।
रसभावप्रधानत्वात् सर्वं काव्यपदास्पदम् ॥८॥

एवं साहित्यप्रसंगे समुपस्थिते किं तत् साहित्यमिति विवृणोति—

शब्दार्थयोः सहितयोः सरसाऽस्तदोषा,
चेतश्चमत्कृतिकरी रचना गुणाढ्या ।
साहित्यमित्यभिहिता सहिता यतः सा
सर्वात्मना हृदयभावनया प्रणेतुः ॥९॥

धर्मशास्त्रराजशासनादिषु शब्दस्य प्रधानता, सुहृद्वाक्यादिषु तात्पर्यस्य । किन्तु काव्ये शब्दार्थयोरुभयोः सहितयोरेव प्राधान्यम्, तेन तस्य प्रथमं साहित्यत्वम् । हितेन कल्याणेन सह वर्तमानत्वाद् द्वितीयम् । एतेन लोकहानये प्रवृत्तस्य शब्दार्थप्रपञ्चस्य न वास्तविकं साहित्यत्वम् । किन्त्वजागलस्तनन्यायेनैव तस्य तत्र प्रयोगः संगच्छते । अथ काव्यसाहित्ययोः कर्तृप्रधानत्वात् तत्र कर्तुर्भावनापि पटे तन्तुवद् ओतप्रोता भवतीति तृतीयं साहित्यत्वम् । अत एवोक्तम्—'साहित्यमित्यभिहिता सहिता यतः सा सर्वात्मना हृदयभावनया प्रणेतुः' । इत्थं साहित्यस्य साहित्यत्वं त्रिधाऽवधेयम् ।

साहित्याङ्गानि तेषां कर्तृप्रधानता च—

आख्यायिकाकथाकाव्यगीति-रूपक-रूपकम् ।
यद्भावना-प्रधानं तत् सर्वमेव हि वाङ्मयम् ॥१०॥

कर्तृप्रधानमखिलं तत्कर्तृत्वविजृम्भितम् ।
सिद्धान्तालोचनायुक्तं साहित्यस्याङ्गतां गतम् ॥११॥

इतरवाङ्मयं वस्तुप्रधानमित्याह—

वस्तुप्रधानमन्यत् तु प्रायेण सर्ववाङ्मयम् ।
धर्मदर्शनविज्ञानेतिहासगणितादिकम् ॥१२॥

चिकित्सा यान्त्रिकी शिल्पराजनीत्यादिकं तथा ।
सर्वेष्वेषु प्रशस्ता हि लेखकस्य तटस्थता ॥१३॥

विश्वसाक्षात्कारे कवेरनुभूतिः सच्चिदानन्दमयी—

चराचरात्मकं विश्वं सत्, तस्य कविचेतसि ।

प्रतिभासस्तु चित्, तज्जं सुखमानन्द उच्यते ॥१४॥

काव्यनाटकपठनदर्शनादिना सहृदयस्यानुभूतिस्तु रसमयी—

कविप्रतिभया स्वच्छे चित्तादर्शे सचेतसाम् ।
सङ्क्रान्तः सच्चिदानन्दः स एव परमो रसः ॥१५॥

नानन्दः कविचित्ते चेत्, कथं सहृदयेऽस्तु सः ?
बिम्बेऽसतो न सद्भावो दृश्यते दर्पणे क्वचित् ॥१६॥

कलाबलात् कृते काव्ये तदभावेऽपि वा क्वचित् ।
भवत्येव रसाभासो नटादाविव नाटके ॥१७॥

अथ साहित्यस्य सच्चिदानन्दरूपतां निरूपयति—

सत्यत्वात्, सुन्दरत्वाच्च, सदर्थप्रतिपादनात् ।
चिन्मयत्वाच्चमत्काराच्च चैतन्योद्बोधनादपि ॥१८॥

सत्त्वोद्रेकादखण्डस्वरूपानन्दप्रकाशनात् ।
साहित्यस्य कुतो न स्यात् सच्चिदानन्दरूपता ॥१९॥

साहित्ये प्रतिभायाः प्रभावस्तत्र कलायोगश्च—

कविप्रतिभयोपात्तं तद्धृदा चात्मसात्कृतम् ।
सुखं वा यदि वा दुःखं रम्यारम्यं प्रियाप्रियम् ॥२०॥

स्नेहाद् रक्तमिवाम्बायाः कलया परिणामितम् ।
सर्वमेव सरस्वत्या स्तन्यं सुमधुरं भवेत् ॥२१॥

यथा चित्रार्पितः स्थाणुः पत्रपुष्पफलोज्झितः ।
कलया चित्रकारस्य धत्ते विच्छित्तिमुत्तमाम् ॥२२॥

कलायास्तद् हि माहात्म्यं यदमूर्त्तस्य मूर्त्तताम् ।
अचेतनस्य चैतन्यमरम्यस्यापि रम्यताम् ॥२३॥

पिच्छिकेवेन्द्रजालस्य दर्शयन्त्यद्भुता हि सा ।
तनोति नूतनां सृष्टिं परस्परविरोधिनीम् ॥२४॥

तथाहि—

अभिनयकलाविच्छैलूषैः पटु प्रकटीकृतो
मरणवनवासादि प्रायो विषादमयोऽपि सन् ।

दशरथहरिश्चन्द्रादीनां दशान्तविपर्ययो
विधुरमधुरोर्मिव्यालोलं करोति हि मानसम् ॥२५॥

कलाकलेति बहुविहितकोलाहलायास्तस्याः किं स्वरूपमिति जिज्ञासायामाह—

कलमव्यक्तमधुरं कमनीया कला तथा ।
कमनीयं करोतीति कलाविद्भिः कलोदिता ॥२६॥

'कलमव्यक्तमधुरम्' इति कोषः । कला हि स्वसंपर्केण सकलमपि कलयति कमनीयं करोतीति हेतोः सा कलाकुशलैः कलानाम्नाभिधीयते कलावस्तुषु मूर्ति-चित्र-राग-कवितादिषु किमप्यव्यक्तं वर्णयितुमशक्यं माधुर्यं सौन्दर्यं भवतीति नापरोक्षं प्रेक्षावताम् । तथाह—

काष्ठेष्टका—शिलाखण्ड—चर्मवर्णमृदादिभिः ।
प्रासाद-मूर्ति-चित्रादि तज्ज्ञा निर्मान्त्यनेकशः ॥२७॥

तेष्वेके शिल्पिनः प्रोक्ताः कृतिनोऽन्ये कलाकृतः ।
उपयोगि भवेच्छिल्पं कला त्वानन्ददायिनी ॥२८॥

शिल्पिनां कौशलं स्थूलं सूक्ष्मात् सूक्ष्मतरं परम् ।
अनिर्वाच्यः कलानन्दो ह्यव्यक्तमधुरत्वतः ॥२९॥

वास्तु-मूर्त्ति-चित्र-राग-कवितादिषु तदाधाराणां इष्टका-चित्रपट-नाद-शब्दार्थानां स्थूलसूक्ष्मतारतम्यं नेह प्रपञ्च्यते । कलावस्तूनां रसादेश्चानिर्वाच्यत्वमुपरिष्टात् स्फुटीकरिष्यते ।

यत् कौशलं स्वसंपर्कादश्मनि, मृदि, दारुणि ।
नादे शब्दार्थयोर्हेतुरलौकिकविनिर्मिते ॥३०॥

संमोहयति चेतांसि पश्यतां शृण्वतामपि ।
ऐन्द्रजालिकमायेव तत् कलेत्यभिधीयते ॥३१॥

गीतवादननृत्यानां सम्मेलनेन प्रपाणकरसवदपरा नाट्यकलापि सहृदयहृदयाह्लादिनी भवतीति सर्वविदितम् । तथाह—

गीतवादननृत्यानां योगान्नाट्यकला परा ।
भवेदभिनयप्राणा सामाजिकसुखावहा ॥३२॥

माल्यनिर्माणगन्धयुक्तिकेशपरिकर्मादिषु यः कलाशब्द-व्यवहारो दृश्यते स वस्तुतो भाक्तः—

निरूपिताश्चतुःषष्टिः कला याः कृतिभिः पुरा ।
तत्र शिल्पसमावेशो दृष्टया व्यापकया कृतः ॥३३॥

प्राचीनाभिमतासु चतुःषष्टिकलासु शिल्पानां समावेशो लक्षणया व्यापकदृष्टया वा समाधेयः ।

सृष्टौ तिस्रो दृष्टयः—

तिस्रो हि दृष्टयः पुंसामेका बाह्यार्थदर्शिनी ।
द्वितीया तात्त्विकी तावत् तृतीया भावनात्मिका ॥३४॥

पश्यन्तो दृष्टिभिस्ताभिरवस्थानुगुणं जगत् ।
जनास्त्रिलोचनाः सर्वे मायोपाधिवशा अपि ॥३५॥

प्राकृतं प्रेक्षते नारीं कामी पश्यति कामिनीम् ।
मांसमज्जाचयं धीमान् दृष्टिभेदेन केवलम् ॥३६॥

तत्र कवेर्दृष्टिर्भावप्रधाना—

व्यवहारे तु सामान्या, विज्ञाने सैव तात्त्विकी ।
काव्यादौ च पुनः सैव भूयसा भावनात्मिका ॥३७॥

सर्वेषु तिसृणां दृष्टीनां सद्भावेऽपि रुच्यादिभेदेन तत्र तत्र तदा तदा च तासां गुणप्रधानभावः—

ऐकान्तिकत्वं नैतासां संभिन्नानां परस्परम् ।
रुचिप्रयोजनावस्थाभेदैस्तु गुणमुख्यता ॥३८॥

वैज्ञानिकेऽपि न भावनाया अभावः—

तत्त्वद्वयसमाहारवेत्ता वैज्ञानिकोऽपि सन् ।
जलप्रपातसौन्दर्यं किं नैवानुभवत्यसौ ? ॥३९॥

वैज्ञानिको यद्यपि जलयाथार्थ्यम् ओषजनोद्रजनसमवायरूपं सम्यग् वेद, तथापि गिरिशिखरान्निष्पततो जलप्रपातस्य सुषमया स आकृष्टो भवति ।

केचिच्छङ्कन्ते यच्चन्द्रमसो दग्धपाषाणनिचयमये स्वरूपे चन्द्रयात्रिभिः साक्षात्कृते तत्सौन्दर्यं शशविषाणायितं न यथापूर्वं कामिनीवदनोपमं नयनासेचनकं च भविष्यतीति, तन्न विचारसहम्—

वैज्ञानिकानुसन्धानैश्चन्द्रस्तत्त्वविदामपि ।

संयोगिनां सुधावर्षी विषवर्षी वियोगिनाम् ॥४०॥

दृष्टोऽपि सन्निकृष्टोऽपि पद्भिः स्पृष्टोऽपि चन्द्रमाः ।
हास्यत्यास्योपमां नैषा शङ्कातङ्काय जायताम् ॥४१॥

दृष्टं प्रयोगशालायां विश्लिष्टमपि सर्वतः ।
नारविन्दं किमद्यापि सुन्दरीवदनोपमम् ? ॥४२॥

तत्कारणम्—

तत्त्वदर्शिन्यपि प्रज्ञा कल्पते न व्यपोहितुम् ।
सर्वाभिभावकं तीव्रं प्रभावं दृश्यवस्तुनः ॥४३॥

प्रज्ञा-कल्पना-भावनानां संगमात् त्रिवेणीव प्रतिभाति कवेः ।

गाढभावनया युक्ता, कल्पना कृतसङ्गमा ।
सर्वतोगामिनी प्रज्ञा त्रिवेणी प्रतिभा कवेः ॥४४॥

कविचेतसि प्रज्ञादीनां व्यापारनिर्धारणम्—

प्रज्ञा गृह्णाति सामग्रीं, रूपं यच्छति कल्पना ।
आत्मभूतं तु काव्यस्य रसं सिञ्चति भावना ॥४५॥

कविः प्रज्ञया जगतो वर्ण्यवस्तु संगृह्णाति । कल्पनया चित्रकारो रूपरेखयेव तद् वस्तु साकारं करोति । विभिन्नवर्णैश्चित्रमिव भावनाभिश्च तद् आत्मस्वं रससिक्तं विधीयते ।

सहृदयहृदये तासां कार्यम्—

ज्ञानं प्रज्ञा, चमत्कारमुल्लासं चापि कल्पना ।
रसानुभूतिं गम्भीरां भावना कुरुते हृदि ॥४६॥

सहृदयः स्वप्रज्ञया काव्यविषयं जानाति, कल्पनाशक्त्या स्वचेतसि तस्य चित्रनिर्माणं करोति । विचारको वक्रताद्यलंकारैरर्थनवीनतां तज्जन्यचमत्कारमुल्लासं वानुभवति । भावनया गम्भीरां रसानुभूतिं प्राप्नोति ।

प्रज्ञाया व्यापाराः—

ग्रहणं, धारणं, ध्यानोपेक्षे, संशयनिश्चयौ ।
स्मृति-विश्लेष-संश्लेष-परिच्छेदादयस्तथा ॥४७॥

व्यापारास्सन्ति भूयांसो बुद्धेर्यद्यपि जीवने ।

तथापि तेषु केषांचिद् वैशिष्ट्यं कविकर्मणि ।।४८।।

ग्रहणं यत्किंचिदित्यात्मकं निर्विकल्पकप्रत्यक्षम्, धारणं पूर्वज्ञान-साहाय्येन सविकल्पकप्रत्यक्षम्, ध्यानम् एकतानता, उपेक्षा वैमुख्यम्, विश्लेषः समग्रानुभूतेः खण्डशः प्रत्यङ्गपृथक्करणम्, संश्लेषो विभिन्नानुभूतीनामवयवान् संयोज्य नूतनवस्तुनिर्माणम्, परिच्छेदो विवेकः ।

तेष्वपेक्षितानां संक्षेपेण दिग्दर्शनम्—

सूक्ष्मं निरीक्षणं व्यापि सुस्पष्टा स्थायिनी स्मृतिः ।
विभिन्नेषु परिच्छेदः, साम्यवैषम्यदर्शनम् ।।४९।।

वर्गीकरणसामर्थ्यं प्रकीर्णस्यापि वस्तुनः ।
आवश्यकस्य चयनं, त्यागोऽनावश्यकस्य च ।।५०।।

अथ कल्पना तस्या व्यापाराश्च । कल्पनाशब्दार्था—

कर्तने योजने, ऽभ्यूहे सामर्थ्ये प्रतिकर्मणि ।
उद्भावनायां निर्माणे मिथ्यार्थे चाऽपि कल्पना ।।५१।।

कल्पनाप्रकाराः—

निर्मात्री च परिष्कर्त्री, व्याख्यात्री, तार्किकी तथा ।
शङ्किनी मोहिनी, नव्योद्भाविन्यादर्शदर्शिनी ।।५२।।

बृंहयन्त्यल्पयन्ती च भूतभव्यविभाविनी ।
नटीव दृश्यते लोके कल्पना विविधाकृतिः ।।५३।।

निर्मात्री शिल्पिनां वास्तु-मूर्ति-चित्रादिकारिणाम् ।
परिष्कर्त्री रुचीनां च वेशादिपरिकर्मकृत् ।।५४।।

आलोचकानां व्याख्यात्री तार्किकी तर्कजीविनाम् ।
उद्भाविनी च विज्ञाने नवाविष्कारकारिणाम् ।।५५।।

मोहिन्युद्योगशून्यानां जाग्रत्स्वप्नविलोकिनाम् ।
शङ्किनी स्नेहशीलानां बन्धूनां सुहृदां तथा ।।५६।।

कवीनां कल्पनाऽऽदर्शदर्शिनी सर्वतोमुखी ।
नृत्यति कवितारङ्गे नटीव बहुभूमिका ।।५७।।

कविः संकल्पमात्रेण प्रतिस्पर्धीव वेधसः ।
ऊर्णनाभिरिव स्वस्मात् तनोति सृष्टिमद्भुताम् ।।५८।।

अतः सर्वप्रकाराणां पूर्वोक्तानां हि तत्कृतौ ।
कल्पनानां समावेशो याथातथ्येन जायते ॥५९॥

अथ भावना—

प्रतिकूलानुकूला वा रुचिस्तीव्रा तु भावना ।
सा देश-धर्म-जातीनां संस्कारैश्चिरसंचितैः ॥६०॥

हृदयेऽङ्कुरिता सिक्ता शिक्षासंस्कृतिवारिभिः ।
महालतायते पुष्टा परिवेशादिदोहदैः ॥६१॥

धर्मवीराः स्वधर्मार्थं सत्यार्थं सत्यवादिनः ।
देशभक्ताश्च देशार्थं पीडितार्थं च सज्जनाः ॥६२॥

सुखं धनं स्वसर्वस्वं बन्धून् प्राणानपि प्रियान् ।
यत्तृणाय न मन्यन्ते तत्सर्वं भावनावशात् ॥६३॥

आसां सहृदयचेतसि व्यापारः—

ज्ञानं प्रज्ञा चमत्कारमुल्लासं चापि कल्पना ।
रसानुभूतिं गम्भीरां भावना कुरुते हृदि ॥६४॥

विभिन्नप्रकारककृतीनां सहृदयेषु प्रभाववैचित्र्यम्—

प्रचुरा कल्पना यस्यां शब्दार्थचित्रताथवा ।
कृतिरुत्तेजिकोल्लासं मनसः कुरुते ह्यसौ ॥६५॥

भावना भूयसी यस्यामल्पालंकृतिरप्यसौ ।
रचना रससंवित्तौ मूकस्य गुडभक्षणम् ॥६६॥

प्रज्ञा-प्रधाना रचना कल्पना भावनान्विता ।
करोति सार्थगाम्भीर्याच्चिन्तनप्रवणं मनः ॥६७॥

काव्यकारणचतुष्टयम्—

जडचेतनजिज्ञासौत्सुक्यमात्मप्रकाशनं ।
सौन्दर्यप्रियतोत्पादकत्वं च काव्यकारणम् ॥६८॥

तथापि यथा सर्वे जना न सहृदयास्तथा सर्वे सहृदया न कवयः । ये तु निपीतं कुसुमरसमिव मधुकराः, उपात्तां स्वाऽनुभूतिं रुचिरगिरि पुनरुद्वमन्ति त उत्पादका एव कवयः । तथ्यमिदमेकेन दृष्टान्तेन सुस्पष्टीकरोति—

दृग्वन्तोऽपि न शक्नुवन्ति बहवो द्रष्टुं जगच्चारुतां
दृष्ट्वान्येऽनुभवन्ति नैव हृदये तस्याः प्रभावं परम् ।
धन्यास्ते कवयो भवन्ति खलु ये तद्वर्णनाय क्षमाः
कल्पन्ते मधुमक्षिकेव मधुपाः किं वा मधूत्पत्तये ॥६९॥

अतः—

प्रभावग्राहिहृल्लोकशास्त्रवित् प्रतिभाऽन्वितः।
सतताऽभ्यासशीलश्च प्रसादयति भारतीम् ॥७०॥

स्वयं कृपाकटाक्षेण दृष्टः प्रतिभया न यः ।
सोऽपि सिध्यति यत्नेन शिक्षाभ्यासबलेन च ॥७१॥

अतः कविपदप्रेप्सावद्भिस्तु गुरुसेवया ।
लक्ष्यलक्षणसन्दर्भैः सेवनीया सरस्वती ॥७२॥

तत्कृते च लक्षणग्रन्थानामेतादृशानामपेक्षा भवतीति तदर्थमयमस्माकमारम्भः ।

इति वैदिक-साहित्यसौदामिन्याः प्रथम उन्मेषस्समाप्तः ॥

# द्वितीय उन्मेषः

## काव्यस्वरूप-विमर्शः

विदितकाव्यप्रयोजनस्य जनस्य काव्यस्वरूपजिज्ञासायां जातायाम्, काव्ये चमत्कारपक्षपाती रसगङ्गाधरप्रणेता श्रीजगन्नाथमहोदयो यदाह तस्यायमाशयः—रमणीयार्थप्रतिपादकः शब्दः काव्यम् । रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता । लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायो ऽनुभवसाक्षिको जातिविशेषः । लोकोत्तरत्वकथनेन 'पुत्रस्ते जातः', 'धनं ते दास्यामि' प्रभृतिभिर्वाक्यैर्जायमानस्य लौकिकसुखस्य निरासः ।

तथा, कविकर्म काव्यम् । कविश्च शब्दरचनामेव करोतीति तन्मात्रस्यैव काव्यत्वम् । अर्थस्तु गृहीतसंकेतस्य पुंसः स्वयमुपस्थितो भवति । कदाचिद् वक्तृबोद्धव्यादिवैशिष्टचात् स तत्र तत्र विकल्पतेऽपि । तेन शब्दमात्रस्यैव काव्यत्वम्, नार्थस्यापीति । शब्दार्थयुगलस्य काव्यत्वं चेत् तत् काव्यत्वं जायापतियुगलवाचकदम्पतीपदवत् किं शब्दार्थयोर्व्यासक्तं प्रत्येकपर्याप्तं वा ? यद्युभयोर्व्यासक्तं तर्हि 'एको न द्वौ' इति न्यायेन यथा दम्पतीपदम् उभयमेवाभिधत्ते न जायामात्रं पतिमात्रं वा तथा काव्यपदमपि केवलं शब्दं केवलमर्थमेव वा नाभिदधीत । अथ प्रत्येकपर्याप्तं तर्हि एकस्मिन् रघुवंशादौ काव्यद्वयप्रतीतिर्जायेत, एका शब्दनिबन्धना, अर्थनिबन्धना च परा । न च तथा । तस्मात् केवलस्य शब्दस्यैव काव्यत्वम् । किं च, 'काव्यं पठचते, तस्यार्थो नावबुध्यते' ? इत्यादि प्रयोगदर्शनादपि केवले शब्दे एव काव्यत्वं नियन्त्रितम् । अपि च स एवार्थो यदि भिन्नैः शब्दैर्भिन्नप्रकारेण वाभिधीयेत न तस्य तत्काव्यता, तेष्वेव शब्देषु सत्सु तु सा भवतीत्यन्वयव्यतिरेकाभ्यां शब्दस्यैव काव्यता ।

अत्र विचार्यते । यस्य शब्दस्य रमणीयार्थप्रतिपादकस्य काव्यत्वं भवताभ्युपगम्यते तस्यार्थज्ञानमन्तरैव तत्काव्यत्वम्, अर्थज्ञानसहितस्य वा ? न प्रथमः कल्पः । तदभ्युपगमे तां तां भाषामजानतोऽपि तन्नि-

बद्धकाव्यश्रवणमात्रेण पूर्णरसास्वादः सम्पद्येत। तन्मते शब्दस्यैव काव्यत्वात्, तेन च तस्यास्वादव्यञ्जकत्वात्। तस्मात् काव्यत्वं शब्दार्थयोर्व्यासक्तमेव।

श्रीकालीदासेन होमरेण वा प्रणीतस्य नाटकस्य काव्यस्य वा भाषान्तरानुवादोऽपि कालिदासस्य होमरस्यैव वा व्यवह्रियते न तद् व्यतिरिक्तस्य कस्यचित्। उभयवाचकेन काव्यपदेन कदाचिदन्यतरावबोधने तु लक्षणाङ्गीकारे नास्माकं विमतिः। अत एव रघुवंशारम्भे—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥

इति पद्येन श्रीकालिदासोऽपि शब्दार्थौ पार्वतीपरमेश्वराविव संपृक्तौ उभयोः शब्दार्थयोः प्रतिपत्तिं च कवये परमावश्यकीं निरूपयन् काव्यत्वमुभयव्यासक्तमेव व्याजहार। एतेनार्थोऽपि शब्दवदेव कवेः कर्म, तदर्थं च कविना प्रत्युत समधिकतरं प्रयतितव्यमित्यपि कवेस्तात्पर्यं प्रतीयते, यतो ह्यर्थे संसाधिते शब्दस्तु स्वयमेव सिध्यति तस्य वश्यवाक्त्वात्। महाकविना माघेनापि स्वकाव्ये उक्तम्—

नालम्बते दैष्टिकतां न निषीदति पौरुषे।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते॥ २. ८६

अत एव पुराणेऽपि

शब्दजातं यदखिलं धत्ते शर्वस्य वल्लभा।
अर्थजातं तु सकलं धत्ते मुग्धेन्दुशेखरः॥

एतेन अर्धनारीश्वरे शङ्करे यथा शिवयोः सदा सहभावस्तथा काव्ये शब्दार्थयोरिति सुतरां निरूपितं भवति।

किंच—रसगङ्गाधरटीकाकृच्छ्रीनागेशोऽपि पण्डितराजमतं खण्डयन्नेवमाह—"आस्वादव्यञ्जकत्वस्य उभयत्र (शब्देऽर्थे च) अविशेषात्। ...... .. काव्यं पठितं, श्रुतं काव्यं, बुद्धं काव्यम् इत्युभयविधव्यवहारदर्शनाच्च काव्यपदप्रवृत्तिनिमित्तं व्यासज्यवृत्तिः। अत एव वेदवाक्यादेरुभयवृत्तित्वप्रतिपादकः 'तदधीते तद्वेद' (अष्टा० ४।२।५९) इति पाणिनिसूत्रस्थो भगवान् पतञ्जलिः (तद्ग्रन्थ इत्यर्थः)—"किमर्थमिमावुभौ व्यादिश्येते? न योऽधीते वेदाऽप्यसौ? यश्च वेदाधीतेऽप्यसौ?

न—एतयोरावश्यकः समावेशः। भवति हि कश्चित् संपाठं पठति, न वेत्ति। कश्चिद् वेत्ति, न संपाठं पठति।" इति संगच्छते।

श्रीनागेशः पुनरप्युवाच—"रसगङ्गाधरकारः प्राह—यदि द्वयोः संयुक्तयोरेव शब्दार्थयोः काव्यत्वं तर्हि 'काव्यं पठ्यते' इत्यादौ शब्दमात्रे कथं काव्यव्यवहार इति? तत्रायं व्यवहारो लाक्षणिक इत्यवेहि।"

अस्यायं निष्कर्षः—

**शब्दे यथार्थेऽपि तथैव यत्नं,**
**समानभावेन कविः करोति।**
**न शब्दमात्रस्य रसानुभूतिर्,**
**निमित्ततार्थेन विना कदाचित्॥१॥**

**दुर्बोधकाव्यं सरलं च काव्यम्,**
**इदृक् प्रयोगो घटते न शब्दे।**
**काव्यत्वमस्मादुभयोर्वदन्ति,**
**व्यासक्तमेव प्रतिभानवन्तः॥२॥**

ननु पूर्वोद्धृतं स्वकीयं काव्यलक्षणं विवृण्वता पण्डितराजेनाभाणि—'रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता। लोकोत्तरत्वं चाह्लादगतश्चमत्कारापरपर्यायोऽनुभवसाक्षिको जातिविशेषः'इति।

अत्र स महानुभावः प्रष्टव्यो यद् विदितार्थस्य लोकोत्तरत्वमिति पदस्य व्याख्यानाय प्रयुक्तं चमत्कारत्वपदमपि तद्वदेवाविज्ञाताशयम्। अतस्तत् स्वरूपं वक्तव्यम्। किं च लोकेऽनुभूयमानस्यार्थस्य लोकोत्तरत्वं कथमित्यपि युक्त्योपपादनीयम्। तस्य लोकोत्तरत्वस्य च आह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेष इति परिचयोऽपि नोचितः, प्रतिपुरुषं रुचिभेदात्। सर्वेषां तथाविधानुभवाभावाच्च।

ननु वैलक्षण्यमेव चमत्कारः, तस्माच्चमत्कारस्तल्लक्षणं चेति परस्परविरुद्धम्। अतस्तल्लक्षणमकुर्वता पण्डितराजेन किमपराद्धमिति चेत्, श्रूयताम्—

**विद्युत्समुन्मेष इवान्धकारे**
**करोति या चेतसि चाकचक्यम्।**

वक्रोक्तिवैचित्र्यविरोधिताद्यै-
श्चितिश्चमत्कारपदोदितासौ ॥३॥

काव्यं पठतो रूपकं वा पश्यतः सहृदयस्य संकल्पविकल्पात्मके मनसि संभावनातीतस्य कस्यचिदर्थस्य सहसाऽऽह्लादात्मिका चितिः प्रकाश एव वा चमत्कारः। कल्पनाप्रधानम् उक्तिवैचित्र्यात्मकम्, विरोधगर्भम् विविधालंकारैरुपस्कृतं चित्रं काव्यं स्ववैलक्षण्येन चित्तं यथा चमत्कृतं करोति न तथा रसकाव्यम्। तद्धि हृदयं रससागरे तथा निमज्जयति यथा तदनुभवः शब्दैः प्रकाशयितुं न शक्यते। अत एव स रसो ब्रह्मानन्दसहोदर उच्यते। ब्रह्मानन्दश्च 'समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत् सुखं भवेत्। न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते॥' इत्युक्तस्वरूपः। सत्त्वातिशयात् तत्कालविगलितपरिमिताहंभावत्वं काव्यानन्दब्रह्मानन्दयोः साधर्म्यम्। काव्यानन्दानुभूतौ वाह्यविभावादिप्रत्यक्षं ब्रह्मानन्दे वाह्यविषयाभावश्च तयोर्वैधर्म्यम्।

उक्तलक्षणः स चमत्कारश्च न रसाभिन्नो रसस्यैव कश्चिद्धर्मविशेषो वा। रसप्रधानरचनासु क्वचित् सत्यपि रसे तददर्शनात्। क्वचिच्चित्रकाव्येषु चमत्कारेण सह रसस्यासामानाधिकरण्याच्च। सहसा असंभाव्यवस्तुविलोकनजन्मा चित्तस्य धर्मविशेषोऽयं क्षणिकः। अद्भुतरसस्य स्थायिभावो विस्मयस्तु न तथेत्यनयोर्भेदः।

यत्तु श्रीनारायणदासः प्राहः—

रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते।
तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः।
तस्मादद्भुतमेवाह कृती नारायणो रसम्॥

इत्यर्थवाद एवैषः। कविना अभिनवोऽर्थः क्वचित् पुराणोऽपि वा नवतया निरूपणीय इत्यत्र तस्य तात्पर्यात्।

**वसन्ते नवतां यान्ति यथा जीर्णा अपि द्रुमाः।**
**तथा नवा इवाभान्ति त एवार्था मुखे कवेः ॥४॥**

अस्य रसाद्यनुभवस्य च प्रत्यक्षविषयत्वेऽपि षड्विधलौकिकसन्निकर्षान्यतमेन त्रिविधालौकिकसन्निकर्षेण वा अग्राह्यत्वाद् अनिर्वचनीयतेति रसनिरूपणप्रस्तावे सविस्तरं प्रदर्शयिष्यते।

ननु हृदयरसानुभूत्योर्बहुकण्ठोद्घुष्टः सम्बन्धः शरीरक्रियाविज्ञानमजानतां जनानां मिथ्या प्रवादः। मस्तिष्कस्यैव सर्वमानसिकव्यापाराणामाश्रयत्वात् इति चेत्, सत्यम्। तथापि मस्तिष्के प्रथमकृतात्मलाभानामनुरागशोकक्रोधभयादीनामावेगानामसंलक्ष्यक्रमा अनुभूतिः प्रथमं हृदयमेवोद्वेलयति यया तत्क्षणादेव हृदयगतेस्तीव्रतामन्दतावरोधादयः स्तम्भस्वेदादयः सात्त्विकभावा वा समुद्भवन्ति। किंच, शरीरक्रियाविज्ञा अपि शोकाभिघातादिना व्युपरते जने हृदयगत्यवरोधमेव कारणं व्यपदिशन्ति। संकल्पविकल्पचिन्तनादीनामधिष्ठानं मस्तिष्कमेव। अत एव कदाचित् चिन्तनादिमानसव्यापाराणामतिरेकान्मस्तिष्कशिरातो रक्तस्रावो मृत्युं जनयति। अतो भावनानां हृदयेन चिन्तनादीनां मस्तिष्केण च सह सम्बन्धो न कल्पनामात्रम्। तदुक्तमस्याः प्रथमोन्मेषे (६५,६६-६७)—

'प्रचुरा कल्पना यस्यां शब्दार्थचित्रताथवा
कृतिरुत्तेजिकोल्लासं मनसः कुरुते ह्यसौ ॥
भावना भूयसी यस्यामल्पालंकृतिरप्यसौ
रचना रससंवित्तौ मूकस्य गुडभक्षणम् ॥
प्रज्ञा प्रधाना रचना कल्पना भावनान्विता
करोति सार्थगाम्भीर्याच्चिन्तनप्रवणं मनः ॥' इति।

अथ काव्ये रससम्प्रदायपक्षपाती कविराजः श्रीविश्वनाथमहोदयः स्वग्रन्थे साहित्यदर्पणे 'वाक्यं रसात्मकं काव्यम्' इति प्रतिपादयन् केवलस्य शब्दस्यैव काव्यत्वमुररीचकार। स च पक्षः पण्डितराजस्य काव्यलक्षणविवेचनप्रसङ्गे संप्रत्येव निरस्त इति, तस्य पुनर्निरसनं पिष्टपेषणमात्रम्। स हि महानुभावः श्रीमम्मटस्य "तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापीति" काव्यलक्षणं प्रतिपदं प्रत्याचक्षाणः प्राह—"ननु काव्यलक्षणे अदोषाविति पदं सदोषम्। 'दृष्टं किमपि लोकेऽस्मिन्न निर्दोषं न निर्गुणम्' इत्याभाणकानुसारं सर्वथा निर्दोषस्य काव्यस्यैकान्तमसंभवात्। किंच, नहि यत्किंचिद् दोषसद्भावे रचनायाः काव्यत्वं व्याहन्यते। काव्यत्वप्रयोजकेषु रसादिषु सत्सु कीटानुविद्धरत्नस्येव तस्यापकर्षमात्रं भवति। तथाहि—उत्तमध्वनिमतः 'न्यक्कारो ह्ययमेव मे यदरयः' इत्यादिपद्यस्याविमृष्टदोषदुष्टस्यापि न काव्यत्वक्षतिः। उत्तमकाव्यत्वनिमित्तस्य ध्वनेस्तत्र सत्त्वात्।"

अत्र दर्पणकृत् प्रष्टव्यो यत् काव्ये दोषाभावो भवदभिमतो न वा? अभिमतश्चेत् श्रीमम्मटद्वारा काव्यलक्षणे तत्समावेशे भवतः को मत्सरः ? अथ नाभिमतस्तर्हि भवान् लोकविलक्षणः कश्चिद् विचक्षण-वरो यः स्वकृतौ दोषागममभिनन्दति । अथवा रुचिभेदोऽत्र हेतुः स्यात्।

अत्रेदमप्यवधेयं यत् काव्यप्रकाशकृता स्वग्रन्थे काव्यस्य परिचया-त्मकं विशदं लक्षणमकारि नतु अव्याप्ति—अतिव्याप्ति—असंभवरूप-दोषत्रय—विरहितं तदितरव्यावृत्तिरूपम् । यतः सास्नादिमत्त्वरूपं शास्त्रीयं गोलक्षणमाकर्ण्य गोरपरिचितो बालस्तां तथा ज्ञातुं न शक्नोति यथा सास्नालाङ्गूलककुदखुरविषाणचरणचतुष्टयादिमत्त्वरूपं स्वरूपलक्षणम् । अत एवात्र प्रायः सर्वेषां प्रधानकाव्याङ्गानां सन्निवेशो दृश्यते । इदमेव च काव्यलक्षणं संस्कृतसाहित्ये सर्वाधिकं स्पष्टं लोक-प्रियं च । श्रीमम्मटाचार्येण—

**असाधारणधर्माख्यं, दोषत्रयविवर्जितम् ।**
**शास्त्रविद्भिः किल प्रोक्तं यद्धि लक्षणलक्षणम् ।।५।।**

**यस्मादत्यन्तसंक्षिप्तं बालानां नोपकारकम् ।**
**विहितं लक्षणं तस्मादिदं परिचयात्मकम् ।।६।।**

इह दर्पणकृत् पुनः शङ्कते—'यद्येवं तर्हि काव्यात्मभूतस्य रसस्या-प्यत्र निर्देशः कुतो न कृतः ? गुणानां रसधर्मत्वात् गुणनिर्देशे सति तेऽविनाभावेन लभ्यन्ते इति चेत् कुतस्तावदयं द्रविडप्राणायामप्रका-राङ्गीकारः ? न हि प्राणिमन्तो देशा इति वक्तव्ये शौर्यादिमन्तो देशा इति केनाप्युच्यते ।'

अत्रोच्यते—नहि श्रीमम्मटो रसं सकलकाव्यस्यात्मभूतं मन्यते । तदभिमते चित्राख्ये काव्यभेदे रसाभावात् । मतमिदं पण्डितराजो जगन्नाथोप्युपोद्बलयन् रसगङ्गाधरे एवमाह—'यत्तु रसवदेव काव्यम् ।' इति साहित्यदर्पणे निर्णीतं तन्न । वस्त्वलंकारप्रधानानां काव्यानाम-काव्यत्वापत्तेः । न चेष्टापत्तिः । महाकविसम्प्रदायस्याकुलीभावप्रस-ङ्गात् । तथा च जलप्रवाहवेगनिपतनोत्पतनभ्रमणादीनि कविभिर्वर्णि-तानि, कपिबालविलसितानि चेति ।'

यच्च दर्पणकारः 'वाक्यं रसात्मकं काव्यम् ।' इति लक्षणद्वारा रस-मात्रस्य काव्यात्मतां प्रत्यपादयत् तदपि न साधु, भावस्य चमत्कारस्य चापि रसवदेव क्वचित् क्वचिदात्मभूतत्वात् । अत एव 'काव्यस्यात्मा

ध्वनिः' इति प्रतिपादयतः श्रीमदानन्दवर्धनाचार्यस्य मतं खण्डयन् स यदाह—'ध्वनिकारमते वस्त्वलंकाररसादिलक्षणस्त्रिरूपो ध्वनिः काव्यस्यात्मा उत रसादिरूपमात्रः ? नाद्यः, प्रहेलिकादावतिव्याप्तेः । द्वितीयश्चेद् ओम् इति ब्रूमः' इति यदुवाच तदपि न समीचीनम् । श्रीमम्मटजगन्नाथादीनां विदुषां मते रसरहितस्यापि सन्दर्भस्य काव्यत्वाभ्युपगमात् ।

प्राधान्येन ध्वनिनिरूपणाय प्रवृत्तः श्रीमदानन्दवर्धनाचार्यः—

"योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ।।

काव्यस्य हि ललितोचितसन्निवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो योऽर्थस्तस्य वाच्यप्रतीयमानौ द्वौ भेदौ।

तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः ।
बहुधा व्याकृतः सोन्यैस्ततो नेह प्रतन्यते ।।
सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन ।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ।।

ध्वन्यालोक, कारिका २, ३, ८ ।

स्वग्रन्थस्य ध्वन्यालोकस्य प्रथमालोके लेखेनानेन शब्दार्थयोरुभयोः काव्यत्वम्, सहृदयश्लाघ्यस्य प्रतीयमानस्य रसादेस्तथा तथाविधस्यैव सहृदयश्लाघ्यस्य गुणालंकारादिपरिष्कृतस्य वाच्यार्थस्य चापि काव्यात्मत्वमसूचयत् ।

वक्रोक्तिजीवितकारः श्रीकुन्तकः—

शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि ।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि ।।

वक्रोक्तिजी० १।८।

इत्युक्त्वा सहितयोरेव शब्दार्थयोः काव्यत्वमङ्गीचकार । यत्तु दर्पणकृत्—'एतेन वक्रोक्तिः काव्यजीवितम् इति वक्रोक्तिजीवितकारमतं परास्तम् । वक्रोक्तेरलंकाररूपत्वात्' इत्युक्त्वा श्रीकुन्तकस्य मतं प्रत्याचष्ट तदपष्ठु । मूलग्रन्थमनवलोक्यैव तेनेयं समीक्षाकारीति प्रतीमः । श्रीकुन्तकाभिमता वक्रोक्तिः—

अन्यस्यान्यार्थकं वाक्यमन्यथा योज्यते यदि।
अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा ।।
सा० द० १०।९।।

इत्युक्तलक्षणाद् वक्रोक्त्यलंकारात् सर्वथा भिन्ना। अस्यां लक्षणाव्यञ्जनारसशब्दार्थालंकारगुणादीनां सर्वेषामन्तर्भावात्। तदुक्तम् तत्रैव—उभौ (शब्दार्थौ) एतावलंकार्यौ तयोः पुनरलंकृतिः। वक्रोक्तिरेव वैदग्ध्यभङ्गी भणितिरुच्यते। वक्रो० जी० १।११।।

तथा—

वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।
यत्रालंकारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति ।।
वक्रो० जी० १।२१।।

वक्रोक्तिजीविते हि मुख्यतया परिभाषाभेदो विषयप्रतिपादनशैलीभेदश्च काव्यप्रकाशादिभ्यो भेदहेतुर्न विषयभेदः।

'रीतिरात्माकाव्यस्य' इति श्रीवामनपक्षोऽपि न क्षोदक्षमः। रीतेः पदसंघटनामात्रत्वात् बहिरङ्गता। न हि शरीरावयवसंस्थानविशेष आत्मा भवितुमर्हति, इति दर्पणकृतस्तात्पर्यम्। अत्र काव्यप्रकाशकृतोऽयमाशयः। श्रीवामनस्तावत् गुणविशिष्टपदरचनारूपां रीतिं काव्यस्यात्मत्वेनाङ्गीकरोति। रीतिश्च वैदर्भी-गौडी-पाञ्चालीभेदेन त्रिविधा। तासु वैदर्भी सर्वगुणोपेता, इतरे तु न तथाविधे। समग्रगुणोपेता वैदर्भी, ओजःकान्तिमती गौडी, माधुर्यसौकुमार्योपपन्ना पाञ्चाली। वामनाभिमता दश शब्दस्य, दश चार्थस्येति मिलिता विंशतिर्गुणाः। ते च—

ओजः प्रसादः श्लेषश्च समाधिसमते तथा।
माधुर्यं सौकुमार्यं च ततः परमुदारता।।
अर्थव्यक्तिश्च कान्तिश्च शब्दस्यैते गुणा दश।
गुणा दश तथार्थस्य तेऽपि पूर्वोक्तनामकाः।
उभयोर्नामसाम्येऽपि लक्षणं तु पृथक् पृथक् ।।

अत्र श्रीमम्मटः पृच्छति—किं समस्तैर्गुणैरुपेतया रीत्या काव्यत्वम् उत कतिपयैः? यदि समस्तैस्तर्हि कथमसमस्तगुणया गौड्या पाञ्चाल्या वा काव्यव्यवहारः? अथ कतिपयैः? ततः—'अद्रावत्र

प्रोज्ज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः ।' इत्यादौ त्वदभिमतैरोजः प्रभृतिभिर्गुणैः काव्यत्वव्यवहारः प्रसज्येत । न चेष्टापत्तिः । किंच—

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।
अस्या रदच्छदरसो न्यक् करोतितरां सुधाम् ।।

इत्यत्र विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारप्रवर्त्तकौ । अतो रीतेः काव्यात्मत्वं नोपपन्नम् ।।

अथ तत्काव्यं किं स्वरूपम् इत्यपेक्षायां सामान्यपरिचयप्रदानपूर्वकं तल्लक्षणमुच्यते—

**कृतिस्तु शब्दार्थमयी कलायाः**
**परेषु या तां तनुतेऽनुभूतिम् ।**
**प्रवर्त्तते तत्र कविर्ययैव**
**तां नाम काव्यं प्रवदन्ति सन्तः ।।६।।**

**रसभावचमत्कारान्यतमप्राणपेशलः ।**
**काव्यं शब्दार्थसन्दर्भोऽलौकिकानन्दसुन्दरः ।**
**सगुणालंकृतिः प्रीत्यै यथा, दोषैस्तथा न सः ।।**
**रसवर्ण्यानुरूपा च रीतिस्तत्रोपकारिणी ।।७।।**

सा शब्दार्थमयी कलाकृतिः किल काव्यपदवाच्या या परेषु-सहृदयेष्वित्यर्थः । तामेवानुभूतिं रतिशोकभयादिरूपां तनोति यया प्रेरितः कविः कवित्वे प्रवर्तते । किन्तु काव्यपठनादिना जायमाना सहृदयस्यानुभूतिः शोकभयविस्मयादिविविधरूपा अतः कदाचिद्दुःखात्मिकापि सती सर्वदा सुखच्छायाविच्छादितैव भवतीति तस्याः कवेरनुभूतेश्च कश्चन भेदः । अतः श्रीकालिदासेनापि रघुवंशे उक्तम्— "निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ।" शोकेन प्रणुन्नो ह्यादिकविः सुखमयं काव्यं प्रणिनाय ।

आत्माभिव्यक्तये स्फुरन्ती भावना यावत् काव्ये प्रकाशं नासादयति तावत् कविहृदयं विश्रामं शान्तिं वा न लभते । इदं रहस्यं श्रीकालीदासो यथा—

रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ।। रघुवं० १।९।।

इत्युक्त्वा प्रकटयाञ्चकार।

तथा श्रीतुलसीदासः—"स्वान्त.सुखाय तुलसो रघुनाथगाथाभाषानिबन्धमतिमञ्जुलमातनोति ॥" इत्यभिधाय । प्रसववेदनां सुतोत्पादनसुखं चेत्युभयं जननीव कविरपि काव्यनिर्माणक्लेशं कर्तृत्वलाभाह्लादं चेति द्वयमनुभवति । उत्पादनं विना प्रसववेदना न शाम्यति । एतदेव कवेः स्वान्तःसुखम् ।

सहृदयस्यानुभूतिस्तु सुखमयी एवेत्युक्तं प्राक् । तस्य काव्यानन्दः खण्डमयक्रीडनकास्वादसदृशः । अतः करुणरसाद्यात्मकमपि काव्यं तथा सुखदं यथा खण्डमयक्रीडनकम्, आकृत्या गजतुरगादिरूपमपि आस्वादे मधुरमेव ।

किं च, स शब्दार्थसन्दर्भः काव्यमुच्यते यो रसभावचमत्कारान्यतमप्राणपेशलः स्यात् । रसाः शृङ्गारादयः । भावा देवादिविषयकरत्यादिरूपाः वक्ष्यमाणाः । चमत्कारः शब्दार्थालंकारादीनां कुशलप्रयोगजन्या चित्तचमत्कृतिः । एतेषामन्यतमः कोऽपि प्राणाः—प्राणप्रदधर्मा इव, तैः पेशलः । चमत्कारकथनात् रसादिरहिताया अपि सहृदयहृदयाह्लादकारिण्या रचनायाः काव्यत्वं प्रतिपादितम् । शब्दार्थरसादिग्रहणेन च नादप्रधानस्य संगीतस्य इतरासां वास्तुमूर्तिचित्रकलानां च व्यवच्छेदः । तं सन्दर्भं पुनर्विशिनष्टि—अलौकिकानन्दसुन्दरः इति । एतेन लौकिकस्य रूपरसाद्यात्मकस्य स्थूलविषयकसुखस्य, 'पुत्रस्ते जातः, धनं ते दास्यामि' इत्यादिश्रवणजन्यस्य आशाद्यात्मकमानसिकसुखस्य च निरासः ।

स्वप्रयोगशालायामनुसन्धानरतो वैज्ञानिको नवाविष्कारसाफल्येन, दार्शनिकश्च स्वाध्यायकक्षे गम्भीरचिन्तननिमग्नोऽभिनवतथ्यप्रकाशेन यमानन्दमनुभवति सोऽलौकिकोऽपि सन् न काव्यानन्दवत्सुन्दरो न च तत्र तदा काव्यानन्दवत् निजव्यक्तित्वहानेऽपि साधारणीकरणम् । वैज्ञानिकदार्शनिकादीनामानन्दो वैषयिकानन्दाद् भिन्नः । तत्रानन्दांशे सत्यपि ज्ञानस्य प्राधान्यम् । काव्यानन्दस्तु ततोऽपि भिन्नः । अत्र विभावानुभावादिज्ञानांशे सत्यपि आनन्दांशस्य प्राधान्येनानुभूयमानत्वात् । अलौकिकोऽयं काव्यानन्दो हृदयानन्द इत्यपि वक्तुं शक्यः । अस्यालौकिकत्वं च वैषयिकसुखाद् विलक्षणत्वमात्रम् । न हि लोके भवन्नलौकिकः स्यात् ।

रसस्य नालोकभवत्वरूपम्
अलौकिकत्वं सुधियामभीष्टम् ।
परन्तु रूपाद्यनुभूतितस्तद्
विलक्षणत्वं ह विभावनीयम् ॥

किं च—

प्रत्यक्षत्रिषत्वेऽपि रसस्याग्राह्यता तु या ।
षड्विधैर्लौकिकैः किं चालौकिकैस्त्रिविधैरपि ॥
व्यापारैर्यच्च दुःखस्य हेतुभ्योऽपि सुखात्मता ।
रूपाद्यनुभवात्तस्य वैलक्षण्यमिदं स्फुटम् ॥

पूर्वोक्तेभ्य एभ्यः सर्वेभ्योऽपि योगिनामात्मानन्दो ब्रह्मानन्दो वा विद्यते । आत्मन्येव निजस्वरूपस्य तस्य प्रकाशनात् । तदुक्तं गीतायाम् —

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्योबुद्धेः, परतस्तु सः ॥३।४२॥

आत्मानन्दे बाह्यस्य विषयस्य रूपरसादेः, चिन्तनीयस्य मानसविषयस्य, विभावानुभावादेस्तद्ग्रहणनिमित्तस्य बुद्धितत्त्वस्याप्यभाव इति एषां परस्परभेदः ।

उक्तलक्षणः सन्दर्भो गुणालंकाररीतिभिरुपस्कृतः यथा प्रीत्यै सहृदयानामाह्लादाय भवति न तथा दोषोपेतः, स प्रत्युतोद्वेगः तदुक्तम् —'स्याद् वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ।' स्वल्पदोषेण तस्य काव्यत्वं कामं न व्याहन्येत तदपकर्षस्तु भवत्येवेति तत्परिहाराय कविना यथाशक्ति प्रयतितव्यम् । गुणाः प्रसादादयः प्रसिद्धाः यथावसरं वक्ष्यन्ते । ते च पुंसः शौर्यादय इव काव्यात्मभूतस्य रसादेरुपकारकाः स्थायिनो धर्माः । अलंकारा अनुप्रासोपमादयः शब्दार्थद्वारेण काव्यस्योत्कर्षवर्धकाः कटककुण्डलादिवत् । न चैते नित्याः । कदाचिदेषामभावे ऽपि न काव्यत्वक्षतिः । रसविषयानुकूला वर्णानां पदानां वाक्यानां च संघटनारूपा रीतिः । सापि देहे अवयवानां शोभनानुपातेन विन्यास इव काव्यस्योपकर्त्रीत्येतावतैवात्र संतोष्टव्यम् ।

ऋग्वेदान्तर्गतदशममण्डलस्य त्र्यधिकैकशततमं समग्रं सूक्तं वीररसकाव्यम् । युद्धार्थं सेनासन्नाहसमये राजपुरोहितः सेनाया मनोबल-

वर्धनाय इन्द्रस्य स्वनृपतेः सामर्थ्यं रणकौशलं सर्वदा समरसज्जतां शत्रून् प्रति भीषणतां च वर्णयन् स्तौति—

आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः ॥१॥

अस्य मन्त्रस्य इन्द्रो देवता । इन्द्रपदमत्र नृपतिपरम्, तस्य परमैश्वर्यशालित्वात् । ऐश्वर्यार्थकाद् इदिधातोः रन्प्रत्यये रूपम् ।

अयमिन्द्रः आशुः=क्षिप्रकारी । शिशानः=तीक्ष्णतेजाः तीक्ष्णप्रज्ञो वा । वृषभो न भीमः=वृषभ इव रिपूणां त्रासकरः । घनाघनः=शत्रूणाम् अतिशयेन घातकः । चर्षणीनां क्षोभणः=रिपुजनानां क्षोभजनकः । संक्रन्दनः=प्रत्यर्थिनां क्रन्दयिता । यस्याक्रमणमसहमानास्ते क्रन्दन्तीत्यर्थः । अनिमिषः=निमेषरहितः । निमेषवतो निमेषराहित्यमनुपपद्यमानं तस्य सर्वदा जागरूकतां समरसज्जतां च व्यनक्ति । एकवीरः=अप्रतिहतपराक्रमः । शतं सेनाः साकम् अजयत्=संभूय समागतानि शत्रूणाम् अनेकान्यनीकानि जयति । जेतुं क्षम इत्यर्थः ।

एतेन भाविसमरे युष्माकं विजयो ध्रुव इत्यपि व्यज्यते ।

आशुः—कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उणादि—१।१) इत्यौणादिकेन सूत्रेण अश्नोतेः उणप्रत्यये रूपम् । वृषभो वर्षणात् । स्वजनेषु कामान् रिपुषु शस्त्राणि वर्षतीति तात्पर्यम् । घनाघनः—हन् धातोः हन्तेर्घत्वं चेत्यनेन घत्वम् अभ्यासस्य । चर्षणिपदं निघण्टौ पुरुषनामसु पठितम् ।

आशुः शिशान इत्यत्र शकारस्य अनेकावृत्तेर्वृत्त्यनुप्रासः । घनाघन इत्यत्र द्वयोर्वर्णयोस्तेनैव क्रमेण सकृदावृत्तेश्छेकानुप्रासः । वृषभ इव क्षोभण इत्यत्र **उपमा** ।'न' पदमुपमार्थकं वेदे । संक्रन्दनः इन्द्र इति **पुनरुक्तवदाभासः** । आपाततः पौनरुक्त्यप्रतीतेः पर्यवसाने तु संक्रन्दनः=रिपुकृतक्रन्दनानां प्रयोजकः । अत्र शत्रुसेनाशतम् **आलम्बनविभावः** । तस्य संभूयाक्रमणम् **उद्दीपनम्** । इन्द्रगत उत्साह **स्थायिभावः** । तस्य वृषभवद्गर्जनं शत्रुसेनायाः क्षोभणम् प्रत्याक्रमणादिकं च **अनुभावाः** । आवेगोग्रतादयः **संचारिणः** । एषां सर्वेषां संयोगात् सहृदयेषु वीररसानुभूतिर्जायते ।

प्रथममन्त्रे इत्थमिन्द्रस्य वलपौरुषजागरूकतादिगुणान् प्रशस्य स ततः सेनानायकान् सैनिकाँश्च समुत्साहयति—

**संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण, दुश्च्यवनेन धृष्णुना ।**
**तदिन्द्रेण जयत तत् सहध्वं, युधो नर इषुहस्तेन वृष्णा ॥२॥**

पूर्वोक्तेन संक्रन्दनेन=रिपूणां रोदयित्रा, अनिमिषेण=सततजागरूकेण, जिष्णुना=जयनशीलेन । युत्कारेण=योधनं युत् तत्कारिणा युत्कारेण । दुश्च्यवनेन =स्वपदाच्च्यावयितुं दुःशकेन । धृष्णुना=धर्षणशीलेन । इषुहस्तेन=इषुर्हस्ते यस्य तथाविधेन । इह इषुः सर्वायुधानामुपलक्षणम् । वृष्णा=प्रजासु कामवर्षिणा । तेन इन्द्रेण नेत्रा संचालिताः यूयम् । युध्यन्त इति युधो योद्धारः । नरः=नृत्वाभिमानयुक्ताः । तत्=युद्धायोद्यतं शत्रुवलं जयत । तत् सहध्वम् प्रतिरुद्धं च कुरुत ।

जिष्णुः—ग्लाजिस्थश्च ग्स्नुः (पाणिनि ३।२।१३९), जि जये धातोः ग्स्नुप्रत्यये रूपम् । धृष्णुः=त्रसिगृधिधृषिक्षिपेः क्नुः (पाणिनि ३।२।१४०) । संक्रन्दनेन दुश्च्यवनेन जिष्णुना इन्द्रेणेत्यत्र पूर्ववत् **पुनरुक्तवदाभासालंकारः** । एषां सर्वेषामिन्द्रार्थकत्वात् आपाततः पौनरुक्त्यप्रतीतिः । तस्यैवार्थस्य पुनरुक्तिर्वृथेत्यनुपपद्यमाना सा पर्यवसाने व्युत्पत्तिलभ्यानर्थानुपस्थापयति । 'इन्द्रो मरुत्वान् मघवा जिष्णुर्लेखर्षभः। शक्रः··· संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः····'इत्यमरः । इत्थं च संक्रन्दनादिपदानामिह विशेषणत्वे व्यवस्थिते तेषां साभिप्रायत्वात् **परिकरालंकारः** । "उक्तैर्विशेषणैः साभिप्रायैः परिकरो मतः" इति तल्लक्षणात् ।

एवम्—

**बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः ।**
**अभिवीरो अभिसत्त्वा सहोजा जैत्रमिन्द्ररथमातिष्ठ गोवित् ॥५॥**

बलविज्ञाय इति—स्वस्य परस्य च बलाबलं विशेषेण जानातीति तथाविधः । स्थविरः=स्थिरप्रकृतिः, न तु चञ्चलस्वभावः । सहस्वान्=शक्तिमान् । वाजी=प्रबलवेगेन प्रहर्त्ता । उग्रः=प्रखरप्रतापः। अभिवीरः=अभिगताः अनुकूलाः वीराः सैनिकाः यस्य । अभिसत्त्वा=अभिमुखाः सत्त्वानः प्राणिनः प्रजाजनाः यस्य । अथवा सत्वन्=

उत्साहः वर्धितोत्साह इत्यर्थः। सहोजाः=सहसो बलाज्जात इति सायणः। अथवा—ओजसा सह सहोजाः। 'सहौजाः' इति प्राप्ते पररूपत्वं छान्दसम्। गोवित्=बहुविजितगवाश्वादिधन इत्यर्थः। उक्तगुणगणविशिष्ट हे इन्द्र त्वं प्रयाणाय जैत्रं जयहेतुं रथं स्यन्दनम् अतिष्ठ आरोह।

अनयोर्मन्त्रयोरपि वीरो रसः। अत्र राज्ञ उत्साह स्थायिभावः। अस्य विभावानुभावादयो यथायथं पूर्ववदूह्याः।

देवादिविषया रतिर्भावः। तत्प्रधानं काव्यं भावकाव्यम्। भावस्य विशदविवेचनं परस्तात् विधास्यते। अथ भावकाव्यस्योदाहरणम्—

**यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने।**
**यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम॥**

ऋग्० १०।१२१।६॥

अस्य मन्त्रस्य ऋषिः स्वयम्भु ब्रह्म। देवता परमात्मा। छन्दस्त्रिष्टुप्।

यं क्रन्दसीति—अवसा तस्तभाने क्रन्दसी यस्य सामर्थ्येन रक्षणेन वा निरवलम्बेऽम्बरे विष्टब्धे द्यावापृथिव्यौ, तात्स्थ्यलक्षणया तत्रस्थाः प्राणिनः। रेजमाने=भयेन वेपमाने इव। द्यावापृथिव्योः भयासम्बन्धेऽपि सम्बन्धवर्णनात् सम्बन्धातिशयोक्तिः। एतेन परमात्मनोऽलौकिकः प्रभावो व्यज्यते। तदुक्तम्—

"भयादस्याग्निस्तपति भयात्तपति सूर्यः।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः॥" कठोप० ६।३॥

मनसा अभ्यैक्षेताम् पश्यतः, न तु बाह्यचक्षुषा, तस्य बाह्येन्द्रियाग्राह्यत्वात्। यत्र च सूरः सूर्यः अभ्युदितो विभाति=यस्य शक्त्या नभसि भानुरभ्युदितः प्रकाशते। तथाविधाय कस्मै देवाय निरूपाख्यरूपाय भगवते हविषा विधेम? आत्मसमर्पणरूपेण हव्येन परिचरेम? तदुत्तरमप्यत्रैव—कस्मै=सुखस्वरूपाय ब्रह्मण इति लभ्यते।

को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे।
कामग्रन्थौ चक्रिणि च पतत्त्रिणि च पार्थिवे।
मयूरेऽग्नौ न पुंसि स्यात् सुखशीर्षजलेषु कम्॥ इति मेदिनी

ब्रह्म-सुखाद्यर्थकस्यापि कस्मै पदस्य सर्वनामत्वं छान्दसम्। अत्र

भगवति भक्तिर्भावः। तत्प्रधानस्यास्य कृत्स्नस्यापि सूक्तस्य भाव-काव्यत्वम्।

अपि च—

यस्यां पूर्वे पूर्वजना विचक्रिरे यस्यां देवा असुरानभ्यवर्तयन्।
गवामश्वानां वयसश्च विष्ठा भगं वचः पृथिवी नो दधातु ॥५॥

यां रक्षन्त्यस्वप्ना विश्वदानीं देवा भूमिं पृथिवीमप्रमादम्।
सा नो मधु प्रियं दुहामथो उक्षतु वर्चसा ॥७॥

उपस्थास्ते अनमीवा अयक्ष्मा
अस्मभ्यं सन्तु पृथिवी प्रसूताः।
दीर्घं न आयुः प्रतिबुध्यमाना
वयं तुभ्यं बलिहृतः स्याम ॥६२॥

अथर्ववेदीयद्वादशकाण्डस्थपृथिवीसूक्तस्यैते मन्त्राः।

अत्र—ऋषिः—अथर्वा। देवता—भूमिः। छन्दः—५। विराट्-त्रिष्टुप्, ७— प्रस्तारपङ्क्तिः, ६२—विराट्-त्रिष्टुप्।

यस्यां पूर्वे इति— यस्यां मातृभूमौ नः पूर्वे पूर्वजना विचक्रिरे= पूर्वापरसन्ततिपरम्परया सदा प्रथमं पूर्वोत्पन्नास्ततस्तेषामपत्यानि तद-नन्तरं तेषामपीति क्रमशो विविधानि यशस्कराण्यवदानानि चक्रुः कुर्वन्ति करिष्यन्ति च। यस्यां देवाः=देवोचितगुणाः, द्योतनशीला-स्तेजस्विनो जनाः। असुरान्=असुरप्रकृतीन् दुष्टान् स्वार्थाय परपीडा-रतान्। असुराः—असुषु रमन्ते इति। अभ्यवर्तयन्ः=प्रतिरुरुधुः, प्रति-रुन्धन्ति, प्रतिरोत्स्यन्ति च। या भूमिः गवां=गवाश्वादीनामुपयोगि-पशूनां, वयसः=विविधपक्षिणां च, विष्ठा=विशेषेण स्थितिस्थानम्। यत्र सर्वे प्राणिनः सुखेन जीवन्तीत्यर्थः। सा अस्मासु भगम्=ऐश्वर्यम्—

'ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥'

वर्चः=बलं तेजो वा दधातु। वेदस्य नित्यज्ञानविषयकत्वाद् अतीतघटनानां वर्णनं नास्ति। अतः प्रतीयमानो भूतकालोऽपि सर्व-कालवचनः। तेन 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक

आसीत्' ।(ऋ० १०।१२१।१) इत्यत्र 'आसीत्' पदम् अस्ति, भविष्यति चेत्यर्थयोरपि वाचकम् ।

यां रक्षन्तीति—पृथिवीम्=विस्तीर्णां यां भूमिम्, विश्वदानीम्=सर्वदा । अस्वप्ना देवाः=जागरूकास्तेजस्विनो रक्षकाः । अप्रमादम्=क्षणमपि प्रमादमकुर्वाणाः, सततं बाह्याभ्यन्तरशत्रुभ्यो रक्षन्ति । सा नः=अस्मभ्यम् । प्रियं मधु दुहाम्=अभीष्टान् हितकारिणश्च भोग्य-पदार्थान् पूरयतु । वर्चसा=तेजसा बलेन च उक्षतु=सिञ्चतु । अस्वप्ना देवाः इत्यत्र **पुनरुक्तवदाभासोऽलंकारः** । 'आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः' इत्यमरः । एतेनापाततः पौनरुक्त्य-प्रतीतेः । पर्यवसाने तु अस्वप्नाः=स्वप्नरहिताः अप्रमाद्यन्त इत्यर्थः, इति विशेषणतया परिणमनात् पौनरुक्त्यपरिहारः । मधुपदेन सर्वेऽपि प्रिया भोग्यपदार्थाः लक्ष्यन्ते, न क्षौद्रमात्रम् । अत्र मुख्यार्थबाधा-भावेऽपि **तात्पर्यानुपपत्तिरूपा लक्षणा** । 'दुहाम्' इति पदस्यार्थेन दोहन-व्यापारेण भूमौ गोत्वव्यवहारसमारोपात् **समासोक्तिरलंकारः** । 'समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः' इति तल्लक्षणात् ।

उपस्थास्ते इति—हे पृथिवि ! ते प्रसूताः=त्वयोत्पादिताः, अनमीवाः=रोगरहिताः । अयक्ष्माः=सर्वदा अक्षीणाः अर्थात् अतिप्रचुराः भोगयोग्या घृतदुग्धफलान्नादिपदार्थाः । नः उप+स्थाः=अस्माकम् आसन्नाः सुलभा सन्तु इत्यर्थः । कस्यापि वस्तुनोऽभावोऽस्मान्न पीडयेत् । तेन च नः आयुर्दीर्घं शताधिकवर्षं भूयात् । वयं प्रतिबुध्यमानाः=स्वमातृभूमिं प्रति निजकर्त्तव्यं सम्यग् जानन्तः । तुभ्यं बलिहृतः स्याम=अवसरे समुपस्थिते तव रक्षार्थं निजजीवनमपि समर्पयितुमुद्युक्ता भवेम ।

अत्र पृथिवीसम्बन्धे 'प्रसूताः, इति वचनेन तस्यां मातृव्यवहार-समारोपात् **समासोक्तिः**। तल्लक्षणमुक्तं प्राक् । 'षूङ् प्राणिगर्भविमोचने' इति धातोर्मुख्यार्थः गर्भस्थजन्तोर्मातुरुदरात् बहिरागमनरूपः प्रसवोऽस्ति । स च मातुः कर्म । तस्य पृथिव्यामारोपात् प्रस्तुतेऽप्रस्तुतस्य व्यवहारसमारोपः । अत्रापि मातृभूमिं प्रति भक्तिभावः । तेन सर्वमिदं सूक्तं भावकाव्यम् ।

तथा—

**सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।**
**अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥**
ऋग्० १०।७१।२।

देवता—ज्ञानम् । ऋषिः—बृहस्पतिराङ्गिरसः । छन्दः—जगती ।

सक्तुमिवेति—यत्र=यस्मिन् विद्वत्समवाये । धीराः=स्थिर-प्रकृतयः पण्डितप्रवराः । तितउना सत्तुमिव मनसा=उचितानुचित-विवेचनक्षमेण चेतसा, पुनन्तः=कर्त्तव्याकर्त्तव्ययोर्विश्लेषणं कुर्वन्तः । वाचमक्रत=शब्दान् प्रयुञ्जते । अत्र=एतद्विधे सत्समागमे समवेताः । सखायः=समानख्यानाः,=कस्यापि सदुक्तिमाकर्ण्य मुक्तकण्ठेन संभूय साधुवादं ददानाः पुरुषाः, सख्यानि मिथो मतभेदेपि सद्भावं जानते=अनुभवन्ति, न च वृथा कलहायन्ते । अत एषां वाचि भद्रा=लोक-कल्याणकारिणी लक्ष्मीः=सौमनस्यसमृद्धिः । अधिनिहिता भवति । तेषां वचनं समाजस्य सुखसंपदभिवृद्धये भवति, न तु वैरविरोधवृद्धये । तदुक्तं श्रीभवभूतिना—

कामं दुग्धे विप्रकर्षत्यलक्ष्मीं, कीर्तिं सूते दुर्हृदो निष्प्रहन्ति ।
शुद्धां शान्तां मातरं मङ्गलानाम्, धेनुं धीराः सूनृतां वाचमाहुः' ॥
इति ।

सक्तुमिवेत्युपमा । वाचि लक्ष्म्याः अवस्थानमनुपपद्यमानं तस्या अतिशयेन सुखसमृद्धिवृद्धिकृत्त्वं व्यनक्ति इति प्रयोजनवती लक्षणा । सख्यं=शरीरभेदेऽपि समप्राणत्वम् । तदुक्तम्—

अत्यागसहनो बन्धुः सदैवानुगतः सुहृत् ।
एककार्यं भवेन्मित्रं समप्राणः सखा मतः ।।इति ।

अत्र ज्ञानिनः प्रति रतिभाववर्णनास्य भावकाव्यत्वम् ।

अथार्थचित्रम्—

**तन्त्रमेके युवती विरूपे, अभ्याक्रामं वयतः षण्मयूखम् ।**
**प्रान्या तन्तूंस्तिरते धत्ते अन्या, नाप वृञ्जाते न गमातो अन्तम्॥**
**तयोरहं परिनृत्यन्त्योरिव, न वि जानामि यतरा परस्तात् ।**
**पुमानेनद् वयत्युद् गृणत्ति, पुमानेनद् वि जभाराधि नाके ॥**

अथर्ववेदे काण्डो दशमः, सप्तमसूक्तस्य मन्त्र ४२, ४३। ऋषिः—अथर्वा। देवता—स्कम्भः। छन्दः—त्रिष्टुप्।

तन्त्रमिति—द्वे विरूपे युवती एकं तन्त्रम् अभ्याक्रामन् षण्मयूखं वयतः। द्वे विभिन्नवर्णे श्वेतश्यामरूपे नार्यौ एकं वम्त्रवयनसाधनभूतं वेमानम् अधिष्ठाय षण्मयूखं षड्वर्णं वस्त्रमित्यध्याहार्यम्। वयतः=रचयतः। मयूखपदमिह रश्मिवाचकमपि वर्णपरकम्। तयोर्युवत्योरन्या=एकेत्यर्थः। तन्तून्=वस्त्रस्य समवायिकारणभूतानि सूत्राणि, प्रतिरते=विस्तारयति। अन्या च अपरान् तन्तून् तेषु यथास्थानं धत्ते। अथवा निर्मितपटांशं संवेष्टच निदधाति। इत्थं स्वव्यापारप्रवृत्ते ते कदापि तत्कर्म नापवृञ्जाते त्यजतः, न च गमातो अन्तम्=न च तस्य व्यापारस्यावसानमाप्नुतः। अत्र द्यावापृथिवी—नक्तंदिवषड्ऋतुमयसंवत्सर-क्षणरूपान् विषयान् निगीर्य तेषां तन्त्र-युवतीद्वय—षड्वर्णवस्त्रतन्तुरूपविषयिभिरभेदाध्यवसानाद् **अभेदातिशयोक्तिरलंकारः**। निरन्तरव्यापारप्रवृत्तयोरपि तयोस्तदन्तगमनाभाववर्णनात् सति हेतौ फलाभावरूपां **विशेषोक्तिमुत्थापयति**।

तयोरहमिति मण्डलके प्रवृत्तनृत्तयोरिव तयोर्दिवसरजन्योः कतरा परस्तात् कतरा च पुरस्तात् इति नाहं वेद्मि। चेतनकार्यस्य नृत्यस्याभावेऽपि तत्संभावनया उत्प्रेक्षा सा चानुक्तविषया। प्रातःसायं विविधमनोरमरागरञ्जिताम्बरयोस्तयोः परितश्चारु चङ्क्रमणरूपस्य विषयस्येहानुपादानात्। पुमानेनद् वयत्युद्गृणत्ति—पूर्वोक्तं तद्वस्त्रं कश्चिदलक्ष्यः स्कम्भाख्यः पुरुषो वयति=युवतिद्वयद्वारा तन्निर्माणे प्रयोजकतां प्रयाति। स एव तदुत्थाप्य अधिनाके विजभार=अन्तरिक्षादिषु सर्वत्र विस्तारयति। अर्थात् दिवसरजन्यौ स्वशक्त्या कालनिर्माणाय न क्षमे। विश्वात्मा पुरुष एव कालस्य निर्माता, स एव जिज्ञासितव्यः। अत्रापि पूर्वानुवृत्तातिशयोक्तिस्तदुत्थापितोत्प्रेक्षा च चमत्कारकारणम्। स्कम्भम्प्रति रतिः कथंचिद् विद्यमानापि चमत्कारेण तिरोधीयते। तस्मादिद चमत्कारप्राणं चित्रकाव्यम्॥

अपि च—

**नीचा वर्तन्त उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते।**

**दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति ॥**

ऋग्वेदस्य १०ममण्डले—३४।९।

देवता—अक्षाः । ऋषिः—कवष ऐलूषः । छन्दस्त्रिष्टुप् ।

नीचा इत्यादि—एते अक्षाः द्यूतक्रीडनसाधनविशेषाः । नीचा वर्तन्ते=क्रीडनकपट्टकेऽधो न्यस्ताः सन्ति, तथाप्युपरि स्फुरन्ति=उच्चैरुत्पतन्ति । पराजयभीतानां पराजितामेव वा कितवानां मूर्द्धानमधिरोहन्ति, तं परवशं कुर्वन्तीत्यर्थः । अहस्तासो हस्तवन्तं सहन्ते=स्वयं हस्तरहिता अपि पाणिपादादिमन्तं कितवं धर्षन्ति । एते दिव्या अङ्गारा=अद्भुता अङ्गाराः सन्ति । अक्षेषु दिव्याङ्गारत्वारोपादधिकारूढवैशिष्ट्यरूपकम् । साधारणाङ्गाराः शीताः सन्तो न निर्दहन्ति । एते तु तद्विपरीताः । इरिणे न्युप्ताः=अपार्णे जलरहिते प्रदेशे समुत्पन्नाः, अत एव नितरां दाहजनकाः । कितवस्य हृदयं शोकाग्निना निर्दहन्ति सर्वथा भस्मसादिव कुर्वन्ति ।

नीचा वर्त्तन्त उपरि स्फुरन्ति—इति नीचैः क्षेपणक्रियाया उपरिस्फुरणक्रियया आपातेन विरोधः । स च पर्यवसाने—अधः क्षिप्ता अप्येते स्वप्रभावेण कितवस्य हृदयं मस्तिष्कं वाभिभूतं कुर्वन्तीति योजनया परिहृतो भवति । इह हस्तरहितानामपि हस्तवतः प्रतिरोधवर्णने—'हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा (विभावना) मता । अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः' (कुवलयानन्दे ७८) इत्युक्तलक्षणो **विभावनालंकारः** । न चात्र व्यतिरेकः । अक्षकितवयोरुपमानोपमेयभावाऽभावात् । शीतलाक्षाणां हृदयदाहोत्पत्तिहेतुत्ववर्णनाच्च—'विरुद्धकार्यसंपत्तिर्दृष्टा काचिद् विभावना । शीतांशुकिरणास्तन्वीं हन्त सन्तापयन्ति ताम्' (कुवलयानन्दे ८१) इत्युक्तस्वरूपो **विभावनालंकारः** । दर्पणकारमतेन तु—'गुणक्रिये वा चेत् स्यातां विरुद्धे हेतुकार्ययोः । यद्वारब्धस्य वैकल्यमनर्थस्य च संभवः । विरूपयोः संघटना या च तद्विषमं मतम् ।' इत्यनुसारं शीतगुणाद् दाहोत्पत्तिरूपविरुद्धक्रियावर्णनाद् **विषमः** ।

अहस्तासः——इत्यत्र आज्जसेरसुक् (पाणिनि ७।१।५०) इत्यनेन जसि परतोऽसुक् । न्युप्ताः——निपूर्वकात् 'वप् बीजसन्ताने' धातोः क्तप्रत्यये रूपम् । पार्थिवानामक्षाणां दिव्यत्वकथने**ऽतिशयोक्तिः** । सर्वत्र नकारतकारयोः संयुक्तयोस्तेनैव क्रमेण असकृदा-

वृत्त्या वृत्यनुप्रासः । इह कितवस्य विषादव्यञ्जनया 'व्यभिचारी तथाञ्जितः' इत्युक्तलक्षणस्य भावस्य सत्त्वेऽपि तस्य अलङ्कारचमत्कारेण तिरस्कृतत्वाच्चित्रकाव्यता, न तु भावकाव्यत्वम् । इत्यलमतिविस्तरेण ।

**इति वैदिकसाहित्यसौदामिन्यां काव्यस्वरूपविमर्शो नाम द्वितीय उन्मेषः समाप्तः**

# तृतीय उन्मेषः

## शब्द-विमर्शः

द्वितीयोन्मेषे काव्यलक्षणसमीक्षायाम् 'शब्दार्थमयी कलाकृतिः काव्यम्' इत्युक्तम्[1]। कलाया लक्षणमपि "कलयति स्वसंपर्केण कमनीयं करोति" इति कृतपूर्वम्[2]। काव्यलक्षणकुक्षिस्थयोः शब्दार्थयोः स्वरूप-चिन्तनं सम्प्रति प्राप्तकालम्। तयोरपि शब्दस्य प्रथमबुद्धिविषयत्वात तं प्रस्तौति—

**शब्द-ब्रह्म परं ज्योतिर्येन विश्वं प्रकाशितम्।**
**न पुरः स्थितमप्यर्थं जनो जानाति यद् विना ॥१॥**

शब्दस्य ब्रह्ममयत्वं ज्योतिःस्वरूपत्वं च याज्ञवल्क्यो जनकं प्रति बृहदारण्यकोपनिषदश्चतुर्थाध्यायस्य प्रथमब्राह्मणे तृतीयब्राह्मणे च क्रमेण—"अयं लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राट प्रज्ञायन्ते। वाग्वै सम्राट् परमं ब्रह्म" इत्यनेन "अथास्तमितं आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते, शान्तेऽग्नौ किंज्योतिरेवायं पुरुषः इति ? वागेवास्य ज्योतिर्भवति" इत्यनेन चोपदिदेश। सा च वाक् शब्दमयी, सैव च भाषा। तदुक्तममरेण—ब्राह्मी तु भारती भाषा गीर्वाग् वाणी सरस्वतीति। ब्रह्मणः शक्तित्वं ब्राह्मीत्वम्। भाषा च—

**उच्चारणोपयोग्यङ्गैर्जनितः सार्थको नृणाम्।**
**भाषेति प्रोच्यते वर्ण-पद-वाक्यात्मको ध्वनिः ॥२॥**

**सा हि शब्दमयी सर्वव्यवहारप्रवर्तिका।**
**या व्यनक्ति मनोभावानमूर्तानपि मूर्तवत् ॥३॥**

भाषेयं सर्गादौ प्रथमं कथमाविर्बभूवेति बुभुत्सा। न च सा काक-दन्तसंख्याबुभुत्सावन्निष्प्रयोजना। तस्मादुच्यते—

---

१. द्र०—पृष्ठ २०, श्लोक ८। २. द्र०—पृष्ठ ६, पं० ७-८।

वर्णात्मक-गिरा मूर्तामूर्तभावप्रकाशिका ।
या शक्तिः सा मनुष्येषु विद्यते नान्यजन्तुषु ।।४।।

व्यञ्जयन्ति ध्वनेर्भेदैः कामक्रोधभयादिकान् ।
भावांस्तु प्राणिनोऽन्येऽपि न विचारान् कदाचन ।।५।।

मनुष्या अपि तां वक्तुं न क्षमन्ते तथा स्वयम् ।
जातमात्रो यथा बालः स्तन्यपाने प्रवर्तते ।।६।।

समाजे बालकः शब्दान् शृण्वंश्चेष्टा विलोकयन् ।
वृद्धानां व्यवहारेण वेत्ति भाषां शनैः शनैः ।।७।।

तस्मान्न सा मनुष्याणां तथा नैसर्गिकी क्रिया ।
यथा कोटखगादीनां गृहनीडादिर्निर्मितिः ।।८।।

सर्गादौ शिक्षकाभावे कथं प्रथममानवाः ।
आविश्चक्रुः स्वतो भाषां प्रश्नोऽयं समुपस्थितः ।।९।।

भाषाविज्ञानिनामत्रानेका विप्रतिपत्तयः ।
संक्षेपेण प्रदर्श्यन्ते प्रसङ्गात् तासु काश्चन ।।१०।।

तत्र विविधवादेषु प्रथमः समयवादः । समयः=संकेतः । तन्मूलको वाद इत्यर्थः ।

संपर्कसाधनाभावे जायमानां पदे पदे ।
अनुभूय जनैर्बाधां कथञ्चित् समयः कृतः ।।११।।

ध्वनिनाऽनेन बोध्योऽयमर्थोऽस्य बोधको ध्वनिः ।
एतद्रूपः स संकेतो भाषाया बीजतां गतः ।।१२।।

तत्रारुचिबीजम्--

गिरामुत्पत्तिसम्बन्धे वादः समयमूलकः ।
केषाञ्चित् संमतोऽप्येष परेभ्यो नैव रोचते ।।१३।।

तत्र हेतुः--

संपर्कसाधनाभावे कथं जनसमागमः ।
कथं मिथो विमर्शश्च, कथं समयसंभवः ? ।।१४।।

तथाविधं किमपि साधनं दुर्जनतोषणन्यायेन अभ्युपगम्येत चेत तर्हि तेनैव कार्यनिर्वाहे साधनान्तरगवेषणमनर्थकमिति प्रतिपादयति—

संपादितं च येनैतत् सर्वं तस्मिन्त्स्थिते सति ।
साधनान्तरलाभाय वृथा तेषां परिश्रमः ॥१५॥

अथ द्वितीयो भावाभिव्यञ्जनमूलकतावादः । भावाः मनोरागाः कामक्रोधादयस्तेषामपि व्यक्तये ये ध्वनयः स्वभावादेव मानवमुखादुद्भवन्ति, ते एव भाषायां मूलकारणमिति प्रतिपादयति—

भावाभिव्यञ्जनेच्छा ध्वनिषु बलवती स्वात्मनैव प्रकाशं,
प्राप्नोत्याश्चर्यपीडाप्रमदभयघृणाहास्यशोकातिरेके ।
भूयो भूयः प्रयुक्ता बहुभिरथजनैस्ते ध्वनीनां विशेषास्
तान् भावान् व्यञ्जयन्तः प्रतिजनसहजा यान्ति भाषाङ्कु
रत्वम् ॥१६॥

तत्र—

विस्मये स्यादहो, हास्ये आहाहा, भर्त्सने च धत् ।
वाह वाह प्रशंसायां, तिरस्कारे तु दुर्दुर ॥१७॥

ऊं ऊं ऊं रोदने, गर्वे हुम्, धिग् हर्षापमानयोः ।
घृणाभिव्यक्तये छी छी, विषादे हाय हाय च ॥१८॥

निर्गच्छन्तीदृशाः शब्दा ये पुंसां वदनात् स्वयम् ।
रागाभिव्यञ्जकास्तेभ्यो ह्याद्यभाषासमुद्भवः ॥१९॥

इह विषयवैशद्याय प्रत्यहं प्रयुज्यमानां लोकभाषायाः शब्दा अपि निर्दिष्टाः । क्वचित् सन्धेरभावश्च स्पष्टतार्थः । अयं वादोऽपि न विवादविरहितो यतः—

भाषाणामर्णवेऽनन्ते शब्दा एतादृशा अपि ।
बिन्दुवत् सन्त्यतो नास्य वादस्य सार्वभौमता ॥२०॥

किञ्च स्वाभाविकाः शब्दा अभविष्यन् यदीदृशाः ।
तर्हि सर्वासु भाषासु तेषां साम्यमदृश्यत ॥२१॥

तत्र तत्र परिवेशभेदेन यत् किञ्चिद् वैषम्येऽपि मानवप्रकृतेः प्रायः समानत्वात् तदभिव्यञ्जकध्वनिष्वपि सर्वत्र साम्याधिक्यमभविष्यदित्यर्थः । न च तथा दृश्यते ।

अथ भाषोद्भवविषये शब्दानुकरणमूलकतावादः प्रस्तूयते—

पशुपक्षिपदार्थानां संज्ञाः सन्त्यत्र भूयसाम् ।
तत्तच्छब्दानुकारिण्यो भाषासु विविधास्वपि ॥२२॥

तथा क्रियाभिधानानि व्यापारवाचकान्यपि ।
शब्दानुकृतिमूलानि पदानि सन्त्यनेकशः ॥२३॥

संज्ञाः=नाम पदानि, क्रियाभिधानानि=क्रियावाचकानि तिङन्त-पदानि, व्यापारवाचकानि=चीत्कारझङ्कारप्रभृतीनि व्यापारसूचकानि कृत्प्रत्ययान्तानि चेत्यर्थः ।

काककुक्कुटघूकाद्याः केकिचिल्लादयस्तथा ।
संज्ञास्तेषां ध्वनीनेवानुकृत्य विहिता जनैः ॥२४॥

पशुपक्षिनामान्युदाहृत्य जडपदार्थानां नामान्युदाहरति—

ढक्कादुन्दुभिघण्टादिपदार्थानां च नामसु ।
विलोक्यते तदुत्पन्नशब्दानुकृतिमूलता ॥२५॥

एवं काञ्चन-कांस्य-ताम्रादिपदेष्वपि तत्तद्धातूत्पन्नध्वनरनुकृतिः स्फुटा ।

अथ क्रिया उदाह्रियन्ते—

बुक्कन्ति कुक्कुरा, अश्वा ह्रेषन्ते, रेभते च गौः ।
दर्दुराष्टर्टरायन्ते, शूकरो घुर्घुरायते ॥२६॥

काकाः कायन्ति, कूजन्ति पिका, हुङ्कुरुते हरिः ।
ध्रेकते गर्दभः, कर्करेटू रटरटायते ॥२७॥

दन्ताः कटकटायन्ते, द्वारं खटखटायते ।
घण्टाद्याष्टंटनायन्ते, पताका फर्फरायते ॥२८॥

मञ्जु शिञ्जन्ति मञ्जीरा दुन्दुभिर्दुन्दुमायते ।
कनिक्रदति पर्जन्यस्तडित् तडतडायते ॥२९॥

अथ ध्वनिमनुकृत्य प्रवृत्तानि व्यापारवाचकानि कृदन्तपदानि—

एवं टङ्कारझङ्कारकुट्टनत्रोटनानि च ।
गर्जनस्फूर्जथुध्वानभाङ्काररणनान्यपि ॥३०॥

तथा चीत्कारसीत्कारहुङ्कारप्रभृतीन्यथ ।
नाना व्यापारवाचीनि कृदन्तानि पदान्यपि ॥३१॥

शब्दानुकृतिमूलानि विकीर्णानि सहस्रशः ।
प्रयुज्यन्ते यथाकामं तद्भाषाव्यवहारिभिः ॥३२॥

न लुप्ता प्रक्रिया चेयमद्यापि जगतीतले ।
श्रूयन्ते वाचका भोंपू फिट्फिटीत्यादयो नवाः ॥३३॥

एवं भाषायां श्रूयमाणानां कतिपयपदानामुत्पत्तिसम्बन्धे कथञ्चित् सन्तोषावहं समाधानमुपस्थापयन्नपि वादोऽयं न विवादनिर्मुक्तः । तदाह—

वाचामुत्पत्तिसम्बन्धे शब्दानुकृतिमूलकः ।
एष वादोऽपि भाषायाः क्षेत्रं व्याप्नोति नाखिलम् ॥३४॥

ये हि कर्णेन न ग्राह्या रूपगन्धरसादयः ।
येऽपि वा मानसा भावाः सत्यास्तेयदयादयः ॥३५॥

कथञ्चिदपि सम्बन्धः शब्दोत्पत्तेर्न यैः सह ।
तेषां संज्ञाविधौ काऽस्य वादस्य चरितार्थता ? ॥३६॥

अथ प्रतीकवादः—

अन्ये प्रतीकवादेन भाषोत्पत्तिं विवृण्वते ।
इह तेषामभिप्रायः संक्षेपेण प्रदर्श्यते ॥३७॥

आदिसर्गे मनुष्यस्य कुर्वतो विविधाः क्रियाः ।
सहजाः समजायन्त ध्वनयो वदनात् स्वयम् ॥३८॥

यथा पानीयपानाय प्रवृत्तः सन् जलोपरि ।
कृत्वेषद् विवृतावोष्ठौ निःश्वासमाचकर्ष सः ॥३९॥

तस्मादाविर्बभूवौष्ठ्यो ध्वनिर्यः प, बकारयोः ।
गतः स एव कालेन पानभावप्रतीकताम् ॥४०॥

शिशुस्तरङ्गितस्वान्तो बा-बा मा-मादिकान् ध्वनीन् ।
आविश्चक्रे विना लक्ष्यं याननेकान् यदृच्छया ॥४१॥

मत्वा तल्लक्ष्यमात्मानं बन्धुभिर्भ्रमकारणात् ।
लम्भितास्तादृशाः शब्दा जनकादिप्रतीकताम् ॥४२॥

आरब्यः शरबः शब्दो विबेरे लैटिनस्य च ।
पानार्थकः किलास्या हि प्रक्रियाया निदर्शनम् ॥४३॥

प्रतिक्रिया हुमित्यादिः केनाप्याकारि तस्य तु ।
प्राप वाण्यां प्रतीकत्वं पुरुषस्योत्तमस्य च ॥४४॥

भाषोत्पत्तेः प्राग् अस्फुटसंकेतद्वारा केनचिज्जनेनाहूतस्य पुंसः'हुम्' इति ध्वनिरेव कालान्तरे गीर्वाणवाण्याम् अस्मद् इति सर्वनाम्नः प्रथमपुरुषैकवचनस्य 'अहम्' इति पदस्य स्वरूपमवाप। अस्यैव रूपान्तरम् आवेस्ताभाषायाम् 'अजेम्' (azem) लैटिनभाषायां च 'ईगो' (ego) इति दृश्यते।

एवं क्षुधाकुलोऽङ्गुल्या मुखं दन्तांश्च निर्दिशन्।
व्यादाय वदनं चक्रे सः अ. अद् प्रभृतीन् ध्वनीन् ॥४५॥

यान् ध्वनीन् ध्यानमाक्रष्टुं पुंसां सः कृतवान् पुरा।
त एवापुः प्रतीकत्वं पश्चान्निर्दिष्टवस्तुनः ॥४६॥

गीर्वाणवाण्याम् अद्, ग्रीकभाषायां लैटिने तथा।
ऍडो, आङ्गलभाषायाम् इटेति(eat) चाशनार्थकाः ॥४७॥

दन्त्यध्वनेः प्रधानत्वे दो धातोः खण्डनार्थकात्।
दन्तौ दोन्तोस टूथाद्या जाता दशनवाचकाः ॥४८॥

ध्वनेश्चार्थेन सम्बन्धे प्रयोगेण स्थिरीकृते।
हस्तनेत्रादिचेष्टास्ताः प्रक्षीणा निष्प्रयोजना ॥४९॥

धातुभ्यः शब्दाः, शब्देभ्यो वा धातव इति प्रश्नो नात्र विचारविषयः। यत्तु पूर्वमुक्तम् यत् खण्डनार्थाकाद् दो धातोर्दन्तपदसिद्धिरिति तस्याऽयमाशयो यद् धातोः पदोत्पत्तिपक्षे दन्तपदस्य दो धातोः सिद्धिः साधीयसी, न तु 'हसिमृग्रिण्वामिदमिपूधुर्विभ्यस्तन्' (३।८५) इत्यौणादिकसूत्रोक्ताद् 'दमि' धातोस्तन्प्रत्ययेन, दमनापेक्षया खण्डनार्थे दन्तानामधिकतरोपयुक्तत्वात्। एवं संस्कृतभाषायां भक्षणार्थे अद्, ग्रीकलैटिनयोः ऍडो (Edo) आङ्गलभाषायाम् ईट (Eat) धातोः प्रयोगो दृश्यते। तथैव संस्कृतभाषायां दन्तः, ग्रीक भाषायाम् ओदोन्तोस् (Odontos), लैटिन. डैन्स डैण्टिस (Densdentis), वैल्श० डैण्ट (Dant), डैनिश. टैण्ड (Tend) पदानि दशन (दन्त) वाचकानि। एषु सर्वेषु दन्त्यध्वनिसद्भावः प्रस्तुतवादमेव दत्तहस्तावलम्बं विधत्ते।

अस्योपसंहारः—

उत्पद्यमाना बहवः शब्दाः प्रक्रिययाऽनया।
सर्वासामेव भाषाणां शब्दकोषमवर्धयन् ॥५०॥

तथापि—

सम्यग्विचार्यमाणोऽयं विचारोऽपि विपश्चिताम् ।
नैवावहति सन्तोषं पूर्णमव्याप्तिकारणात् ॥५१॥

अथ प्रतिक्रियावादो मूलभूतधातूत्पत्तिवादो वा—

अखिलेषु पदार्थेषु धातुकाष्ठजलादिषु ।
आघाते सति जायन्ते विशिष्टास्तत्प्रतिक्रियाः ॥५२॥

एवं प्रभावितस्याऽन्यैः पदार्थैर्मनुजन्मनः ।
उद्भवन्ति मुखान्नाना ध्वनयस्तत्प्रतिक्रियाः ॥५३॥

धातोर्झङ्कारवत् काष्ठात् खट्खटध्वनिवत् तथा ।
छलच्छलादिवत् तोयात् तरुपत्रात् पतादिवत् ॥५४॥

एवमास्यान्मनुष्यस्य ये जाता ध्वनयः पुरा ।
ते तदीयमनोभावानाविश्चक्रुः कथञ्चन ॥५५॥

असंस्कृतत्वादस्पष्टवर्णक्रमतया तथा ।
तेषु ध्वनिषु नैवासीत् क्रियात्वं नामताऽथवा ॥५६॥

अयमाशयः—

तेष ध्वनिषु संज्ञा-क्रिया-पुरुष-वचन-कालादि-ज्ञापनसमर्थं किमपि लक्षणं तदा नासीत् । एतदेव च तेषां धातुत्वम् तत्तत्तत्त्वाऽभावेऽपि तेषामर्थवोधसमर्थत्वात् ।

भावप्रकाशकेऽन्यस्मिन्नसत्युत्कृष्टसाधने ।
जज्ञिरे तद्विधा एव भूयांसो ध्वनयोऽन्वहम् ॥५७॥

ध्वनयोऽसंस्कृतास्ते च भाषाया मूलधातवः ।
येभ्यः समृद्धभाषाणां विकासः क्रमशोऽभवत् ॥५८॥

विकासे सति तासां च व्यवहारस्य सौष्ठवे ।
धातुनिर्माणशक्तिः सा पुंसां क्षीणाऽभवत् क्रमात् ॥५९॥

एषोपज्ञापि केषांचिद् भाषाविज्ञानवेदिनाम् ।
सन्तनोति न सन्तोषं मानसेषु मनीषिणाम् ॥६०॥

कदाचिदभवच्छक्तिर्मानवेषु तथाविधा ।
विलुप्ता याऽधुनेत्यत्र प्रमाणं नैव विद्यते ॥६१॥

**शब्दानुकृतिसंकेतभावव्यक्त्यादिमूलकैः ।**
**निर्वाहे सति पूर्वोक्तैर्वादैस्तत्पुनरुक्तता ।।६२।।**

इदं तात्पर्यम्, यत् पुरा मनोभावप्रकाशके विकसितभाषात्मके साधनेऽसति मानवेषु काचिद् भावप्रकाशिका शब्दनिर्माणशक्तिरासीत् । नैसर्गिकं चेदं यत् सर्वे पदार्थाः पदार्थान्तरेणाहताः प्रभाविता वा कमपि ध्वनिं कुर्वन्ति । यथा काञ्चनं काष्ठं पत्रं च झङ्कारं खटखटाध्वनिं पत् इत्यात्मकं शब्दम् । तथैव मानवा अपि बाह्याभ्यन्तरैः पदार्थैर्मनोभावैर्वा प्रभाविता यान् ध्वनीन् अकार्षुस्ते व्याकरणसंस्कारविहीना अपरिष्कृतधातुरूपा एवासन् । तेषु क्रियाकारकादिसूचकचिह्नाभावात्, ते भाषाया मूलधातव एवाभवन् । ते च प्रतिनूतनानुभवमनु स्वयमजायन्त । तादृशेषु बहुषु शब्देषूत्पन्नेषु तेषु च शनैः शनैः संज्ञा-क्रिया-पुरुष-वचन-विभक्त्यादिसूचकचिह्नेषु विकसितेषु तैश्च दैनन्दिनव्यवहारे सुशके सति सा नूतनधातुनिर्माणक्षमता क्षयमवाप निष्प्रयोजनत्वात् । अपरे भाषावैज्ञानिकाः पक्षमिमं प्रत्याचक्षते । तादृशी शक्तिः पुरासीन्नाधुनेति न वक्तव्यम् । सम्प्रत्यपि प्रत्यहं नवाविष्कारैः सह तद्बोधका नवशब्दाः डी. डी. टी., लैसरकिरण-प्रभृतयो निर्मीयमाणा दृश्यन्ते । किं च,पूर्वोक्तैः शब्दानुकृतिमूलकतादिवादैरेव संभूय गतार्थतायामियमभिनवा कल्पनाऽन्यथासिद्धैव ।

अथ भाषाविषये दिव्योत्पत्तिवादः, तस्य समीक्षा च—

**कया चिद् दिव्यया शक्त्या निर्मिता वाक् पुरा स्वयम् ।**
**तद्द्वारा च कृतं पुंसां कार्याकार्यप्रबोधनम् ।।६३।।**

तदेव युक्त्योपपादयति—

**शिशुः कश्चित् समाजाच्चेज्जातमात्रोऽपनीयते ।**
**न शब्दं शृणुयादीदृक् प्रबन्धश्च विधीयते ।।६४।।**

**वक्तुं न जायते शक्तः स कदाचिदपि स्वयम् ।**
**कृत्यविद्भिरिदं सम्यगसकृच्च समीक्षितम् ।।६५।।**

**न हि बीजं विना वृक्षः कुम्भकारं विना घटः ।**
**जायमानः स्वयं क्वापि दृष्टः केनापि वा क्वचित् ।।६६।।**

तस्माद्युक्तमिदं सर्गस्यादौ गुर्वन्तरेऽसति ।
शिक्षितो मानवः शक्त्या दिव्ययेश्वररूपया ॥६७॥

ग्रन्थेषु सर्वधर्माणां मान्यतेयं समर्थ्यते ।
वाचामुत्पत्तिसम्बन्धे दैवीयं मान्यता मता ॥६८॥

तदुक्तं पुरुषसूक्ते—

तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ।
ऋग्० १०।९०।९॥

अथर्ववेदे—

यस्मादृचोऽपातक्षन् यजुर्यस्मादपाकषन् ।
सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखम् ।
स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
अथर्व० १०।७।२०॥

मनुरप्याह—

सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ मनु० १।२१॥

एवं सर्वेषामितरधर्माणामपि कोटिशोऽनुयायिनः परमात्मानमेव भाषाया आदिकारणमङ्गीकुर्वन्ति न च ते सर्व परप्रतारणपराः, अशिक्षिताः अन्धपरम्परायणा वा । सन्ति हि तेषु नवीनतमविज्ञानविज्ञाः, तर्ककर्कशधियः, सत्यासत्यविवेचनचतुराः पण्डितप्रकाण्डा अपि, येषां कथनं मिथ्या प्रजल्पितमित्यभिधायोपेक्षितुं न शक्यम् । तथापि येषामार्षदृष्टावाप्तवाक्ये वा न श्रद्धा तेषां मतेनोच्यते—

दिव्यशक्तिकृतं जन्म भाषाया यदि मन्यताम् ।
शक्तेस्तस्याः सदैकत्वे भाषाप्येकैव संभवेत् ॥६९॥

किन्तु वस्तुस्थितिस्तस्माद् विपरीता विलोक्यते ।
तस्मान्न मान्यतापीयं प्रश्नस्योचितमुत्तरम् ॥७०॥

अथ कथञ्चित् पक्षमिमं समाधत्ते—

तथाप्युपेक्षितुं शक्या मान्यतेयं न सर्वथा ।
दृश्यतेऽपरजन्तुभ्यो मनुष्येषु विशेषता ॥७१॥

साक्षाद् भाषा न चेत् तस्याः समुद्भवविकासयोः ।
चिन्तनस्य च सामर्थ्यं दत्तं पुंसे तथैव तु ॥७२॥

यदि साक्षाद् भाषैव मनुष्याय नेश्वरेण प्रदत्तेति मन्येत, तथापि तस्याः समुद्भवस्य विकासस्य च शक्तिश्चिन्तनसामर्थ्यं च तस्य तेनैवार्पितमिति त्वनिच्छतापि प्रतिपक्षिणा स्वीकरणीयमेव । यद्यपि भाषोत्पत्तौ पूर्वोक्तानां सर्वेषामेव वादानामंशदानं, तथापि दिव्य-शक्तेरंशस्तत्र मूलभूतः । तदभावे परेषामन्यथा सिद्धत्वात् । तदुच्यते—

शक्तो वागुद्भवायैवं कोऽपि वादो न केवलः ।
प्रत्येकं दण्डचक्रादिघटस्योत्पत्तये यथा ॥७३॥

सर्वेषामेव वादानां तस्माद् युक्तः समन्वयः ।
शक्तेस्तत्रापि दिव्याया निर्विवादा प्रधानता ॥७४॥

अन्यथासिद्धता तेषां तदभावे परिस्फुटा ।
जन्तवो भाषितुं नालं सत्स्वप्यन्येषु हेतुषु ॥७५॥

कामक्रोधभयादयो मनोरागाः पशुपक्ष्यादिष्वपि भवन्ति,व्यञ्जयन्ति च ते कथञ्चित् तान् न तु मानववत् तदनुरूपान् सुव्यक्तान् विविध-ध्वनिप्रभेदान् उच्चारयन्ति । तेऽपीतरप्राणिनां नियतान् शब्दान् शृण्वन्ति न तु तदनुकरणमूलकं तेषां नामकरणं कुर्वन्ति । कदाचिदनु-करणचतुरं पुरुषं सारमेयशृगालादिवद् बुक्कन्तं क्रोशन्तं वा निशम्य ते तमपि स्वजातीयं मन्यमानास्तत्प्रतिक्रियामारभन्ते । तेनानुमीयते यत् तेषां ध्वनयो निरर्थकाः केवलसंकेतरूपा इवेति ।

एवं भाषोत्पत्तिविषये विविधान् वादान् समासेनोपन्यस्य सर्व-भाषासु सुरगिरः प्राचीनतमत्वं भारोपीयभाषापरिवारस्यान्यभाषाणां तज्जननीत्वं च प्रसङ्गवशात् प्रस्तौति—

विज्ञाताऽखिलभाषासु पूर्णा सर्वपुरातनी ।
बह्वीनां जननी चान्यभाषाणां सुरभारती ॥७६॥

अनुमानेन किन्त्वेके कल्पयन्ति पुराविदः ।
भारोपीयगिरां मूलभाषामन्यां हि कामपि ॥७७॥

उपस्थितां परित्यज्याऽनुपस्थितप्रकल्पने ।
यत्नस्तेषामयं काशकुशाऽवलम्बनोपमः ॥७८॥

संभावनाश्रितास्तेषां सकला उपपत्तयः।
सिकताकूपवद् यस्माद् विदीर्यन्ते परीक्षिताः ॥७६॥

ग्रिम[1]-ग्रासमना[2]दीनां नियमस्य व्यतिक्रमे।
कारणाऽन्वेषणं न्याय्यं न त्वसंभाव्यकल्पनम् ॥८०॥

---

१. जायन्ते क. त. पाः क्रमेण ख(ह) थ. फाः
शार्मण्यवर्गे गिरां तस्या ये ग. द. बा
स्तथैव क. त. पी. भावं भजन्ते च ते।
आदेशा ग. द. बा भवन्ति घ. ध. भां गीर्वाणवाण्यास्तथाः
स्पर्शानां परिवर्तनस्य नियमोऽस्त्येष ग्रिमस्याग्रिमः ॥

घ-ध-भां=घ-ध-भानामित्याशयः।
अग्रिमः=प्रथमो वर्णपरिवर्तननियम इत्यर्थः।
अस्य संक्षिप्तं सूत्रम्—

वर्गस्याद्या द्वितीयत्वं प्रथमत्वं तृतीयकाः।
यान्ति तुर्यास्तृतीयत्वं ग्रिमसूत्रमिदं मतम् ॥

वर्गस्याद्याः=क. त. पाः। द्वितीयाः=ख (ह). थ. फाः।
तृतीयाः=ग. द. बाः। चतुर्थाः=घ. ध. भाः।

२. ग्रिमानुसारं वैदिक्या भाषाया ब द. कारयोः।
स्थान आङ्गलभाषायां प. त. योरिष्यते स्थितिः ॥
किन्तु बन्धस्य बाइण्ड, दभ्नोतेर्डाब विक्रिया।
अपवादस्वरूपाऽस्य नियमस्य विलोक्यते ॥
अपवादाश्च भाषाणां नियमेषु यदृच्छया।
न भवन्ति, ततः कोऽपि हेतुरत्र भविष्यति ॥
अतोऽनुमीयतेऽन्या वाक् संस्कृतग्रीकभाषयोः।
मूलं, यत्राऽनयोरासीद् भन्धधाभ स्वरूपता ॥
इह बाइण्ड (bind) डॅब (dab) पदे बोड (bode) बुधप्रभृतीनामन्येषामनुक्तानामुपलक्षके।
क्लेशो द्वयोर्महाप्राणध्वन्योरुच्चारणे सह।
कृताल्पप्राणताऽऽद्यस्य मुखसौख्याय वक्तृभिः ॥
शब्देष्वादिमभाषाया महाप्राणाक्षरे अपि।
प्रत्यासन्ने अवर्तेतां भाषणे क्लेशकारके ॥

असन्दिग्धैकमूलासु भाषास्वपि विलोक्यते ।
देशकालप्रकृत्यादिभेदेन भिन्नरूपता ॥८१॥
[1]महाराष्ट्र्यादिभाषासु समानप्रकृतिष्वपि ।
जाता विकृतयो नाना भेदेन देशकालयोः ॥८२॥

---

शनैः शनैर्जनैराद्यं तयोर्मुखसुखाय तु ।
अल्पप्राणं कृतं ग्रासमतस्य नियमोऽस्त्ययम् ॥

अत्र विप्रतिपत्तिः—

एकाधिकमहाप्राणध्वन्योरेकत्र संस्थितिः ।
वेदेऽप्यस्ति 'बभूथेति' रूपं तस्या निदर्शनम् ॥

तथाहि—

'रथीऋतस्य बृहतो बभूथ'। इति ऋग्वेदे (४।१०।२) ।

अत एव पाणिनिः'बभूथाततन्थजगृम्भववर्थेति निगमे''अ० ७।२।६४' इत्यसूत्रयत् । अस्य विकल्पो 'बभूविथ' इत्यपि वेदे प्रयुज्यते—'त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ' (ऋग० ८।९८।११) इति । अतो महाप्राणध्वन्योः सहस्थितये मूलभाषान्तरकल्पनं नौचितम् ।

तदाह—

अस्या ग्रासमनद्वारा भिन्नभाषाप्रकल्पनम् ।
उचितं वा न वेत्येतद् विनिर्णेयं मनीषिभिः ।'

१. महाराष्ट्र्यां शषोः स स्यान्मागध्यां शः षसोस्तथा ।
पैशाच्यां नो णकारः स्यान्महाराष्ट्र्यां विपर्ययः ॥
तस्यामेव शकारस्य दशादिषु च हस्तथा ।
षकारस्य च रेफः स्यात् संख्यास्वेकादशादिषु ॥
वेदे गीर्वाणवाण्यां च विद्यते वचनत्रयी ।
नास्ति द्विवचनं पाल्यां सर्वेषु प्राकृतेषु च ॥
भेदेषु प्राकृतस्याऽपभ्रंशस्य सकलेष्वपि-
स्थाने षष्ठी चतुर्थ्याश्च विभक्तेः संप्रयुज्यते ॥
ईदृशानेकभेदेषु सत्सु संस्कृतमूलता ।
व्याहन्तुं शक्यते नैव भारतीयगिरां यदि ॥
भेदैः कतिपयैरेव देशकालादिसंभवैः ।

उच्चारयन्ति बङ्गेषु जलं जोलं, परे पुनः ।
ज्ञं ग्य, तथा षकारं खं, वकारमपरे च बम् ॥८३॥

उच्चारणादिजन्येषु भेदेष्वेतद्विधेष्वपि ।
भारतीयगिरां मूलभाषा न मृग्यतेऽपरा ॥८४॥

तथैवाङ्गलभाषायाममरीकानिवासिनाम् ।
भारतीयादिकानां च दृश्यते बहुभिन्नता ॥८५॥

तदर्थं नेष्यते मूलाङ्गलभाषान्तरं बुधैः ।
स्वाभाविकत्वात् तस्याऽन्यैः कारणैरपि सर्वथा ॥८६॥

वेदवागेव सर्वासां भारोपीयगिरामतः ।
जननीति स्थितं, क्लिष्टकल्पने गौरवं वृथा ॥८७॥

भाषाविज्ञानविषयान्तर्गतत्वात् सविस्तरम् ।
विचारं नाऽर्हति प्रश्नो ऽत्राऽयं तेन विरम्यते ॥८८॥

एवं श्रूयमाणाया भाषायाः स्वरूपं निरूप्य लिखितभाषाया विषयेऽपि किञ्चिद् विचार्यते। लिखिता भाषा लिपिरित्युच्यते। यथा—ब्राह्मी, देवनागरी, रोमनलिपिर्वा। जनसमाजस्य कस्मिंश्चिद् भागे कारणवशाद् उच्चार्यमाणध्वनेरविषयभूतं देशान्तरं गते सति परस्परसंपर्कस्थापनाय, स्वविचाराणां स्थिरीकरणाय वा कैश्चिद् व्युत्पन्नमतिभिर्जनैर्लिपेराविष्कारोऽकारि। वस्तुतः शब्देन तस्य च लिखितचिह्नेनेति पारम्परिकसम्बन्धेऽपि सा लिपिर्भाषावदेव व्यवहारसाधिका। पुरा तं तमर्थं बोधयितुं तस्य तस्य पदार्थस्य चित्ररचनां चक्रुर्जनाः। क्रमेण तानि चित्राणि संक्षिप्तानि सरलायितानि च। तस्य तस्यार्थस्य

---

भारोपीयगिरां मूलभाषाऽन्याऽन्विष्यते कुतः? ॥
स्वराणां व्यञ्जनानां च भाषास्वीदृग् विपर्ययः ।
तेषु भेदेष्वनुस्यूतसाजात्यस्यैव सूचकः ॥

अत्र प्रमाणभूतानि प्राकृतप्रकाशसूत्राण्युद्ध्रियन्ते—

शषोः सः—२।४३। षसोः शः—११।३। नोणः—२।४२। णो नः—१०।५। आदेर्योजः—२।३। जो यः—११।४। संख्यायां च—२।४१। दशादिषु हः—२।४४। द्विवचनस्य बहुवचनम्—६।६३। चतुर्थ्याः षष्ठी—६।६४।

संकेतचिह्नताभवापुः । तानि चिह्नान्येव साम्प्रतिकान्यक्षराणीति लिपिविशारदानां मतम् । लिपेर्लक्षणम्—

रेखात्मकैस्तु वर्णानां संकेतैर्निर्मिता लिपिः ।
साधनं व्यवहारस्य सापि भाषोपचारतः ॥८९॥

इह रेखया बिन्दोरपि ग्रहणम् । अन्धानां लिपेर्बिन्दुमयत्वात् । मानवानाम् उच्चारणोपयोग्यङ्गैरुच्चारितो वर्णात्मको ध्वनिर्भाषेति तल्लक्षणे जागरूके लिखितसंकेतेषु भाषापदव्यवहारः कथमुपपद्यते इत्यापत्तिः—वस्तुतः संकेतः शब्दे, शब्दस्य च तच्चिह्ने इति पारम्परिकसम्बन्धेन तयोरेकत्वं विधाय परिहरणीया ।

लिपेरुपयोगः—

जनानां सा च दूरस्थे देशे देशान्तरेऽपि वा ।
प्रत्यक्षान् विदधात्यर्थान् संमुखोपस्थितानिव ॥९०॥

प्रत्यक्षान्—प्रत्यक्षवद् विशदानित्यर्थः । सैनिकबालचरादिभिः पताकातूर्यादिभिर्यत् संवादप्रेषणं विधीयते, तत्र भाषाशब्दप्रयोगो भाक्तः ।

पताकादीपिकातूर्यविद्युट्टिकटिकादिभिः ।
संवादप्रेषणे भाषाव्यवहारोऽपि तादृशः ॥९१॥

लाक्षणिक इत्यर्थः ।

तत्र वर्णाऽप्रयोगेऽपि संकेताः पूर्वनिश्चिताः ।
लिखितान्यक्षराणीव वर्ण्यन्ते यथायथम् ॥९२॥

ननु किं नाम वर्णत्वम् ? इति जिज्ञासायाम्—

वर्ण एकप्रयत्नेनोच्चार्योऽखण्डः स्फुटो ध्वनिः ।
अनर्थकोऽप्यसौ सार्थपदानां घटको मतः ॥९३॥

निरर्थका वर्णाः सार्थकपदानां घटनाय कथं समर्थाः ? तैलदानेऽसमर्थानां सिकताकणानां प्रस्थभारोऽपि न तैलं प्रयच्छतीति शङ्कां परिहरति—

पृथङ् महत्त्वदीर्घत्वरहिताः परमाणवः ।
समवेता घटादीनां भवन्ति घटनक्षमाः ॥९४॥

**तथैव वर्णाः प्रत्येकमर्थेन रहिता अपि ।**
**मिलितास्त्वर्थबोधाय कल्पन्ते क. ल. शादिवत् ।।९५।।**

नन्वस्मिन्नणुयुगे वैज्ञानिकैरणवः खण्डिताः, अतस्तेषां महत्त्वदीर्घत्वरहितत्वं न वक्तुं युक्तम् इति चेत् ? नास्माकमिहाणुपदवाच्ये कस्मिन्नपि पदार्थविशेषे आग्रहः। खण्डितस्याणोः प्रखण्डाः, अथवा येषां पुनः प्रविभागकल्पना न संभवति त एवास्माकं परमाणवोऽभिमता इत्यलं प्रसक्तानुप्रसक्तचिन्तया। पदस्य खण्डानां वर्णानां न सर्वत्र निरर्थकता। पाचकादिषु यौगिकपदेषु धातुप्रत्ययरूपांशभूतानां वर्णानां क्वचित् सार्थकता भवति, न तु कलशादिपदेषु क. ल. श. रूपाणाम् ।

अथ पदम्—

**वर्णो वा वर्णसंघो वा सुप्तिङ्कृत्तद्धितोत्तरः ।**
**एकः प्रयोगयोग्यश्च वाक्यांशः सार्थकः पदम् ।।९६।।**

एकवर्णात्मकम् अनेकवर्णात्मकं चेत्युभयविधं पदम् ।

तत्रैकवर्णात्मकं यथा—

अकारो विष्णुरुद्दिष्ट उकारस्तु महेश्वरः ।
मकारस्तु स्मृतो ब्रह्मा प्रणवस्तु त्रयात्मकः ।।

एवम् अस्य=विष्णोरपत्यम् इः कामः। अस्य स्त्री=ईर्लक्ष्मीः। इत्यादीनि अनेकानि एकाक्षरात्मकानि पदान्येकाक्षरकोशतो ज्ञेयानि ।

अनेकवर्णात्मकं पदं घटपटादिकम्। तेषां पदानां समूहो वाक्यम् ।

तस्य लक्षणम्—

**आकाङ्क्षायोग्यतासत्तियुक्तं पदकदम्बकम् ।**
**एकसङ्गतपूर्णार्थं वाक्यं वाक्यविदो विदुः ।।९७।।**

आकाङ्क्षादयोऽनुपदमेव वक्ष्यन्ते । एकेति ग्रहणेन अनेकपदवाक्यानां समूहस्य नैकवाक्यत्वम्। सङ्गतेति पदोपादानेन असङ्गतानाम् अनेकपदानां समुच्चयस्य न वाक्यता। पूर्णार्थमिति कथनेन अपूर्णस्य "चैत्र आगतस्तु ....."इत्येतावन्मात्रस्य वाक्यांशस्य न तावद् वाक्यत्वं यावत् तत्पूर्तये "न मया दृष्टः" इत्यादिरूपो वाक्यशेषस्तत्र न प्रयुज्यते ।

आकाङ्क्षां विवृणोति—

वाक्ये पदान्तरापेक्षैवाकाङ्क्षा यार्थपूर्तिकृत् ।
चित्तधर्मोऽपि जिज्ञासा सा पदेषूपलक्ष्यते ॥९८॥

वाक्यैकदेशे श्रुते पूर्णार्थजिज्ञासास्वरूपा सा, श्रोतुश्चित्तस्य धर्मभूताऽपि लक्षणया पदस्य धर्मत्वेनोच्यते । यथा—

चैत्राय गामिति श्रुत्वाप्याकाङ्क्षा न निवर्तते ।
आकाङ्क्षतेऽर्थपूत्यर्थं ददातीत्यादिकं तु सा ॥९९॥

गौरश्वः पुरुषो हस्तीत्यादेरपि न वाक्यता ।
असंपूर्णार्थ आकाङ्क्षाविहीनोऽयं पदोच्चयः ॥१००॥

अथ योग्यतां निरूपयति—

योग्यता च पदार्थानां बाधाऽभावो मिथोऽन्वये ।
अर्थानां धर्मभूता च सा पदेषूपचर्यते ॥१०१॥

जलेन सिञ्चतीत्यत्र जले या सेकयोग्यता ।
न साऽग्ना, वग्निना सिञ्चतीति वाक्यं न कल्पते ॥१०२॥

इयं योग्यतापि पदार्थानां जलादीनां सेकादिरूपेणार्थेन सम्बन्धे बाधाऽभावस्वरूपा पदार्थधर्मभूताऽपि पदेषूपलक्ष्यते । जले वृक्षादिसेचनरूपयोग्यतायास्तादृशो बाधो नास्ति यादृशोऽग्नौ । तेन "जलेन सिञ्चति" इतिवद् "अग्निना सिञ्चतीति न वाक्यम्" ।

अथासत्तिः—

आसत्तिर्बुद्ध्यविच्छेदः पदार्थानां परस्परम् ।
जायतेऽव्यवधानेन सा वाक्ये देशकालयोः ॥१०३॥

आसत्तिः समीपता । तावदेकपदश्रवणजन्यार्थसंस्कारस्यापरपदश्रवणपर्यन्तं श्रोतुश्चेतसि विद्यमानता । इयमेव 'बुद्धेरविच्छेद' इत्युच्यते । सोऽविच्छेदो देशव्यवधानेन कालव्यवधानेन वा व्याहन्यते ।

वाक्ये देशव्यवधानं यथा—

अग्निमान् देवदत्तेन गिरिर्भुक्तमिति श्रुते ।
व्यवधानेन विच्छिन्ने संस्कारे नास्य वाक्यता ॥१०४॥

कालकृते व्यवधानेऽपि स एव दोषः । तथाहि—

अद्योदितेन चैत्रेति पदेन नान्वयो भवेत् ।
दिनान्तरोक्तगच्छेति पदेन व्यवधानतः ॥१०५॥

व्यवधानमुद्दिश्य प्रागेव तथाविधे संकेते विहिते तु न दोषः ।

वक्तृबोद्धव्ययोः पूर्वं कृतसंकेतयोस्तथा ।
दैशिकं कालिकं वापि व्यवधानं न बाधकम् ॥१०६॥

अतो न व्यवधानस्य मात्रानिर्देशसंभवः ।
परिवर्तनसापेक्षतया तस्य यथास्थिति ॥१०७॥

परे तु वाक्यलक्षणमन्यथा विदधति । तथाहि—

सम्बन्धे वस्तुनो व्यक्तिविशेषस्योत कस्यचित् ।
किंचिद् येनोच्यते शब्दजातं तद् वाक्यमीरितम् ॥१०८॥

तस्य वाक्यस्योद्देश्यविधेयरूपं घटकद्वयमिष्यते । तत्र—

तदुद्देश्यं यदुद्दिश्य किमपि प्रतिपाद्यते ।
विधेयमवधेयं तद् यत् किंचित् प्रतिपाद्यते ॥१०९॥

उद्देश्यं प्रायशः सिद्धं नाम वा सर्वनाम वा ।
विधेयं प्रतिपाद्यत्वात् साध्यत्वाच्च क्रियापदम् ॥११०॥

वाक्ये उद्देश्यस्य प्रथमस्थानेऽवस्थानं समुचितं विधेयस्य च तदनन्तरम् । उद्देश्यस्यैव नामान्तरम् अनुवाद्यं विधेयस्य च प्रतिपाद्यम् इति ध्येयम् ।

उद्देश्यं तु भवेत्कर्तृपदं सह विशेषणैः ।
क्रियापदं विधेयं च निजैः परिकरैः सह ॥१११॥

उद्देश्यस्य विधेयेन योजनाच्च यथायथम् ।
पदजातं भवेद् वाक्यम् एकपूर्णार्थवाचकम् ॥११२॥

यथा—'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' । अस्मिन् मन्त्रवाक्ये धातेति कर्तृपदम् 'उद्देश्यम्' च । अकल्पयत् इति क्रियापदं विधेयं च । सूर्याचन्द्रमसौ इति सकर्मकक्रियाया अर्थपूरकं कर्मपदम् । इदं कृत्स्नं पदकदम्बकं संभूय वाक्यम् ।

अनेकोपवाक्यघटितेषु संकीर्णवाक्येषु क्वचिदेकमुपवाक्यमपि

उद्देश्यं भवितुमलम्; परस्परसम्बद्धानामनेकवाक्यानामेकं महावाक्यम्। तदुक्तं साहित्यदर्पणे—

'पदोच्चयो महावाक्यमित्थं वाक्यं द्विधा मतम्' ॥

तथा—

'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहृत्य जायते' ॥
सा० द० द्वितीय परिच्छेदे ॥

अमुमेवार्थं स्वयमभिधत्ते—

**वाक्यान्यङ्गाङ्गिभावेन संहतानि परस्परम्।**
**एकतात्पर्यनिष्ठानि यान्ति सन्दर्भवाच्यताम् ॥११३॥**

**तथैवान्योन्यसम्बद्धैः सन्दर्भैर्विविधैरपि।**
**सर्गाङ्काध्यायनिःश्वासास्तैश्च काव्यादि जायते ॥११४॥**

प्रतिपाद्यविषयस्य एकदेशप्रतिपादने ऽङ्गाङ्गिभावमाप्तानामनेकवाक्यानां समूहः सर्गाङ्काध्यायनिःश्वासादिनामभिरुच्यते। बहुभिश्च तैः सर्गादिभिः काव्यनाटकाख्यायिकादयः स्वात्मलाभं विदधति। दर्पणकारमते सर्वेषामेषां महावाक्यत्वम्। वेदान्तिनामभिमता 'तत्त्वमसि' आदिवाक्येषु महावाक्यता त्वस्माद् भिन्ना, तस्याः शास्त्रविशेषे पारिभाषिकत्वात्। वाक्यस्य सरलसंश्लिष्टसंकीर्णाख्या भेदा रीतिविचारप्रसङ्गे प्रदर्शयिष्यन्ते।

ननु भवदुक्तसरण्या वर्णैः पदानि, तैर्वाक्यानि, तैश्च भाषेति प्राप्तं भवति। परे तु मतमिदं नाभिनन्दन्ति। तेषां तु वाक्यमेव भाषाया मूलघटकमिष्टम्। तत्र कतरः पक्षो ज्यायान् इति शङ्काङ्कुरिता भवति—

**भाषोद्भवः पदेभ्योऽभूद् वाक्येभ्यो वेति संशये।**
**प्रस्तूयते विचारोऽत्र प्रमाणं सूरयः स्वयम् ॥११५॥**

**सार्थकत्वात् स्वतन्त्रत्वाद् एकत्वादक्रमादपि।**
**कोशाद् व्याकरणाद् वाक्येऽनन्वितानां प्रयोगतः ॥११६॥**

**निर्देशादुपदेशाच्च बालानां शिक्षणादिषु।**
**लाघवाच्चापि भाषाया मूलं तत्त्वं पदं मतम् ॥११७॥**

घटपटादीनां संज्ञाशब्दानां पश्यामि गच्छामीत्यादिक्रियापदानां च सार्थकत्वात्, पदान्तराणां साहाय्येन विनैव तेषां स्वार्थबोधे स्वतन्त्रत्वात्, कदाचिद् एकाकिनामपि 'प्रविश' 'पिण्डीम्' इत्यादीनां प्रयोगदर्शनात्, वाक्ये—'पात्रमाहर,' 'आहर पात्रम्' इत्यादिवत् पदानां पूर्वोत्तरभावेऽनियतक्रमत्वात्, अतएव वाक्यमुखानपेक्षित्वात्, कोशे पदानामेवार्थप्रदानात्, व्याकरणे प्रकृतिप्रत्ययादियोगेन पदानामेव निष्पादनात्, कुमारिलपादानामभिहितान्वयवादेऽनन्वितानां पदानां परस्तात् कर्तृत्वकर्मत्वादिसम्बन्धस्थापनात्, पदार्थपशुविशेषादिज्ञापनाय घटाश्वादिपदानामेव निर्देशात्, बालकानां शिक्षणादौ पदानामुपदेशात्, वाक्ये संकेतग्रहणापेक्षया पदे लाघवाच्च पदमेव भाषाया मूलघटकमित्येकः पक्षः। परे तु—

**व्यवहारस्य मुख्यत्वात् संकेतग्रहणे सदा ।**
**अन्वितानां पदानां च व्यवहारेऽभिधानतः ॥११८॥**

**पूर्णेऽर्थे वक्तृतात्पर्याद् वाक्ये च तस्य संभवात् ।**
**पदैक्येऽपि तदन्येषामध्याहारादुपस्थितेः ॥११९॥**

**कोशे व्याकरणे चापि बालबोधाय केवलम् ।**
**कल्पितत्वात् पदादीनां वर्णवद् वर्णखण्डवत् ॥१२०॥**

**तथा पदानां वाक्येषु नियतक्रमदर्शनात् ।**
**वाक्यमेवाऽपरे मूलं मन्यन्ते घटकं गिराम् ॥१२१॥**

अनेन पदेनाऽयमर्थो बोद्धव्य इति रूपस्य संकेतग्रहस्य व्याकरणकोशोपमानादिषु विविधसाधनेषु सत्स्वपि स्वामिना सेवकमुद्दिश्य 'देवदत्त गामानय' इत्युक्ते तं गवानयनप्रवृत्तमुपलभ्य समीपवर्ती बालक उच्चारितस्य तस्याखण्डशब्दसमूहस्य (वाक्यस्य) गवानयनरूपमखण्डमर्थं प्रतिपद्यते। ततश्च 'गां बधान' 'अश्वमानय' इत्युक्ते तं गां बध्नन्तम् अश्वं चानयन्तं दृष्ट्वा आवापोद्वापाभ्याम् (अन्वयव्यतिरेकाभ्यामित्यर्थः) तस्य तस्य पदस्य तं तमर्थं जानातीत्युक्तरूपस्य व्यवहारस्यैव मुख्यत्वात्। व्यवहारे चान्वितानाम्=आनयनाद्यन्वितगवादीनाम् गवाद्यन्वितानयनादीनाम् अर्थात् वाक्यानामेव प्रयोगात्। पूर्णेऽर्थे वक्तुस्तात्पर्याद् वाक्येनैव तत्साध्यत्वात्, क्वचित् 'प्रविश' 'पिण्डीम्' इत्यादिरूपे एकाकिनि पदे समुच्चारितेऽपि 'गृहं' 'भक्षय' वेत्यादिपदान्तराणामध्याहारादिनोपस्थितत्वात्। कोशे व्याकरणे वा पृथगर्थप्रदानाय साध-

नाय वा तेषां पदानां बालादिबोधनाय तथा कल्पितमात्रत्वात् यथा शिशुशिक्षार्थं पदानां वर्णेषु तेषामपि वर्णखण्डेषु विभागाः प्रकल्प्यन्ते यानि संयोज्य वियोज्य च बालका मनोरञ्जनपूर्वकमक्षराभ्यासं कुर्वते। यच्चोक्तं वाक्ये पदानां क्रमोऽनपेक्षणीय इति तदपि न साधु। वाक्ये पूर्वमुद्देश्यस्य परस्ताच्च विधेयस्यावस्थानमुचितम् इति नियमात्। किंच, आङ्गलभाषादिष्वनेकभाषासु पदानां प्रथमद्वितीयादिस्थाननिवेशे-नैवकर्तृकर्मत्वादिनिर्धारणादपि न पदानां स्वातन्त्र्यम्। अयमर्थः संक्षेपेण कारिकासु निबध्यते—

संकेतग्रहहेतवस्तु बहवः सन्त्यत्र कोशादयो
वृद्धानां व्यवहार एव सकलानामग्रणीर्वर्तते।
यस्मादारभतेऽर्भकः प्रथमतस्तेनैव शिक्षां निजां
पश्चाद् व्याकरणादयोऽपि विविधं साहाय्यमातन्वते॥१२२॥

निशम्य वाक्यं वृद्धानां तेषां चेष्टा निशाम्य च।
बालकः प्रथमं भाषां शिक्षते व्यवहारतः॥१२३॥

व्यवहारे प्रयुज्यन्ते वाक्यान्येव च सर्वदा।
पूर्णेऽर्थे वक्तृतात्पर्याद् वाक्येन तस्य संभवात्॥१२४॥

कोशे व्याकरणादौ च ग्रन्थानां मुद्रणे तथा।
पृथक् पदत्वं सौकर्यहेतवे कल्पनाकृतम्॥१२५॥

यथैवाक्षरखण्डानि पत्रदारुमृदादिभिः।
कुर्वन्ति बालबोधाय शिल्पिनो बुद्धिकौशलात्॥१२६॥

बालकास्तानि संयोज्य वियोज्य चापि लीलया।
विदधत्यक्षराभ्यासं मनोरञ्जनपूर्वकम्॥१२७॥

प्रविभज्य तथा वाक्यं कर्तृकर्मक्रियादिषु।
पदानि चक्रिरे प्राज्ञैः केवलं कल्पनाबलात्॥१२८॥
पदान्यपि विभज्याथ प्रकृतिप्रत्ययादिषु।
ध्वनिभेदं समाश्रित्य वर्णभेदः प्रकल्पितः॥१२९॥
वस्तुतस्तु पदं वर्णाः प्रकृतिप्रत्ययादयः।
सर्वेऽपि कल्पिता भेदास्तत्त्वं वाक्यं हि केवलम्॥१३०॥

इति वैदिकसाहित्यसौदामिन्यां शब्दविमर्शो नाम
तृतीय उन्मेषः पर्यवसितः॥

# चतुर्थ उन्मेषः

## अर्थ-विमर्शः

काव्यलक्षणप्रस्तावे "शब्दार्थमयी कलाकृतिः काव्यमिति"[1] वाक्य विचारे "एकं सङ्गतपूर्णार्थं वाक्यं पदकदम्बकम्[2]," इति चेत्यत्र शब्दार्थयोर्निर्देशः कृतः। तयोः शब्दस्य स्वरूपं तृतीयोन्मेषे प्रदर्शितम्। सम्प्रत्यर्थविचारः प्राप्तावसरस्तस्मात् तद्विषयिका विवित्सा स्वाभाविकी। अतः साहित्यप्रपञ्चमञ्चे प्रमुखभूमिकां निर्वहतोऽर्थस्य स्वरूपं वक्तुकामो ग्रन्थकृत्—

चत्वारि श्रृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति
महो देवो मर्त्यां आविवेश ॥ ऋ० ४।५८।३॥

देवता—गावः सूर्यो वा। ऋषिः—वामदेवो गौतमः। छन्दः—त्रिष्टुप्।

अस्य मन्त्रस्य भगवत्पतञ्जलिकृतं व्याख्यानं मनसिकृत्य तत्र वृषभरूपेण वर्णितं शब्दं तमारूढमर्थतत्त्वरूपं शिवं स्तौति—

राजच्छृङ्गचतुष्टयं त्रिचरणं शीर्षद्वयालंकृतं
हस्तैः सप्तभिरन्वितं ध्वनिभिरैरुन्नादयन्तं जगत्।
योऽधिष्ठाय महावृषं निविविशे सूक्ष्मात्मसु प्राणिनां
कुर्यान्नः स कृतार्थतां त्रिनयनो देवोऽर्थतत्त्वात्मकः ॥१॥

यस्त्रिनयनः—तिस्रो वृत्तयोऽभिधालक्षणाव्यञ्जना एव त्रीणि नयनानि यस्य तथाविधः। अर्थतत्त्वात्मको देवः शब्दवृषभमधिष्ठाय प्राणिनां सूक्ष्मात्मसु प्रवेशमकरोत्, स नः कृतार्थतां कुर्यात्। वृषभारूढस्य

---

१. द०—पूर्वत्र पृष्ठ २०, श्लोक ६, तस्य व्याख्यानं च।

२. द०—पूर्वत्र पृष्ठ ४६ श्लोक ६७।

महतो देवस्य सूक्ष्मात्मसु प्रवेशोऽद्भुतः। एतेन तस्यालौकिकत्वं व्यज्यते। चत्वारि शृङ्गाणि—चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताः। त्रयोऽस्य पादाः—त्रयः कालाः भूतभविष्यद्वर्तमानाः। शीर्षद्वयम्—द्वौ शब्दात्मनौ नित्यः कार्यश्च। सप्तहस्ताः—सप्त विभक्तयः। त्रिधा बद्धः—त्रिषु स्थानेषु बद्धः उरसि कण्ठे शिरसि च। वृषभो वर्षणात् वर्षति शब्दोऽर्थान्। रोरवीति—शब्दं करोतीति सर्वं महाभाष्यस्य पस्पशाह्निके स्पष्टम्। अस्य मन्त्रस्य यज्ञपुरूषपरकतया या योजना निरुक्ते (१३।६) व्यधायि सा तत्रैव द्रष्टव्या।

युक्तं हि कविभिः शब्दवृषभाधिरूढस्यार्थदेवस्योपासनम्। तच्च तदीयस्वरूपज्ञानं विना न संभवतीति स लक्ष्यते—

**पदेन प्रत्ययो यस्य विषयस्योपजायते।**
**ज्ञाप्यज्ञापकभावेन संकेतस्मृत्यनन्तरः ॥२॥**

**सोऽर्थः स चापि वाच्यादिभेदैर्बहुविधो मतः।**
**तत्र मुख्यस्तु वाच्योऽर्थो जातो मानान्तरं विना ॥३॥**

शब्दश्रवणानन्तरं संकेतस्मरणेन मानान्तरसाहाय्यं विना यस्य विषयस्य प्रत्ययो जायते स एव तस्य शब्दस्यार्थः। स्तनितमाकर्ण्य मेघागमनज्ञानं शब्दात् परं जातमपि प्रमाणान्तरमनुमानमपेक्षते. तेन तस्य न शाब्दबोधविषयत्वम्। शब्दार्थयोश्च सम्बन्धो ज्ञापकज्ञाप्यभावः। सोऽर्थस्त्रिविधः—वाच्यो लक्ष्यो व्यङ्ग्यश्चेति। तेषु प्रथमः संकेतग्रहं साक्षादपेक्षते, परौ तु परम्परया। सकेतितार्थस्य बाधे तत्र तात्पर्यानुपपत्तौ वा तयोरुपस्थितेः।

संकेतं विवृणोति—

**शब्देनानेन वाच्योऽयमर्थः शब्दोऽस्य वाचकः।**
**इति सम्बन्धसंवित् सा द्वयोः संकेत उच्यते ॥४॥**

एकार्थकस्याऽपि शब्दस्य विभिन्नभाषासु संकेतभेदेन क्वचिदर्थभेदो दृश्यते—

**एकं होमपदं श्रुत्वा यज्ञमेकः परो गृहम्।**
**अर्थं जानाति तत्रस्थः संकेतं स्वमनुस्मरन् ॥५॥**

संस्कृतभाषाविद् होमपदेन यज्ञरूपमर्थम् आङ्गलभाषाविच्च तेन गृहरूपमर्थमवगच्छति। संकेतभेद एवास्यहेतुः।

सोऽर्थो वाच्यस्तथा लक्ष्यो व्यङ्ग्यश्चेति त्रिधा मतः ।
गङ्गायाः – नीरं तत्तीरं शैत्योत्कर्षादयो यथा ॥६॥

एकस्यैव गङ्गापदस्य वाच्योऽर्थस्तज्जलरूपः, लक्ष्यस्तत्तीररूपः, व्यङ्ग्यश्च तदीयं शीतत्वपावनत्वादिकं तदतिशयो वा ।

एकस्यापि पदस्यायमर्थभेदः किन्निमित्तकः ? व्यापारभेद एवास्य हेतुः । तथाहि—

वक्तृबोद्धव्यशब्दानामभेदेऽप्यर्थभिन्नता ।
व्यापारापेक्षिणी नूनं, न कार्यं कारणं विना ॥७॥

तत्कारणं च शब्दस्य व्यापारा अभिधादयः ।
वाच्यलक्ष्यत्वरूपादिभेदोऽर्थे तन्निमित्तकः ॥८॥

अर्थे वाच्यत्वलक्ष्यत्वादिरूपस्य वैविध्यस्य कारणं स व्यापार एव, न च तस्यान्यथासिद्धता । यतः—

व्यापारेण विनापि स्याद् यदि कार्यस्य संभवः ।
सम्पद्येत कुठारस्य व्यापारेण विनाच्छिदा ॥९॥

सति काष्ठे कुठारे च सत्यपिच्छेत्तरि स्थिते ।
जायते न कुठारस्य व्यापारेण विनाच्छिदा ॥१०॥

तयोश्च शब्दार्थयोः परस्परसम्बन्धो वाचकवाच्यभावो ज्ञापकज्ञाप्यभावो वा, न तु कुम्भकारकुम्भयोरिव कारणकार्यभावः । तस्मात्—

यस्य शब्दस्य संकेतः क्वचित् साक्षाद् विधीयते ।
स एव वाचकोऽर्थश्च तस्य वाच्य उदीर्यते ॥११॥

वाच्य एव च मुख्योऽर्थो बोधिका तस्य चाभिधा ।
प्रथमोपस्थितत्वेन मुखवत् तस्य मुख्यता ॥१२॥

यथा पुरोऽवस्थितत्वान्मुखं प्रथमं दृश्यते तथा प्रथमोपस्थितत्वाद् वाच्यः, स एव च मुख्यः ।

अथ शब्दबोधहेतुनिरूपणम्—

संकेतस्य ग्रहः, शब्द-ज्ञानम्, संकेत-संस्मृतिः ।
एतत् त्रयं च संयुक्तं शाब्दबोधस्य कारणम् ॥१३॥

अमुकशब्दोऽमुकार्थस्य वाचक इति रूपस्तयोर्वाचकवाच्यभावसम्बन्धस्य

निश्चयः संकेतः। तस्य ग्रहो घटपदेन घटरूपास्यार्थस्य शाब्दबोधे प्रथमो हेतुः। ततः कदाचित् तस्य घटपदस्य श्रवणं द्वितीयः। घटपदे श्रुते पूर्वगृहीतस्य शब्दार्थयोः सम्बन्धस्य संकेतस्य स्मृतावुपस्थिति-स्तृतीयो हेतुः। एतेषां सर्वेषां समुदितानामेव शाब्दबोधहेतुत्वं, न कस्यचिदेकस्य द्वयोर्वा।

संकेतग्रहस्य हेतवः—

वाच्यवाचकयोः साक्षात् सम्बन्धस्थापनं तु यत्।
स संकेतग्रहस्तस्य हेतवो बहवो मताः ॥१४॥

संकेतग्रहणं क्वचिद् वचनतः साक्षाद् यथायं घटो
वृद्धानां वचनं निशम्य परतस्तत्तत्क्रियादर्शनात्।
कोशाद् व्याकरणात् प्रतीतसमता व्याप्त्योपमानात् तथा
वाक्ये ज्ञातपदान्तरात् प्रकरणादूहाच्च संजायते ॥१५॥

स संकेतग्रहः क्वचिद् वचनत आप्तोपदेशादित्यर्थः: परत्र वृद्धानां शब्दार्थतत्प्रयोगविदां वचनं निशम्य तदनुजायमाननयनापनयनबन्धनादिव्यापारदर्शनाद्—व्यवहारादित्यर्थः। कोशाद् अमरकोशादेः, 'अमरानिर्जरादेवास्त्रिदशा विबुधाः सुराः' इत्यादिरूपात्। व्याकरणात् प्रकृतिप्रत्ययविभागतद्व्युत्पत्तिरूपात्। उपमानात् गोदृशो गवयो भवतीति श्रुतवतो वने गवयदर्शनान्तरम् अयं गवयपदवाच्यो गोसदृशत्वाद् इति संज्ञासंज्ञिसम्बन्धस्थापनरूपादुपमानप्रमाणात्। कदाचित् प्रतीतार्थकपदकदम्बान्तर्गतस्य अप्रतीतार्थकस्यापि पदस्यार्थज्ञानं प्रतीतार्थानां पदान्तराणां साहाय्याद् भवति। प्रकरणात् पूर्वापरप्रसङ्गबलात्। ऊहात् तर्काच्च स भवतीति। तदुक्तमन्यत्र—

शक्तिग्रहं व्याकरणोपमान-
कोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः॥

ननु स्वीकृतेऽपि संकेतग्रहे पृथक् पृथगवस्थितैर्निरर्थकैः क्रमोच्चरितत्वाद् युगपदेव कात्स्न्र्येनोपस्थातुमसमर्थैश्च वर्णैः कथमर्थावगमसंभवः, यतः—

पदस्यैकैकवर्णो न खण्डशोऽर्थं प्रकाशयेत् ।
पूर्णार्थं प्रति वर्णं चेद् वृथा वर्णान्तरस्थितिः ॥१६॥
तेषामाशु विनाशित्वात् संघातोऽपि न संभवेत् ।
संभूयापि ततस्तेषां नार्थबोधसमर्थता ॥१७॥

घटपदस्य प्रत्येकं वर्णः 'घ्—अ—ट्—अ—ः' इतिरूपः, 'घ—टः' इतिरूपो वा घटरूपमर्थं खण्डशः प्रातिस्विकत्वेन पृथक् पृथक् प्रकाशयेत्, संभूय समग्रं सहैव वा ? न प्रथमो विकल्पः । न हि घकारमात्रश्रवणेन प्रथमस्य घटार्धस्य टकारश्रवणेन चोत्तरस्य घटार्धस्य बोधो जायते, पदार्थभूतस्यैकैकाक्षरस्य निरर्थकत्वात् । प्रत्युत समस्तघटपदश्रवणानन्तरं समग्रघटपदार्थस्यैवावगम इति सर्वेषामनुभवः । किञ्च, कटघटपटादिपदेष्वन्तिमस्य टकारवर्णस्य कोऽर्थः ? यदि घटपदान्तावस्थितष्टकारोऽवशिष्टघटार्धस्य बोधकस्तर्हि पटपदान्तावस्थितष्टकारोऽपि अविशिष्टघटार्ध--वाचकः स्यात् टकारत्वाविशेषात् । अथ पृथक् पृथक्पदस्थितस्य टकारस्य सर्वत्र भिन्नार्थवाचकत्वं तर्ह्यनवस्थाप्रसङ्गः । एवं कचवटकणादिपदेषु प्रथमस्थानस्थितस्य ककारस्य सम्बन्धेऽप्येत एवानुयोगाः संभवन्ति । न द्वितीयो विकल्पः । यदि पदस्थिताः सर्वे वर्णाः संभूय समग्रार्थवाचका इत्यभ्युपगमस्तर्हि सोऽर्थ आकल्पान्तमप्रकाशित एव भवेत्, आशुविनाशिनां तेषां सहभावासंभवात् । अथ कथञ्चित् सहभावप्रकल्पेन नदीदीनपदयोरर्थाभेदः प्राप्नोति, उभयत्र वर्णसाम्यात् । तदुक्तम्—

"एकैकवर्णा सामर्थ्यान्मेलकाऽनुपपत्तितः ।
एकबुद्धेर्नदीदीनसाम्यात् स्फोटः स च द्विधा ।"

अथ दोषमिमं समाधातुं पदगतः प्रत्येकं वर्णः पूर्णार्थसमर्पक इति स्वीक्रियेत तर्हि तत्र वर्णान्तरप्रयोगोऽपार्थकः । अथवा एकार्थकानामनेकवर्णानां प्रयोगे गौरवापत्तिः पौनरुक्त्यं चेत्युभयतःपाशा रज्जुः । ये तु 'नित्या वर्णा न कदाचिदुत्पद्यन्ते प्रत्युत केवलमभिव्यज्यन्ते' इति मन्यन्ते तेषां मतेऽपि पूर्वोक्तदूषणान्यदत्तोत्तराण्येव । तत्का गतिरिति चेत्, उच्यते—

तस्मादखण्डः स्फोटस्तु नित्यः संस्कारसंस्थितः ।
ध्वनिलेखनयन्त्रस्य पट्टिकाङ्कितनादवत् ॥१८॥

पूर्वपूर्वाक्षरज्ञानजन्यसंस्कारसंयुतात् ।
व्यक्तोऽन्तिमस्थवर्णस्यानुभवादर्थबोधकः ॥१६॥

ध्वनिलेखनयन्त्रं–'टेपरिकार्डर' इति नाम्ना प्रसिद्धम् । कर्णेन्द्रियेण गृह्यमाणस्य स्थूलशब्दस्य नित्यत्वे सन्दिह्यमानेऽपि तस्य तत्क्षणविनाशित्वं न सुधियां धियमधिरोहति । सुदूरनभसि समुद्भूतं घनगर्जितं गिरिगुहासु ध्वनिप्रतिध्वनिक्रमेण सुचिरं तिष्ठति । किंच दूरभाषादिषु सन्देशप्रेषणप्रदेशाद् आसन्देशप्राप्तिस्थानं गच्छतस्तस्य कारणात्मना विद्यमानत्वात् ततोऽपि सूक्ष्मतरस्य श्रोतृचित्तस्थस्य पदान्तर्गतप्रथमद्वितीयादिवर्णसंस्काररूपस्य तस्य स्थायित्वं सुतरां बुद्धिगम्यम् । तदुक्तं वेदेऽपि—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥
ऋ० १।१६४।४५ ॥

देवता—वाक् । ऋषिः—दीर्घतमा औचथ्यः । छन्दः—त्रिष्टुप् ।

चत्वारीति—वाचः=वाण्याः । चत्वारि=चतुःसंख्याकानि । परिमिता पदानि=परितो मितानि=इयत्तया निर्धारितानि, पदानि=सुबन्ततिङन्तादिरूपाणि, अथवा भागभूतानि सन्ति । तानि=कर्मपदमिदम् । ये मनीषिणो ब्राह्मणाः=मेधाविनो ब्रह्मविदः सन्ति त एव विदुर्नान्ये सामान्यजनाः । तेषां चतुर्णां पदानां त्रीणि । गुहा=गुहायाम् । निहितानि=नितरां निगूढानि सुधियामेव बुद्धौ वा स्थितानि । नेङ्गयन्ति न चेष्टन्ते=न प्रकाशन्ते=लौकिके व्यवहारे न प्रयुज्यन्ते । तस्या वाच केवलं तुरीयम्=चतुर्थमेव भागं मनुष्या वदन्ति । चरणार्थकः पदशब्द इह लक्षणया चतुर्थांशबोधकः । पशुनां चत्वारि पदानि भवन्ति तत्साम्यात् पादेन पदशब्देन वा चतुर्थांश उच्यते । अत्र सायणः—चत्वारि पदानि=परापश्यन्तीमध्यमावैखरीति । एकैव नादात्मिका वाक् मूलाधारादुदिता सती परेत्युच्यते । नादस्य सूक्ष्मत्वेन दुर्निरूपत्वात् । सैव हृदयगामिनि पश्यन्तीत्युच्यते योगिभिर्द्रष्टुं शक्यत्वात् । सैव बुद्धिं गता=विवक्षां प्राप्ता मध्यमा । मध्ये हृदयाख्ये (प्रदेशे) उदीर्यमानत्वात् । अथ यदा सैव वक्त्रे स्थिता ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा वैखरीत्युच्यते ।' तदुक्तम्—

वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा ।
आन्तरार्था च पश्यन्ति सूक्ष्मा (परां) वागनपायिनी ॥

उक्तरीत्या वक्तृबोद्धव्यबुद्धौ संस्कारात्मना स्थितेन तेन स्फोटेन वर्णसमुदायरूपस्य पदार्थस्यावबोधे न कश्चिद् बाधः । घटपटादिरूपेण पदेन, पदसमूहात्मना वाक्येन, वाक्यकदम्बकस्वरूपेण सन्दर्भादिना च जायमानः स स्फुटति प्रकाशयत्यर्थम् इति व्युत्पत्या स्फोटनाम्नाभिधीयते । इदमुपसंहरति—

एवं व्यस्तैः समस्तैर्वा वर्णैर्नार्थावबोधनात् ।
वर्णभिन्नोऽपि वर्णाभिव्यङ्ग्यः स्फोटोऽर्थबोधकृत् ॥२०॥

स्फुटयते व्यज्यते वर्णैरित्यसौ स्फोट उच्यते ।
अथवार्थः स्फुटत्यस्मादितीयं स्फोटता मता ॥२१॥

एवं स्फोटे तद्द्वारार्थावगमे च स्वीकृतेऽपि कोषव्याकरणादिभिर्ज्ञायमानः स संकेतः कुत्र भवतीति जिज्ञासा नाद्यापि शाम्यतीत्युच्यते—

संकेतस्य ग्रहो जातौ व्यक्तावन्यत्र वा क्वचित् ।
विचार्यमाणेऽस्मिन्नर्थे विवदन्ते मनीषिणः ॥२२॥

तत्र क्षणभङ्गवादिनः सौगताः स्वाभिप्रायमेवं प्रकाशयन्ति । तेषां मते यत् सत् तत् क्षणिकम् । क्षणिके च वस्तुनि संकेतः कर्तुं न शक्यते । अतः अतद्व्यावृत्तिरूपेऽपोहे स कर्त्तव्यः । व्यक्तीनामानन्त्यात् तासां सद्रूपतया क्षणिकत्वात् किंच पराभिमतायाः (तार्किकादिस्वीकृतायाः) नित्यत्वे सत्यनेकसमवेतत्वरूपाया जातेरसिद्धत्वात्, सिद्धत्वेऽपि वा सद्रूपतया तथैव क्षणिकत्वात् तासु तस्यां वा संकेतः कर्तुं न युज्यते, कृतस्यापि वा तस्य क्षणभङ्गप्रसङ्गाद् देशकालान्तरानुगमाऽभावे न पदार्थबोधसमर्थता । अपिच गोपदश्रवणानन्तरं गोभिन्नानां सकलगजाश्वादीनां प्रतिषेधः प्राप्नोति, तस्माद् अतद्व्यावृत्तिरूपो योऽपोहः= तद्भिन्नस्य प्रतिषेध इत्यर्थः, स एव पदस्यार्थस्तत्रैव च संकेतग्रहोऽङ्गीकार्य इति । नन्वभावात्मकेऽपोहे कर्तृकर्मक्रियादिरूपायाः विशेषणविशेष्यभावादिस्वरूपायाः घटपटाद्यात्मिकाया वा विविधतायाः कथं संभवः? नहि गगनारविन्दे रक्तनीलपीततादयो भेदाः स्फुरन्तीति चेत्,

न। नीलं प्रगाढं तिमिरमन्तरिक्षमावृणोतीति प्रतीतिवत् तत्प्रतीतिसंभवात्। तदुच्यते—

न व्यक्तौ क्षणिकत्वतो न च तथा जातावसिद्धेरतद्-
व्यावृत्त्यात्मनि सौगता विदुरतोऽपोहे हि संकेतकम्।
ध्वान्तेऽभावमये वृणोति गगनं नीलं तथेत्यादिवत्,
ख्यातिस्तत्र भवत्यनेकविषया कर्तृक्रियाद्यात्मिका ॥२३॥

वाक्ये गोपदबोध्यं वस्तु=तत्। न तत्=अतत्=गोभिन्नं गजाश्वादिकम्। तस्य प्रतिषेधः=गोपदबोध्यः सास्नादिमान्पिण्ड इत्यर्थः। अस्मिन्नभावात्मकेऽपोहे एव संकेतो युज्यते। अस्य नित्यत्वात्।

अत्रारुचिबीजम्—

अतद्व्यावृत्तिरूपो योऽपोहः शब्दश्रुतेः परः।
सास्नादिमन्तमालक्ष्य श्रोतुश्चेतसि जायते ॥२४॥

प्राप्तायां खलु गोबुद्धावप्राप्तायां भवेत्तु सः?
प्राप्तायां यदि, सा प्राप्तिर्गोपदादन्यथाऽथवा? ॥२५॥

गोपदाच्चेत्? स संकेतो व्यक्तावङ्गीकृतस्त्वया।
अथान्यथा? न तद्धेतुरपोहो भवितुं क्षमः ॥२६॥

कथं पश्चाद् भवोऽपोहस्तां बुद्धिं पूर्ववर्तिनीम्।
जनयेत्, कल्पते सूनुर्न सोतुं निजमातरम् ॥२७॥

अप्राप्तायां च गोबुद्धौ नापोहचरितार्थता।
गोबुद्ध्यभावे तद्भिन्नप्रतिषेधो न कल्पते ॥२८॥

किं च शब्दश्रुतेः पश्चाद् गोबुद्धेरुद्भवो यदि।
तद्भिन्नप्रतिषेधेन तन्निष्पत्तिः पुनर्वृथा ॥२९॥

अस्यायमाशयः- गोपदश्रवणानन्तरं पुरोवर्तिनि सास्नादिमति पिण्डविशेषे अतद्व्यावृत्तिरूपो योऽपोहः क्षणभङ्गवादिनाङ्गीक्रियते स श्रोतुश्चेतसि प्राप्तायां गोबुद्धावप्राप्तायां वा? प्राप्तायां चेत् सा प्राप्तिर्गोपदादेव केनचिदन्येन हेतुना वा? गोपदाच्चेत् व्यक्तौ जातौ वा संकेतग्रहोऽनभिमतोऽपि गलग्रहायते भवतः। अथान्यथा? हेत्वन्तरेण सा प्राप्तिर्भवतीति चेत् स हेतुरपोहो न वक्तुं शक्यः। परवर्त्यपोहः पूर्ववर्तिन्यास्तस्या हेतुत्वं कथं व्रजेत्? नहि सुतो निजजनन्या हेतुर्भवितु-

मलम्। अथाऽप्राप्तायां गोबुद्धावपोहः प्रवर्तत इति चेत् न, यावद् गोबुद्धि-रेव तत्र नोपस्थिता तावत् ततो भिन्नाया गजाश्वादिधियस्तस्याः प्रतिषे-धस्य वा क्वावकाशः ? तस्मादपोहो निष्प्रयोजनः। किंच गोपदश्रवण-मनु गोबुद्धाबुद्बुद्धायां तयैव च व्यवहारसिद्धौ तद्भिन्नप्रतिषेधरूपस्य द्राघीयसोऽध्वनः स्वीकारे वृथा गौरवम्।

इममपोहपक्षमधिक्षिपन्तोऽक्षचरणानुयायिनो जात्याकृतिव्यक्तिषु कस्यां चिदेकस्यां संकेतं प्रतिषिध्य जात्यादिमत्यां व्यक्तावङ्गीकुर्वन्ति। यतः—

शुक्लतादिगुणस्थित्यादिक्रियाणां समाश्रयः।
विशिष्टाकृतिगोत्वादिजातियुग् व्यक्तिरेव हि ॥३०॥

स्थित्यादि= तिष्ठति गच्छत्यादीनामित्यर्थः। विशिष्टाकृतियुक्= सुजातियुक्ता च व्यक्तिरेव।

लभ्यन्ते न विना व्यक्तिं क्वचिज्जातिगुणक्रियाः।
तस्यास्तेषां च सम्बन्धोऽयुतसिद्धो मिथो यतः ॥३१॥

जात्याकृतिगुणैर्व्यक्तौ संभूयैकत्र संस्थितैः।
एका पदार्थता भाति [1]त्रिपाद्यामिव पीठिका ॥३२॥

केवलव्यक्तौ केवलजातौ केवलाऽऽकृतौ वा संकेताभ्युपगमे को दोष इत्याह—

आनन्त्यव्यभिचारशब्दविषयाभेदादयो व्यक्तिषु
दोषा, बन्धनदोहनादिविधयोऽशक्याश्च जातौ तथा।
गोत्वं मृद्गवकेऽपि सञ्जनमियात् किञ्चाकृतौ तार्किकाः
संकेतं प्रतिजानतेऽखिलमतो व्यक्त्यात्मके तद्वति ॥३३॥

यद्यपि दुग्धाहरणादिरूपप्रयोजनाय आनयनापनयनबन्धनदोहनादि-व्यापारयोग्या गोव्यक्तिरेवोपादीयते, तथापि व्यक्तीनामानन्त्याद्

---

१. व्यक्त्याकृतिजातयस्तु पदार्थः। न्यायद० २।२।६५॥ 'प्रधानाङ्गभाव-स्यानियमेन पदार्थत्वम्' इति तत्सूत्रस्थं भाष्यम्। व्यक्त्यादीनां प्रधानत्वस्य गुणभावस्य वा सर्वत्र नैकैव व्यवस्था। कदाचिद् विवक्षावशाद् व्यक्तेः प्रा-धान्यमितरयोर्गुणभावः। अतस्तिसृणां समुदितानां पदार्थत्वेऽपि तासां प्रधान-त्वस्याङ्गभावस्य वा नियमो नास्ति।

व्यभिचाराच्च तत्र संकेतः कर्तुं न शक्यते। न ह्यतीतानागतवर्तमानकालसम्बन्धिसकलगोव्यक्तीनामेकत्र सहोपस्थितिसंभवः, तासामानन्त्याद् उपरतत्वाद् अनुत्पन्नत्वाद्वा। तथाहि एकस्यां गोव्यक्तौ गृहीतसंकेतस्य पुंसो देशान्तरे तद्भिन्नां गोव्यक्ति पश्यतस्तस्यां गोबुद्धिर्न जायेत, भवति तु, तस्माद् व्यभिचारः। किंच गौः शुक्लश्चलो डित्थः इत्यादिप्रयोगेषु व्यक्तिमात्रे संकेतस्वीकारे क्रमेण जातिगुणक्रियार्थकानां गोशुक्लचलपदानामपि डित्थव्यक्तिमात्रवाचकत्वं प्रसक्तं स्यात्, तेन च शब्दानां विषयाभेदः पर्यायवाचकत्वं प्राप्नोतीत्यर्थं। अथ जातौ संकेतस्वीकारे अमूर्तायां तस्यामानयनापनयनादयो व्यापारा न संभवन्ति। आकृतिपक्षाभ्युपगमे मृण्मयगवादिष्वपि गोत्वप्रसक्तिः, न चेष्टाप्रप्तिः। सम्प्रदानाद्यर्थे गोत्वविशिष्टाया गोरेवोपादानात्।

पशुविशेषाकृतिकक्रीडनकेषु कदाचिज्जायमानो गवादिव्यवहारो लाक्षणिकः। सर्वमिदं विभाव्य तार्किकास्तद्वति=जात्याकृतियुक्ते=व्यक्तिरूपेऽर्थे संकेतं प्रतिजानते इत्येष विषयः **'तद्वान् —···शब्दार्थः कैश्चिदुक्तः'** इत्यादिना स्वग्रन्थे काव्यप्रकाशे श्रीमम्मटाचार्येण निर्दिष्टः।

नन्वेकव्यक्तौ कृतेन संकेतेन तज्जातीयकसकलव्यक्तीनां कथं बोध इति चेत् अलौकिकसन्निकर्षान्तर्गतसामान्यलक्षणाख्यप्रत्यासत्त्येत्यवेहि—

**सामान्यलक्षणा नाम प्रत्यासत्तिरलौकिकी।**
**व्यक्तौ कृतोऽपि संकेतो यया जातौ प्रतीयते ॥३४॥**

सामान्यं=जात्यात्मकं लक्षणं स्वरूपं यस्याः सा। प्रत्यासत्तिः=सन्निकर्षो व्यापारो वा। तदुक्तं मुक्तावल्याम्—"तथाहि यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं जातं, तत्र ज्ञाने धूमत्वं प्रकारस्तत्र धूमत्वेन सन्निकर्षेण 'धूमाः' इत्येवं सकलधूमविषयकं ज्ञानं जायते" इति।

अत्रारुचिस्तु—

**किन्तु जात्यादिमद्व्यक्तौ संकेते स्वीकृते सति।**
**केवलस्य गुणस्यैव सामान्यस्याऽपि वा क्वचित् ॥३५॥**

**जिज्ञासायां विवक्षायां वा व्यक्तेरप्युपस्थितिः।**
**अन्धनिमन्त्रणन्यायादनिष्टापि प्रसज्यते ॥३६॥**

**श्वेतः श्यामो न च श्यामः श्वेतः इत्यादि रूपिणि ।**
**पृक्ता व्यक्तिर्गुणान्योन्याभावमात्रेऽप्यभीप्सिते ।।३७।।**

**गवाश्वयोर्विभेदस्य हेतुर्जातिर्हि तद्गता ।**
**प्राप्नोति व्यक्तिसंश्लिष्टा केवलापि विवक्षिता ।।३८।।**

**तस्माज्जात्यादिसद्व्यक्तौ संकेतो नोपपद्यते ।**
**विशेष्ये जायते बुद्धिर्नागृहीतविशेषणा ।।३९।।**

सकृदुक्तं पदं सकृदर्थं गमयतीति न्यायेन गोपदं गोत्वाभिधान एव क्षीणसामर्थ्यं सद् गोत्वमतीं व्यक्तिं तेनैव व्यापारेणाभिधातुं न क्षमम् । तस्माद् व्यक्तेर्बोधाय लक्षणाश्रयणीयेति मीमांसकानामेके । अतो जातिमत्यां व्यक्तौ संकेत इति पक्षो न क्षोदक्षम इति ।

अत्र मीमांसकानामभिमतम्—

**मते मीमांसकानां तु जातौ संकेत इष्यते ।**
**अनेकास्वपि गोव्यक्तिष्वनुस्यूतैकगोत्ववत् ।।४०।।**

गुणेष्वप्येकगुणत्वरूपा जातिर्यथा—

**हिमहारादिनिष्ठेषु भिन्नेषु धवलादिषु ।**
**गुणेष्वभिन्नताहेतुर्धवलत्वं विलोक्यते ।।४१।।**

व्यक्तौ जातिं व्यक्तीकरोति—

**एवं शैशवतारुण्यवृद्धत्वपरिवर्त्तिनि ।**
**स एवायमिति ख्याते हेतुरस्त्येकचैत्रता ।।४२।।**

शैशवयौवनादिभेदभिन्नासु प्रतिक्षणमुपचीयमानापचीयमानपरिवर्तमानासु चैत्रादिव्यक्तिष्वपि एका चैत्रता, स एवायं युवा चैत्रो यः शैशवे दृष्ट इत्याद्यात्मकानुगतप्रतीतेर्हेतुः ।

व्यक्तौ जातिं प्रदर्श्य व्यक्तिवाचकशब्देऽपि जातिं निरूपयति—

**बालवृद्धशुकाद्युक्ते चैत्रादौ व्यक्तिवाचके ।**
**विद्यते श्रुतिभेदेऽपि जातिरेकैव चैत्रता ।।४३।।**

अथ क्रियायाम्—

**गवाश्वाशनिशब्दानां विभिन्नासु गतिष्वपि ।**
**अभिन्नव्यवहारस्य गतित्वं हि निबन्धनम् ।।४४।।**

सैव जातिर्गुणं द्रव्यं क्रियां व्याप्याधितिष्ठति ।
तस्यां कृतश्च संकेतः स्वयं सर्वासु जायते ।।४५।।

ननु जातौ कृतेन संकेतेन व्यक्तेर्बोधोऽनुपपन्नो व्यभिचाराद् इति तु न वाच्यम्—

संकेतो यत्र तस्यैव तेन बोध इति स्थितौ ।
गोव्यक्तेर्गोपदाद् बोधे व्यभिचारो न शङ्क्यताम् ।।४६।।

वाक्याद् गामानयेत्यादिरूपाद् गोत्वेऽप्युपस्थिते ।
जातेर्व्यक्त्यविनाभावाद् गोव्यक्तिस्तत्र लक्ष्यते ।।४७।।

इत्थं जातौ कृतेनैकसंकेतेन कृतार्थता ।
यदि स्यात् तस्य सर्वासु करणे गौरवं वृथा ।।४८।।

किंतु मतमेतदपि मतिमतां न संमतम् । यतः—

रूढिः प्रयोजनं वा द्वे लक्षणोद्भवकारणे ।
तयोर्द्वयोरभावे तु लक्षणायाः कथापि का ? ।।४९।।

गोत्वाद् गोव्यक्तिबोधः स्यादिति रूढिर्न विद्यते ।
जात्या प्रत्यायने व्यक्तेर्न च किंचित् प्रयोजनम् ।।५०।।

रूढिस्तादृशी प्रसिद्धिः किंचित् प्रयोजनं वा लक्षणोद्भवे हेतू भवतः। 'कलिङ्गः साहसिकः' इत्यत्र देशवाचकं कलिङ्गपदं तादृशव्यवहार-कारणात् तत्रत्यं पुरुषमप्यभिधत्ते इति रूढिः । तथा 'गङ्गातटे घोषः' इति कथनेन येषां शीतत्वपावनत्वादीनामतिशयस्य बोधो न भवति तदर्थं 'गङ्गायां घोष' इति लक्षणाश्रीयते । इदं शीतत्वपावनत्वाद्यति-शयबोधनं च प्रयोजनम् । अनयोरन्यतरस्य हेतोरभावे न लक्षणाया अवकाशः । गामानयेत्यादिवाक्ये तु जातिसंकेतवादिमते गोपदेन गो-त्वोपस्थितौ तद् गोत्वं गोव्यक्ति बोधयेद् ईदृशी रूढिर्नास्ति नवा किंचित्प्रयोजनम् । तेनाऽत्र न लक्षणा । तस्मान्मतमिदपि न रुचिकरम्, इत्याह—

तस्मान्मीमांसितं सम्यङ् मतमेतन्मनीषिभिः ।
न विचारसहं किंचित् कथंचित् प्रतिभाति नः ।।५१।।

अथ वैयाकरणानामुपाधिवादः—

क्षणभङ्गवादिनामपोहे नैयायिकानां जातिविशिष्टव्यक्तौ मीमां-

सकानां च जातौ संकेते समासेनारुचिं प्रदर्श्य वैयाकरणमतमुपाधिषु संकेतपक्षं निरूपयति—

अन्यबोधोऽन्य संकेताच्छाब्दिकेभ्यो न रोचते ।
तेषां संकेत्यभेदेन संकेतोऽपि चतुर्विधः ॥५२॥

यद्यन्यत्रापि संकेतादन्यबोधस्य संभवः ।
गोव्यक्तौ कृतसंकेतादश्वबोधोऽस्तु गोपदात् ॥५३॥

तस्मात् शब्दस्य ये चत्वार उपाधयः सन्ति तेष्वेव तदा तदा संकेतो भवतीति पक्ष एव श्रेष्ठ इत्याह—

वाक्ये चैत्रः पुमान् गौरो यातीत्यस्मिन्नुपाधयः ।
जातिर्गुणः क्रिया चेति व्यक्तावेव स्फुरन्त्यमी॥५४॥

व्यक्तेरेषां पृथग्भावः क्वचिन्नैवोपपद्यते ।
जात्यादीनां सदा द्रव्येणाविनाभावदर्शनात् ॥५५॥

व्यवहारोपयोगित्वाद् व्यक्तिरेव तु गृह्यते ।
न जलाहरणाद्यर्थे घटत्वं घटते क्वचित् ॥५६॥

संकेतस्य ग्रहः किन्तु व्यक्तौ सर्वत्र नोचितः ।
अनन्तत्वाद् व्यभिचारादभिन्नार्थतया तथा ॥५७॥

अभिन्नार्थतया=चैत्रो गौरः पुमान् यातीत्यत्र घटकलशवत् सर्वेषां पर्यायवाचकत्वप्रसङ्गादित्युक्तं प्राक् ।

अनन्तानां कथं तासां व्यक्तीनां सह संस्थितिः ।
तदभावे कथं तासु संकेतग्रहसंभवः ॥५८॥

एकस्यां गवि संकेतो गोपदस्य भवेद् यदि ।
तेनैवान्यगवां बोधे व्यभिचारो न वार्यते ॥५९॥

अयं चैत्रः पुमान् गौरो यातीत्यादि पदानि चेत् ।
व्यक्तौ संकेतितानि स्युः सर्वेषां चैकवाचिता ॥६०॥

एकार्थवाचिनां तेषां पौनरुक्त्यमपार्थकम् ।
विषयस्याविभागश्चाभिन्नार्थेष्वखिलेष्वपि ॥६१॥

व्यवस्था न भवेदेवं विशेषणविशेष्ययोः ।
कर्तृकर्मक्रियादीनां तथोद्देश्यविधेययोः ॥६२॥

पर्यायवाचकत्वे च रक्तपुष्पादिशब्दयोः ।
विशेषणविशेष्यत्वं न भवेद् घटकुम्भवत् ।।६३।।

तस्मादुपाधिभेदेन पदानां चतुर्विधत्वं तदनुरूप एव च संकेतग्रहः स्वीकार्यः—

जातौ गवादिशब्दानां शुक्लादीनां तथा गुणे ।
गच्छतिप्रभृतीनां च क्रियासु गमनादिषु ।।६४।।

चैत्रडित्थादि शब्दानां व्यक्तौ च व्यक्तिवाचिनाम् ।
उपाधिष्वेव संकेतो जायतेऽसौ चतुर्विधः ।।६५।।

उपाधिस्वरूपविवेचनम्—

उपाधिर्द्विविधो वस्तुधर्मो यादृच्छिकस्तथा ।
सिद्धसाध्यत्वभेदेन प्रथमोऽपि पुनर्द्विधा ।।६६।।

सिद्धस्य वस्तुधर्मस्य भेदद्वयमुदीर्यते ।
प्राणप्रदः पदार्थस्य जात्याख्यः प्रथमस्तयोः ।।६७।।

व्यक्तिभेदेन भिन्नेषु बहुष्वप्येकजातिषु ।
समानाकृतिनिर्ग्राह्या जातिरेकैव तिष्ठति ।।६८।।

स्वात्मानं लभते व्यक्तिर्नहि जातिं विना क्वचित् ।
जात्या कृतात्मलाभा तु गुणैः सैव विशेष्यते ।।६९।।

न हि व्यक्तिः स्वरूपेण कापि गौरथवाप्यगौः ।
किन्तु गोत्वाभिसम्बन्धादेव गौरभिधीयते ।।७०।।

तदुक्तम्—

'न हि गौः स्वरूपेण गौर्नाप्यगौः, गोत्वसम्बन्धात् तु गौः' इति वाक्यं व्याचक्षाणेन श्रीपण्डितराजेन रसगङ्गाधरे—'गौ सास्नादिमान् धर्मी स्वरूपेण अज्ञातगोत्वकेन धर्मिस्वरूपमात्रेण न गौः=न गो-व्यवहारनिर्वाहकः, नाप्यगौ=नापि गोभिन्न इति व्यवहारस्य निर्वा-हकः । तथा सति दूरादनभिव्यक्तसंस्थानतया गोत्वाऽग्रहदशायां गवि गौरिति गोभिन्न इति वा व्यवहारः स्यात् स्वरूपस्याविशेषात् । घटे गौरिति गवि चागौरिति वा व्यवहारो भवेदिति भावः । गोत्वाभि-सम्बन्धाद्=गोत्ववत्तया ज्ञानादेव गौर्गोशब्दव्यवहार्यः' इति । तदु-च्यते—

अज्ञायमानगोत्वायां दूरस्थायां गवि क्वचित् ।
किञ्चिदित्यात्मकं ज्ञानं जायते निर्विकल्पकम् ॥७१॥

गोत्वादिमति संजाते ज्ञाने तु सविकल्पके ।
गोहयाद्यात्मको बोधो जायते गोहयादिषु ॥७२॥

कश्चित् स्वरूपमात्रेण स्याच्चेद् गौरथवाप्यगौः ।
हयादेरपि गोत्वं स्यात् तत्र स्वरूपसत्तया ॥७३॥

गोहयहस्त्यादिष्वपि सर्वेषु पदार्थेषु स्वं स्वं रूपं भवति, गोत्वहयत्वादिजात्यात्मकज्ञानशून्यं तु तन्न परस्परपरिच्छेदकारकम् ।

अथ पदार्थस्य सिद्धो द्वितीयो वस्तुधर्मो गुणाख्यः—

अपेक्ष्य जातिं गौणत्वाद् गुणनाम्ना प्रकीर्तितः ।
द्वितीयो वस्तुधर्मस्तु सिद्धो वैशिष्ट्यमात्रकृत् ॥७४॥
एकेन गोत्वधर्मेण सजातीया परस्परम् ।
शुक्ला गा अन्यवर्णाभ्यो विशेषयति शुक्लता ॥७५॥

तत्र जातिर्नित्या, गुणास्त्वनित्याः । गौस्तावद् गौर्यावत् तत्र गोत्वम् । घटादेः श्यामतादयो गुणाः पाकादिना निवर्तन्ते । किञ्च प्रथमक्षणे निर्गुण एवोत्पद्यते द्रव्यम् इति वैशेषिकमतम् ।

अथ पदार्थानां तृतीयो धर्मः साध्यक्रियाभिधः—

वृश्चत्यादिभिराख्यातैः पदैर्या त्वभीधियते ।
तत्र पूर्वापरीभूतावयवत्वविवक्षया ॥७६॥

परशूत्क्षेप—निक्षेपाभीक्ष्णतादि—निरूपिता ।
काष्ठनिष्ठद्विधाभावादिफला कारकाश्रया ॥७७॥

क्रियेत्याख्यायते साध्या सा [1]व्यापारपरम्परा ।
साध्यताफलनिष्पत्तेः क्रमेण जायमानता ॥७८॥

---

१. एवमावश्यकभोज्योपादानपूर्वको ज्वलनपचनभाजनाधिश्रयणाद्यवश्रयणान्तो जलानलकरणकतण्डुलादिविक्लेदफलकः सकलव्यापारकलापः पचतिपदेनोच्यते । अत्रापि तण्डुलदाल्यादीनां प्रथमपात्राद् विभागः पिठरादिना संयोगः पिठरादेर्भूतलाद् विभागश्चुल्या संयोगः, लवणहरिद्राचूर्णादेः स्वपात्राद् विभागो दाल्यादिना संयोगः, दर्वीघट्टनेन पिठरस्य विभिन्नप्रदेशैः संयोगो विभागश्च, जलाग्निसंयोगेन तण्डुलादिकणावयवानां विभागः इतीदृशाः विविधव्यापाराः

सर्वास्वपि क्रियासु स्वयमूह्याः। इत्थमनेकसंयोगविभागैरेकोऽवान्तरव्यापारस्तथा-विधैरनेकैस्तैश्चैका क्रिया निर्वर्त्यते।

उपपन्ना ननु वृश्चतिपचतिगच्छतिप्रभृतिषु क्रियासु संयोगविभागसंततिरवान्तरव्यापारपरम्परा च, न तु सा जीवति तिष्ठति स्मरतीत्यादिष्विति चेत्—

श्वासोच्छ्वासैः सततहृदयस्पन्दनै रक्तगत्या,
कोशानां च त्रुटनघटनैः प्राक्तनानां नवानाम्।
अन्तर्ग्रन्थिस्रवणपचनप्रक्रियाचेतनाभिर्
निश्चेष्टः सन् बहिरिह पुमानुच्यते जीवतीति ॥१॥

अनिवार्याः क्रियाः सर्वाः जीवितुं श्वसनादिकाः।
प्रवर्तन्ते स्वभावेनाऽज्ञायमाना अपि स्वयम् ॥२॥

तिष्ठतां स्वपतां वापि पठतां ध्यायतां तथा।
कायिक्यो मानसिक्यो वा विरमन्ति न ताः क्षणम् ॥३॥

सम्यग् विविच्यमाना तु न साऽस्ति जगति क्रिया।
व्याप्नोति संततिर्नैव यां संयोगविभागयोः ॥४॥

नन्वेवं संयोगविभागसंततिव्यतिरिक्तायाः क्रियायाः कर्मेतराभिधानायाः पदार्थान्तरत्वं प्रत्याख्यातं भवति, यतः—

उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च॥
(मुक्तावल्याः प्रत्यक्षखण्डे ६ष्ठी कारिका)

इह कर्मत्वेनाभिमतेषु व्यापारेषु=उत्क्षेपणादिषु संयोगविभागाभ्यामन्यत् किं यत् क्रियानाम्नाभिधीयते इति चेत्, सत्यमुक्तं भवता। वस्तुतः कारकाणां भेद एव संयोगविभागसंततौ तान् विवर्तान् दर्शयति यैः सा भवति-एधते-चलति-धावति-सर्पति-वहति-जानाति-ध्यायति-हरतीच्छतीत्यादिभिर्विभिन्नाख्यातनामभिर्व्यवह्रियते। अतः—

अनेकसंयोगविभागरूपा
पूर्वापरीभूतविभिन्नभागा।
एकाऽपि सा कारकभेदभिन्ना
क्रियोच्यते तैर्विविधाभिधानैः ॥५॥

किन्त्वस्ति गूढो विषयोऽयमत्र

**यत्कृते सकलारम्भो यस्मिन् स पर्यवस्यति ।**
**स एव भावनाद् भावस्तस्य चात्र प्रधानता ।।७९।।**

इह छेत्तव्यकाष्ठैकभागस्यापरकाष्ठोपरिस्थापनम्, तदुपरि पौनःपुन्येन परशूत्क्षेपनिक्षेपसंततिः, अन्तराऽन्तरा क्वचिद् घर्षणेन परशुधारातीक्ष्णीकरणम्, मध्ये विरम्य धूमवर्तिपानं चेत्यादयोऽवान्तरव्यापाराश्छिदिक्रियाया घटकत्वेन परिगणयितुं शक्यन्ते । विस्तरभिया विषयोऽयं नेह प्रतन्यते ।

अथ वक्तृभिर्वस्तुनि व्यक्तौ वा स्वेच्छयाऽऽरोपितो न तु यथार्थो धर्मश्चतुर्थ उपाधिर्यथा देवदत्त इत्यादिसंज्ञा ।

**यादृच्छिक उपाधिस्तु तुरीयो यो ह्यसन्नपि ।**
**स्वेच्छयाऽऽरोप्यते व्यक्तावेकस्यामेव केवलम् ।।८०।।**

**नापेक्षा तत्र जात्यादेः प्रकृतिप्रत्ययार्थयोः ।**
**पूर्णं तदंशमात्रं वा नाम पूर्णार्थवाचकम् ।।८१।।**

पुत्रादितत्तत्पदार्थादीनां वा नामकरणे व्यवहारोपयोगित्वात् संकेतस्यैव प्राधान्यम् । पुत्रादिविषये शुभाशंसादिकं तु तत्र गौणम् । यथा—

श्रुतस्य यायादयमन्तमर्भकस्
तथापरेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थविच्
चकार नाम्ना रघुमात्मसंभवम्।। रघु० ३।२१।।

तेन कश्चिदन्धोऽपि कमलनयनो, दरिद्रोऽपि वा लक्ष्मीपतिरभिधीयते । नाम्न एकदेशस्तदंशयोः प्रथमाक्षराणि केचनाऽन्येऽपि प्रकारा वा पूर्णनामार्थबोधकाः । यथा भीमसेनो भीमः । रामचन्द्रो रामः । सत्यभामा सत्या[1] । शुक्लदिवसः शु. दि.[2] । बहुलदिवसः

---

बुधा हि याथार्थ्यविदः प्रमाणम् ।
व्यधायि चर्चेयमिह प्रसङ्गाद्
मया तु विद्यार्थिकुतूहलाय ।।६।।

१. उत्तरभागेनापि लोके व्यवहारो दृश्यते । तद्यथा—देवदत्तो दत्तः; सत्यभामा भामेति (द्र० महा० १।१। आ० १) ।

२. यदा तु द्वयोः पदयोराद्याक्षरौ संयोज्य एकीक्रियेते तदा तादृशोऽक्षर-

ब. दि.। रामलालो रा. ला.। लाइट ऐम्प्लिफिकेशन स्टिम्युलेटड एमिशन ओफ रेडियेशन=लेसर (Lacer) एवं यू. के., यू. ऐस. ए.; यू. एन. ओ इत्यादीनि नामानि।

एवं जातिगुणाद्युपाधिसम्बन्धेन पदानां चतुर्विधत्वं प्रतिपाद्य तेषां यौगिकादयो भेदा अर्थज्ञाने विशेषोपयोगित्वात् प्रदर्श्यन्ते। यौगिकादि-भेदेन पदानामर्था अपि चतुर्विधा इत्युच्यते—

**यौगिकं च तथा रूढं योगरूढं तथैव च।**
**तुर्यं यौगिकरूढं च पदमित्थं चतुर्विधम् ॥८२॥**

**तत्रयौगिकं पदम्—**

**केवलावयवानां हि प्रकृतिप्रत्ययात्मनाम्।**
**शक्त्यार्थबोधकं यत्तु पदं तद् यौगिकं मतम् ॥८३॥**

**पाकार्थकात् पचेर्धातोः कर्तरि प्रत्यये ण्वुलि।**
**निष्पन्नात् पाचकाच्छब्दात् पाककर्ता प्रतीयते ॥८४॥**

इह हि प्रकृतिप्रत्ययात्मनाम् इति कथनेन यथावसरम् उपसर्गादे-रपि ग्रहणम्। यथा—

**इन्द्रो यातूनामभवत् पराशरो**
**हविर्मथीनामभ्याविवासताम्।**
**अभीदु शक्रः परशुर्यथा वनं**
**पात्रेव भिन्दन् सत एति रक्षसः॥**

ऋ० ७।१०४।२१॥

देवता—इन्द्रः। ऋषिः—वसिष्ठः। छन्दः—जगती।

इन्द्रः=ऐश्वर्यवान् प्रतापी वा नृपः। हविर्मथीनाम्=हविर्यज्ञार्थं द्रव्यं मथ्नन्तीति तेषाम्। अभ्याविवासताम्=अभिक्रम्य सर्वतो विनाशकारिणाम्। यातूनाम्=प्रजाभ्यो यातनादायिनां रक्षसाम्=दुर्जनानां पराशरः=नाशकः। अभवत्=भवति भवतु वा। अथवा—आविवासताम्=त्वां परिचरतां तव भक्तानां हवींषि ये मथ्नन्तीति तथाविधानां यातूनां पराशरः=विनाशको भवतीति विश्वासं भव-

संमूहो निपातेष्वन्तर्भाव्यते। यथा—'अद्य अस्मिन् द्यवि' (निरु० १।६) यदा 'अस्मिन् द्यवि' इत्यनयोः पदयोराद्यक्षरौ अ+द्य एकीक्रियेते तदा 'अद्य' इति पदं निपातसंज्ञां लभते। एवमेव शुदि-बदि इति निपातेषु पठ्यते। यु० मी०

त्विति चाभ्यर्थनां व्यनक्ति । स हि शक्रः=रक्षसां दलने शक्तः इन्द्रः । रक्षसो राक्षसान् हन्तुमिति शेषः । रक्ष्यतेऽस्मादिति रक्षधातोः असुन्-प्रत्यये रूपम् । तथा अभीदु एति=तथा अभ्येत्येव । अभि+इत्+उ इति पदच्छेदः । अभि=आभिमुख्यार्थे । इत्=एवार्थे । उ=विनिश्चयार्थे पदपूरणाय वा निपातः । कथमभ्येति ? यथा परशुः=परशुहस्तः पुरुषः वनं छेत्तुम् । इह छेत्तुमिति योज्यम् । जडस्य परशोरागमनमनुपपद्यमानं परशुपाणिं पुरुषं लक्षयति । सम्मुखागतस्य वृक्षस्यच्छेदने यथा परशुः छिन्द्यां न वा छिन्द्यामिति विकल्पं न करोति तथा स राक्षसान् नाशयत्येवेति निश्चयोऽत्र व्यज्यते । अथवा स शक्रः पात्रेव भिन्दन्=पात्राणीव भिन्दन् । यथा कश्चिदपरः कुम्भकारस्य भङ्गुराणि भाजनानि हेलयैव भिन्दन् समागच्छति तथा स रक्षसः=प्रजापीडकान् जनान् नाशयितुं सतः=सुदूरप्रदेशादपि । एति=अवश्यमागच्छति ।

इदि परमैश्वर्ये, इन्धि दीप्तौ । इन्दतेः इन्धतेर्वा 'र' प्रत्यये रूपम् । 'ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्रेरामालाः' इत्युणादि (२।२९) सूत्रेण निपात्यते । शक्रः शक्नोतेः । 'स्फायितञ्चिवञ्चिशकिः०,' इत्युणादि (२।१३) सूत्रेण रूपसिद्धिः । पराशरः=परा शातयिता यातूनाम् । यातुः यातयतिर्वधकर्मा (निघण्टौ० २।१९) सतः=संसृतं भवति (निरुक्त ३।२०), दूरगतं भवतीत्यर्थः । इह परशुर्यथा वनम् इति, पात्रेव भिन्दन् इति चेत्युपमाद्वयम् । पराशरपदमिह यौगिकं न तु लोके भगवद्व्यासपितृत्वेन प्रसिद्धस्य पुरुषविशेषस्य नाम । तदुच्यते—

पराशरपदं व्यक्तिविशेषस्य न वाचकम् ।
परशातनकर्त्रर्थं मन्त्रेऽस्मिन् यौगिकं हि तत् ॥८५॥

तथैश्वर्यातिरेकेण प्रकर्षाजत् तेसोऽथवा ।
इन्दतेरिन्धतेर्वेन्द्र आत्मा राजेश्वरोऽथवा ॥८६॥

शक्नोतेश्च नृपः शक्रः शक्तः पालयितुं प्रजाः ।
मध्यस्थानोऽथवा देवः शक्तस्त्रातुं जलैर्जगत् ॥८७॥

मध्यस्थानदेवतास्विन्द्रो निरुक्ते पठितः 'इरां ददाति, इरां दधाति, इन्धे भूतानि । यद् एनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वम् । इन्दतेर्वैश्वर्यकर्मणः । इन्दन् शत्रूणां दारयिता वा, इति सर्वत्र यास्कः (द्र० नि०

१०।८)। अथवा इरां जलं दृणाति खण्डयति द्वयोस्तत्त्वयोरुदजनौ-षजनरूपयोरिति। विद्युद्धाराप्रवेशेन जलं द्वयोस्तत्त्वयोर्विदीर्णं भवति। इरा जलम्। 'इरा भूवाक्सुराम्बुषु'इति मेदिनी। दक्षिणदिशोऽधिपत्यर्थे त्विन्द्रपदं रूढम्। तदुक्तम्–'दक्षिणा दिगिन्द्रोऽधिपतिः' अथर्व० ३।२७।२।

अथवा—

यः प्राणतो निमिषतो महित्वै-
क इद् राजा जगतो बभूव।
य ईशे अस्य द्विपदश्चतुष्पदः
कस्मै देवाय हविषा विधेम ॥ऋ० १०।१२१।३

देवता—कः (प्रजापतिः), ऋषिः—हिरण्यगर्भः प्राजापत्यः। छन्दः—त्रिष्टुप्।

यः=प्रजापतिः। प्राणतः=जीवनवतश्चेतनस्य। निमिषतः=अचेतनस्य च जगतः=विश्वस्य। महित्वा=स्वालौकिकमहिम्ना। एक इत् राजा बभूव=एक एव=स्वसदृशद्वितीयरहितः स्वामी बभूव=आसीत् अस्ति भविष्यति च। परमात्मसम्बन्धिना बभूवेत्यनेन कालत्रयस्य ग्रहणम्, तस्य नित्यत्वात्। योऽस्य द्विपदः=पादद्वययुक्तस्य मनुष्यादेः। चतुष्पदः=चरणचतुष्टयवतो गवाश्वादेश्च सर्वस्य जगतः। ईशे=ईष्टे=प्रभवति=स्वाम्यस्ति। तथाविधाय कस्मै=वाङ्मनसागोचराय निरुपाख्यरूपायेत्यर्थः। हविषा=भक्तिरूपेण हव्येन विधेम=परिचरेम। इह प्राणितीति प्राणन् तस्य प्राणतः=प्र+अन प्राणने+शतृप्रत्यये षष्ठ्यन्तं रूपम्। नि+मिष अक्षिसंकोचे धातोः शतरि रूपम्। राजा=राजतेः रञ्जतेर्वा कनिन् प्रत्यये साधुः (उणादि १।१५६)। निमिषतः इत्यनेन यद्यपि पक्ष्म-पातरहितस्येत्युक्तं भवति, तथापि मन्त्रान्तर्गतस्य प्राणतः इति पदस्य सान्निध्यात् तत्प्रतिकूलस्य अप्राणतोऽचेतनस्येत्यर्थस्य ग्रहणमुचितम्। इह प्राणतः इत्यादीनि पदानि यौगिकानि। द्विपदश्चतुष्पदः इत्यत्र 'संख्यासुपूर्वस्य' (पाणि० ५।४।१४०) इति सूत्रेण पादस्यान्त्यस्य लोपः, ततश्च भसंज्ञायां 'पादः पत्' (पाणि० ६।४।१३०) इत्यनेन पादस्य पद्भावः। गच्छतीति जगत्। सर्वदा परिवर्तनात्। अथवा कमिति सुखनाम, तस्मै सुखस्वरूपायेत्याशयः। असर्वनाम्नोऽपि सर्व-नामत्वं छान्दसम्।

अथ रूढं पदम्—

प्रकृतिप्रत्ययाद्यर्थनैरपेक्ष्येण सर्वथा ।
समुदायस्य शक्त्यैव स्वकीयार्थसमर्पकम् ।।८८।।

अव्युत्पन्नं पदं रूढं तद् द्वितीयप्रकारकम् ।
यथा डित्थ-डवित्थादि यथा वाखण्डलादिकम् ।।८९।।

यद्यपि दशरथदेवदत्तरामरोहितादिपदानां प्रकृतिप्रत्ययादि-विश्लेषणपूर्वकं व्युत्पत्तिः सुशका, तथापि तत्र व्युत्पत्तिलभ्येनार्थेन न किमपि प्रयोजनं, तेषां संकेतमात्रफलकत्वात् । तद् विवृणोति—

अन्यो व्युत्पत्तिलभ्योऽर्थो, निमित्तमपरस्तथा ।
प्रवृत्तेरिह शब्दानाम्, सर्वत्र नैकता तयोः ।।९०।।

अस्ति व्युत्पत्तिलभ्योऽर्थो यो गच्छति स गौरिति ।
तथापि सर्वं गच्छन्तमभिधत्ते न गोपदम् ।।९१।।

प्रसज्येताऽन्यथा-शेते गौ-रित्यत्राऽपि लक्षणा ।
बाध्यते शयनं यस्मात् साकं गमनकर्मणा ।।९२।।

पिण्डे सास्नादिमत्येव तत्प्रवृत्तिनिमित्तता ।
सीमिता तेन गच्छन्तमश्वं नाभिदधाति तत् ।।९३।।

तत्=गोपदमित्यर्थः ।

स्यात् प्रवृत्तिनिमित्तस्य बोधेऽर्धस्य तु लक्षणा ।
न तु व्युत्पत्तिलभ्यस्य केवलस्येति सुस्थितम् ।।९४।।

व्युत्पत्तिलभ्यताऽर्थस्य प्रवृत्तेश्च निमित्तता ।
यौगिकेषु पदेष्वेव द्वयमेकत्र संगतम् ।।९५।।

पित्रादिकृतसंकेते रूढे वा व्यवहारतः ।
पदे व्युत्पत्तिलभ्योऽर्थो भवन्नप्यविवक्षितः ।।९६।।

तदुदाहरति[1]—

सप्त त्वा हरितो रथे वहन्ति देव सूर्यः । शोचिष्केशं विचक्षण ।
ऋ० १।५०।८ देवता=सूर्यः । ऋषिः=प्रस्कण्वः । छन्दः—गायत्री ।

---

१. वेदानां ये पौरुषेयत्वं मन्यन्ते तेषां मतेनेह ग्रन्थकारो लोकव्यवहारादि-वशाद् रूढतामापन्नानां पदानां प्रयोगनिदर्शनाय कांश्चिन्मन्त्रान् उदाहरति ।

हे विचक्षण देव=सर्वस्य द्रष्टः प्रकाशयितो वा द्योतमान। सप्त-संख्याका हरितः=सप्तवर्णारश्मयस्तन्नामानोऽश्वा वा। शोचिष्केशं=शोचींषि तेजांसि केशा इव यस्येत्युपमा। शोचींष्येव केशा यस्येति रूपकं वा। तथाविधं त्वां रथे तिष्ठन्तं वहन्ति। सूर्ये देवत्वारोपात् तस्य केशादिभिः, रथेन च सम्बन्धो नाऽनुपपन्नः। सूर्यपदं भान्वर्थं बहुशः प्रयुक्तं, लोके प्रसिद्धं कोशेषु च तदर्थकेषु शब्देषु पठितं तस्माद् रूढम्। 'सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः' (३।२८) इत्यमरः। 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः। रोचिः शोचिरुभे क्लीबे' (३।३४) इत्यमरः। 'हरिद् दिशि स्त्रियां पुंसि हयवर्णविशेषयोः' इति मेदिनी।

तथा—

**सर्वं तद्राजा वरुणो विचष्टे**
**यदन्तरा रोदसी यत् परस्तात्।**
**संख्याता अस्य निमिषो जनानाम्**
**अक्षानिव श्वघ्नी निमिनोति तानि॥**

**अथर्व० ४।१६।५॥**

देवता—वरुणः। ऋषिः—ब्रह्मा। छन्दः—भुरिक् त्रिष्टुप्।

यत् किंचिद् अन्तरा रोदसी=द्यावापृथिव्योरन्तराले। ततोऽपि परस्ताद् वा विद्यते तत् सर्वं राजा वरुणो विचष्टे=पश्यति। जनानां निमिषः अस्य संख्याताः। निपूर्वस्य मिषतेः 'संपदादिभ्यः क्विप्' इति वार्तिकेन स्त्रियां भावे क्विप्प्रत्यये रूपम्। प्रतिपुरुषं तस्य नयननिमीलनोन्मीलनयोरियत्तामपि स जानाति। निमेषोन्मेषयोः संख्याज्ञानद्वारा प्राणिनामायुषः परिमाणं पुण्यपापादिकं च सर्वं स वेत्तीति भङ्ग्यन्तरेण प्रतिपादनात् पर्यायोक्तालंकारः। 'पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते' (सा० द० परि० १०)। वरुणः पश्चिमदिशोऽधिपतिः प्राणिनां कृतमकृतं वा सर्वं पश्यति पापिनश्च स्वपाशैर्बध्नाति।

तदुक्तम्—

**प्रतीचो दिग्वरुणोऽधिपतिः पृदाकुः। अथर्व काण्ड ३ सू० २७ म० ३४॥**

---

स्वकीयं मतं तु ग्रन्थकृद् अग्रे अस्मिन्नेवोन्मेषे 'ननु भवतु लोके यौगिकत्वादिनिमित्तं पदानां चतुर्विधत्वम्' इत्यादिना वक्ष्यति।

उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥
ऋ० १।२४।१५॥

अपिच—

शतेन पाशैरभिधेहि वरुणैनं
मा ते मोच्यनृतवाङ् नृचक्षः।
आस्तां जाल्म उदरं श्रंसयित्वा
कोश इवाऽबन्धः परिकृत्यमानः ॥
अथर्व० ४।१६।७॥

'प्रचेता वरुणः पाशी यादसांपतिरप्पतिः' (१।५६) इत्यमरः। वरुणपदमिह रूढम्।

यथा वा—

अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारम्।
मृळा सुक्षत्र मृळय ॥ ऋ० ७।८९।४॥

देवता—वरुणः। ऋषिः—वसिष्ठः। छन्दः—गायत्री।

हे वरुण देव अपां मध्ये तस्थिवांसमपि माम्। जरितारम्=तव स्तोतारम्=भक्तमित्यर्थः। तृष्णा अविदत्=पिपासा पीडयतीत्यद्भुतम्। हे सुक्षत्र=क्षतात् शोभनत्रातः=दुःखापहारक देव। मां मृड=मां सुखय। मृडय=मया निमित्तभूतेन अन्यानपि मद्विधान् पीडितान् सुखय। सर्वतो जलानां मध्येऽवस्थितस्य पिपासा विरुद्धा। अस्य परिहारपक्षे तु अपः=कर्मनाम (निघण्टौ १।१२) दिवानिशं लौकिककर्मपाशबद्धोऽहमुचितानुचितोपायैर्धनोपार्जनपरायणो विविधविषयसेवनतत्परोऽपि तृप्तिं न लभे, प्रत्युत विषयैः परिवृतस्याऽपि मम कामा उत्तरोत्तरं वर्धन्त एव। तदुक्तं मनुना—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाऽभिवर्धते ॥ मनुस्मृ० २।९४॥

तृष्णाशमनहेतूनामपां मध्ये स्थितस्याऽपि तृष्णा न शान्तेति सति हेतौ फलाऽभावरूपा विशेषोक्तिः। अथवा विभावनाविशेषोक्त्योः सन्देहसंकरः। तदुक्तं रसगङ्गाधरे विशेषोक्तिनिरूपणप्रकरणे—

भगवद्वदनाम्भोजं पश्यन्त्या अप्यहर्निशम् ।
तृष्णाधिकमुदेति स्म गोपसीमन्तिनीदृशः ॥

लोके ह्यसन्निकर्षस्तृष्णा कारणम् । तदभावे=सन्निकर्षेऽपि तृष्णोपनिबद्धा, (इति हेत्वभावेऽपि फलोत्पत्तिरूपा विभावना) तथा सन्निकर्षस्तृप्तिकारणं तस्मिन् सत्यपि तृप्त्यभावो बोधितः (इति सत्यपि हेतौ तत्फलाभावप्रतिपादनाद् विशेषोक्तिः) परन्तु कारणाभावकार्याभावयोर्न प्रागुक्तप्रकारेण प्रतिपादनमित्यार्थत्वमेव तदुभयसंशयसंकरस्य । इह 'अपाम्' इति पदे श्लेषः, तेन प्रथमं प्रसिद्धतरस्य जलरूपस्यार्थस्योपस्थितिस्ततस्तस्य बाधे विषयभोगसाधनसंपादकस्य कर्मरूपस्यापरार्थस्य । वरुणपदमिह पूर्वोक्तदेवविशेषार्थे रूढम् ।

अथ योगरूढं पदम्—

यस्याऽवयवशक्त्योक्तो यौगिकोऽर्थोऽति विस्तृतः ।
रूढ्या नियम्यते योगरूढं तत्पदमुच्यते ॥६७॥

योगेन पङ्कजं पङ्कजनिकर्त्रर्थबोधकम् ।
पद्मे नियन्त्रितं रूढ्या न भवेत् कुमुदार्थकम् ॥६८॥

कुमुदभेकादीनामपि पंङ्कोद्भवत्वात् तत्रापि योगेन प्रसक्तं पङ्कजपदं योगरूढ्या पद्ममात्रे नियन्त्रितं सद् अर्थान्तरं नाभिधत्ते । कदाचित् ........'दिशि दिशि जलजानि सन्ति कुमुदानि,' इत्यादि प्रयोगेषु जलजादिपदैर्जलजन्यरूपयौगिकार्थबोधे तु लक्षणाश्रयणीया । मुख्यस्य रूढार्थस्य बाधात् । योगरूढमुदाहरति—

सूयवसाद् भगवती हि भूया
अथो वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं
पिब शुद्धमुदकमाचरन्ती ॥ ऋ० १।१६४।४०।

देवता—अघ्न्या गौः । ऋषिः—दीर्घतमा औचथ्यः । छन्दः—त्रिष्टुप् ।

अघ्न्ये=हे अहन्तव्ये धेनो त्वं सुयवसं=शोभनं शष्पादिकम् उपभुज्य प्रभूतपयोरूपधनवती भूयाः । 'ल्यब्लोपे कर्मण्यधिकरणे च'। इति वार्तिकेन (२।३।२८) सुयवसाद् इत्यत्र कर्मणि पञ्चमी । अथ त्वत्सम्बन्धेन वयमपि भगवन्तः=सुखसमृद्धिसंपन्नाः स्याम । अस्माकमे-

वमुपकारिणी त्वं वनेषु यथाकामं विचरन्ती। विश्वदानीं=सर्वदा। तृणमद्धि शुद्धमुदकं च पिव। इह अघ्न्यापदं धेन्वर्थे रूढम्। नञ्पूर्वकस्य हन्तेः 'अघ्न्यादयश्च, (उणा०४।११२) सूत्रेण यक्प्रत्यये निपातनात् साधु। 'अघ्न्याऽहन्तव्या भवति। अघघ्नीति वा इति (११।४३) मन्त्रमिमं निरुक्ते। यास्को माध्यमिक वाक्परकतया व्याचष्टे। माध्यमिकवाक् विद्युद्रूपा वृष्टयां दुर्भिक्षादिरूपम् अघं हन्तीति। पदमिदमवयवानां शक्त्या सर्वेषाम् अहन्तव्यानां वाचकमपि रूढ्या धेनौ नियन्त्रितम्। एवमघ्न्यापदस्य गोवाचकत्वे अवयवशक्ते रूढेश्चेत्युभयोर्योगः।

यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन।
स धीनां योगमिन्वति ॥ ऋ० १।१८।७॥

देवता—सदसस्पतिः। ऋषिः—मेधातिथिः काण्वः। छन्दः—गायत्री।

हे सदसस्पते=यज्ञात्मकसदसः प्रधानपर्यवेक्षक! यस्मादृते विपश्चितोऽपि यज्ञो न सिध्यति=शास्त्रविदोऽपि यज्ञः साफल्यं नाप्नोति। स सदसस्पतिरेव यज्ञस्य ब्रह्मा तादृशः कश्चनाऽन्यः प्रमुखो वा। धीनाम=यज्ञेऽनुष्ठेयानां कर्मणां योगं=सम्यक् प्रयोगम्। इन्वति व्याप्य तिष्ठति। धीति कर्मनाम (निघ०२।१)। तदुक्तम्—"ब्रह्मा त्वो वदति जात विद्याम" (ऋ० १०।७१।११) स हि प्रतिपदं समुचितनिर्देशैः ऋत्विजः स्वे स्वे कर्मणि प्रमादेभ्यो रक्षति। उच्यते लोकेऽपि—'अधीत्य शास्त्राणि भवन्ति मूर्खा, यस्तु क्रियावान् पुरुषः स विद्वान्' इति। इन्वति =इवि व्याप्तौ धातोः, इदितो नुम् धातोः, (पाणि० ७।१।५८) इत्यनेन नुमि लटि शपि रूपम्। इह यज्ञपदं यज देवपूजासंगतिकरणदानेषु इति धातोर्नङ्प्रत्ययान्तम्। अवयवानां शक्त्या देवपूजासत्समागमाद्यनेकार्थवाचकमपि रूढ्या यागमात्रे नियन्त्रितम्। तेन योगरूढम्।

एवम्—

ऋचां त्वः पोषमास्ते पुपुष्वान्
गायत्रं त्वो गायति शक्वरीषु।
ब्रह्मा त्वो वदति जातविद्यां
यज्ञस्य मात्रां वि मिमीत उ त्वः ॥
ऋ० १०।७१।११॥

देवता—ज्ञानम् । ऋषिः—बृहस्पतिराङ्गिरसः । छन्दः—त्रिष्टुप् ।

मन्त्रेऽस्मिन् यज्ञस्य चतुर्णामृत्विजाम्—होतुः, उद्गातुः, अध्वर्योः, ब्रह्मणश्च कर्मणां विनियोग उक्तः । त्वः=एको होतृपदवाच्यः ऋत्विग् ऋचां पोषं पुपुष्वान् आस्ते=ऋचोऽधीयानस्तिष्ठति । यथावसरं यथानुष्ठानं विशेषर्चामुच्चारणमेव तासां पोषः । त्वः=अन्यः उद्गाता, शक्वरीषु=ऋक्षु । गायत्रं गायति=सामगानं करोति । त्वः=एको ब्रह्माख्यः ऋत्विग् जाते जाते=कर्मणि कर्मणि, कदाचित् तद्व्यतिक्रमे वा विद्याम्=प्राप्तकालम् अनुष्ठेयं वदति । उ त्वः=अप्येकोऽध्वर्युः यज्ञस्य मात्राम्=इतिकर्त्तव्यताम् । विमिमीते=विनिश्चिनोति । यज्ञपदं 'यज देवपूजासंगतिकरणदानेषु । इति धातोः यजयाचयतविच्छप्रच्छरक्षो नङ् (पाणि० ३।३।९०) इति सूत्रेण भावे नङि प्रत्यये कृते सिध्यति । 'भावेऽकर्तरि कारके चेति वर्तते ।, 'तेन इज्यते यज्ञः, इति सिद्धान्तकौमुदीव्याख्यायां श्रीज्ञानेन्द्रसरस्वतीमहोदयाः । पदमिदमवयवानां शक्त्या देवपूजनसंगतिकरणाद्यनेकार्थकमपि रूढ्या यागार्थे निमन्त्रितत्वाद् योगरूढम् । किन्तु—

यज्ञेन वाचः पदवीयमायन्
तामन्वविन्दन् ऋषिषु प्रविष्टाम् ।
तामाभृत्या व्यदधुः पुरुत्रा
तां सप्त रेभा अभिसंनवन्ते ॥
ऋ० १०।७१।३॥

देवता—ज्ञानम् । ऋषिः—बृहस्पतिराङ्गिरसः । छन्दः—त्रिष्टुप् ।

भाषातत्त्वविदो जनाः, यज्ञेन=विभिन्नभाषाविद्भिः सह सङ्गमेन । वाचः=वाण्याः समुद्भवस्य प्रसारस्य च सरणिम् । आयन्=लभन्ते । पदेन यातव्यः पन्थाः पदवीयः इति वेदभाष्ये श्रीसायणः। ते विद्वांस एव ऋषिषु प्रविष्टां तामन्वविन्दन्=सा मूलभाषा लघुजनसमाजे विहितात्मलाभा कालक्रमेणोच्चारणभेदानर्थभेदांश्चानुभवन्ती कथं विभिन्नदेशानाम् ऋषिषु=तत्प्रथमप्रयोक्तृषु नानारूपैः पल्लविता पुष्पिता च भवतीत्यन्वविन्दन्=विनिश्चिन्वन्ति । तां मूलभाषाम्, आभृत्य=आहृत्य=अङ्गीकृत्य तद्व्यवहर्तारः, पुरुत्रा व्यदधु=विभाषासु विभक्तां विदधति । तां च वाचम् सप्त रेभाः=प्रथमाद्वितीयाप्रभृतयः सप्त

विभक्तयः, सङ्गीतशास्त्रे षड्जर्षभगान्धारप्रभृतयः सप्तस्वराः सप्तोच्चारणप्रदेशा वा अभिसंनवन्ते=संगच्छन्ते सेवन्ते वा।

'उरः कण्ठः जिह्वाया मूलं मूर्द्धा च तालु च।
नासिकौष्ठौ च वर्णानां सप्तामी प्रभवा मताः ॥

इति सप्त वर्णोच्चारणप्रदेशाः।

मन्त्रेऽस्मिन् यज्ञपदं न योगरूढं किन्तु यौगिकम्। योगरूढार्थस्य यागस्य भाषाविज्ञानेन सम्बन्धाभावात्। रेभृ शब्दे धातोर्निष्पन्नो रेभशब्दः शब्दत्वसम्बन्धेन पूर्वोक्तान् विभक्त्यादिरूपमर्थं कण्ठादीन् प्रदेशाँश्चोत्पाद्योत्पादकभावसम्बन्धात् प्रकटयति।

**यज्ञेन यज्ञमयजन्त देवास्**
**तानिधर्माणि प्रथमान्यासन्।**
**ते ह नाकं महिमानः सचन्त**
**यत्र पूर्वे साध्याः सन्ति देवाः ॥**

**ऋ० १।१६४।५०॥**

देवता—साध्याः। ऋषिः—दीर्घतमा औचथ्यः। छन्दः=त्रिष्टुप्।

देवाः=दिव्यभावनाभिर्भावितान्तःकरणाः भक्ता ज्ञानिनो योगिनः कर्मयोगिनो वा। यज्ञेन=भक्तिपूर्वक भगवच्चरणयोः समर्पितेन, निरस्तसमस्ताऽहंभावेन स्वात्मना यज्ञम्=यष्टव्यं प्रभुं नारायणम्। अयजयन्त=यजन्ति पूजयन्ति सेवन्ते वा। 'यज्ञः स्यादात्मनि मखे नारायणहुताशयोः, इत्यनेकार्थसंग्रहे हेमचन्द्राचार्याः। अथवा ये देवाः =दिव्यगुणवन्तः सन्तः। यज्ञेन=यज्ञभावनया विहितेन ज्ञानयज्ञेन यज्ञम् =सर्वव्यापकं सर्वरूपं विष्णुं यजन्ति भजन्ते ते दैवं यज्ञं समाचरन्ति। जगतो विध्वंसाय परमाण्वायुधादिनिर्माणार्थमन्वेषणमासुरमनुष्ठानं न दैवो यज्ञः। देवा=प्राणाः इन्द्रियाणि वा। 'देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये' इति मेदिनी। इन्द्रियवृत्तीनां संयमाग्नावाहुतिः, ताटस्थ्येन केवलज्ञानोपार्जनाय, न तु विषयसेवनाभिलाषेण विषयाणामिन्द्रियेष्वाहुतिर्वा दैवो यज्ञः। प्राणा वा देवपदवाच्याः। प्राणायामपरायणाः साधकाः अपाने प्राणं प्राणे चापानं जुह्वतो रेचकपूरकाभ्यां तयोरुभयोर्गतिं रुद्ध्वा च कुम्भकेन। जीवनयज्ञं निर्वर्तयन्ति। अथवा

'पुरुषो वाव यज्ञः'[1] इति छान्दोग्योपनिषदाह (३।१६।१)—षोडशाधिकवर्षशतव्यापि मानवजीवनमेव दैवयज्ञस्तं क्रमशो वसुरुद्रादित्यरूपेणावस्थिताः प्राणा एवाहरन्ति । कर्मयोगिनः पुनस्त्यक्तफलाभिलाषाः कर्त्तव्यभावनया यत् कर्म समाचरन्ति तदपि यज्ञपदाभिधेयम् । 'एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।' (भग० गीता० ४।३२) । एते यज्ञा एव प्रथमानि धर्माणि मानवस्य प्रधानानि कर्तव्यानि । प्रथममितिपदमिह न कालप्राथम्यवाचकम्, प्रत्युत गुणैः कर्मभिर्वा श्रेष्ठस्य वाचकम् । 'प्रथमः स्यात् प्रधानाद्योः' इति अनेकार्थसंग्रहे हेमः । धर्मश्च धारणात् 'धारणाद् धर्ममित्याहुः' इति मनुः । ये देवाः पूर्वोक्तानां यज्ञानामन्यतमं समाचरन्ति ते महिमानः=महिमवन्तः । नाकं सचन्ते=स्वर्गलोकं प्राप्नुवन्ति । महिमपदमिह महिमवन्तं लक्षयति । महिमातिशय्यव्यञ्जनं प्रयोजनम् । कम्=सुखम् । तत्प्रतिषेधोऽकम् । न अकं दुःखं यत्र स नाकः । सुखिजीवनम्, सुखी

१. ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणाहुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥२४॥
दैवमेवाऽपरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोप जुह्वति ॥२५॥
श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन् विषयानन्ये इन्द्रियाग्निषु जुह्वति ॥२६॥
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥२७॥
अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥२९॥गीता अ० ४॥

अत्र—ब्रह्माग्नौ, संयमाग्नौ, इन्द्रियाग्निषु—इत्यादि गीतावचनेषु सर्वत्र सारोपा गौणीलक्षणा ।

मनुस्तु—
तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः ।
पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ मनु०३।६९,७०।

परिवारः, सुखी समाजो वा । तं नाकमेव विवृणोति यत्र नाके पूर्वे= पुण्यवता प्रथमे श्रेष्ठा इत्यर्थः । साध्याः=साधनापूतान्तकरणाः सन्ति =निवसन्ति । यथा यागेष्वग्नौ हविरर्प्यते तथा ऽत्रोक्तेषु आत्मयज्ञादिष्वपि अहंभावस्य, इन्द्रियाणाम्, विषयरसानां वा त्यागः क्रियते । अतः प्रदानसाधर्म्येणैषां यज्ञत्वम् । तेनात्र **गौणीलक्षणा** ।

एवं लौकिकसाहित्येऽपि वेणीसंहारे—

चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजान्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ।।

अत्र संग्रामे तदङ्गेषु पाण्डवादिषु यज्ञतदङ्गत्वाद्यारोपात् **साङ्गं रूपकम्** । सारोपा गौणीलक्षणा अस्य रूपकस्य मूलम्, इति साहित्य-दर्पणादौ स्पष्टम् ।

तथैवाध्वरपदमपि व्युत्पत्या हिंसारहितसर्वानुष्ठानवाचकमपि रूढ्या यागमात्रवाचकम् । किन्तु—

**अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।**
**स इद्देवेषु गच्छति ।। ऋ० १।१।४।।**

देवता—अग्निः । ऋषिः—मधुच्छन्दा वैश्वामित्रः । छन्दः—गायत्री ।

अत्र यज्ञाध्वरपदयोरुभयोर्यागार्थकत्वे, पुनरुक्तिः । अभिधयाऽन्यतरस्य यौगिकार्थपरिग्रहे च 'योगाद् रूढिर्बलीयसी' इति सिद्धान्तव्याकोपः । तत्का गतिरिति चेत्—

गीष्पतिरप्यांङ्गिरसो गदितुं ते गुणगणान् सगर्वो न ।
इन्द्रः सहस्रनयनोऽप्यद्भुतरूपं परिच्छेत्तुम् ।।

इह यथा 'लक्षणायां (स्वीकृतायां) योगरूढेन गीष्पतिरिति पदेन (गिरां पतिरिति) योगार्थमात्रप्रतिपादने न किंचिद् बाधकम्' (इति रसगङ्गाधरे श्रीजगन्नाथाः) तथा यौगरूढेनाध्वरपदेनाऽपि हिंसारहित इति योगार्थमात्रपरिग्रहे न काचित् क्षतिः । ततः एकेनैव यज्ञपदेन कृतार्थतायां पुनर्यज्ञपर्यायाध्वरपदपुनरुक्तौ केनाऽपि प्रयोजनेन भवितव्यमिति जिज्ञासायाम् 'गीष्पति' रित्यादौ यथा राज्ञोऽलौकिकगुण-

रूपयोः कश्चिदतिशयो व्यज्यते, तथाऽत्रापि यज्ञस्य सर्वथा हिंसाराहित्यप्रतिपादनं प्रयोजनमिति प्रतीतिर्जायते। न तु योगरूढेनाऽध्वरपदेन प्राग् एकपदवाच्यत्वसम्बन्धाद् हिंसारहितत्वाऽभिन्नथागार्थबोधः। ततश्च तेन सामानाधिकरण्यसम्बन्धाद् (एकविभक्त्यन्तत्वाद्) यज्ञपदेनाऽभेदसंसर्गे हिंसारहितयज्ञाऽभिन्नयज्ञ इति बोधः। प्रक्रियायामस्यां वृथागौरवाद् अनुभवविरोधाच्च। तस्मादत्र लक्षणामूलस्य अविवक्षितवाच्यध्वनेरर्थान्तरसंक्रमितवाच्यो नामभेदोऽभ्युपेयः। इहाध्वरपदं स्वकीय एव नितरां हिंसारहिताध्वररूपेऽर्थे संक्रमितम्।

श्रीमतामरविन्दचरणानामभिप्रायमनुसरन् श्रीकपालिशास्त्रिमहोदयस्तु मन्त्रमिममन्यथा व्याख्याति। तथाहि—अग्ने=साधनाऽध्वनि साधकानग्रे नयतीति तत्सम्बुद्धिपदमिदम्। अध्वानं=परमपदप्राप्तेर्मार्गं साधकाय राति ददातीत्यध्वरः। तथाविधं यं यज्ञं हे अग्ने नेतः त्वं सर्वतः परिवृत्य तिष्ठसि। स ज्ञानयज्ञ एव देवेषु गच्छति। तेनैव साधकः स्वात्मनं विन्दतीति। देवाः दिव्याः शक्तयः प्रवृत्तयो वा। अत्रापि यज्ञाध्वरपदयोर्योगरूढयोरर्थबोधप्रकारः पूर्ववदेव।

त्रातारमिन्द्रमवितारमिन्द्रं
हवे हवे सुहवं शूरमिन्द्रम्।
ह्वयामि शक्रं पुरुहूतमिन्द्रं
स्वस्ति नो मघवा धात्विन्द्रः ॥ऋ० ६।४७।११।

एतादृशेषु समानार्थकाऽनेकयोगरूढपदप्रयोगस्थलेषु प्रायः सर्वत्रेयमेवाऽर्थावबोधसरणिरनुसरणीया। मन्त्रेऽस्मिन् इन्द्रशक्रपुरुहूतमघवत्पदानां सह प्रयोगाद् आभासमाना पुनरुक्तिस्तेषां यौगिकार्थेन प्रतिषिध्यते, तस्मात् पुनरुक्तवदाभासोऽलङ्कारः।

नन्वेवं पूर्वोदाहृतेषु समानार्थकानाम् असमानव्युत्पत्तीनां योगरूढपदानां सह प्रयोगस्थलेषु अन्यतमस्य यौगिकार्थस्वीकरणे भवतु समाधानम्, तथापि—

सोमं मन्यते पपिवान् यत् संपिशन्त्योषधिम्।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥
ऋ० १०।८५।३॥

ईदृशेषु असमानार्थकानां समानाकृतीनां रूढानां पदानां सह

प्रयोगे का गतिरिति चेत् ? तत्र श्लेषः शरणम्। इह प्रथमं सोमपद-मौषधविशेषार्थं द्वितीयं च चन्द्रार्थे रूढम्। तदुक्तं नानार्थसंग्रहे—'सोमस्तु हिमदीधितौ। वानरे च कुबेरे च पितृदेवे समीरणे। वसुप्रभेदे कर्पूरे नीरे सोमलतौषधौ' इति।

पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम्।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत॥

ईदृशलौकिकसंस्कृतसाहित्योदाहरणेष्वपि श्लेष एव।

सकृत्प्रयुक्तमेकमेव पदं यत्राऽनेकार्थवाचकं तत्रापि श्लेष इत्युदाहरति—

शं नो देवीरभिष्टय आपो भवन्तु पीतये।
शं योरभि स्रवन्तु नः॥ ऋ० १०।९।४॥

देवता—आपः। ऋषिः—त्वष्टृपुत्रस्त्रिशिराः। छन्दः—गायत्री।

देवीः आपः दिव्या आपः। नः=अस्माकं सन्तापापनोदद्वारेण शं भवन्तु=सुखाः सन्तु। अभिष्टये=अस्माकं यज्ञादिसंपादनाय अभिमतसाधनाय वा भवन्तु। ता नः पीतये=पानाय तृप्तये वा भवन्तु। तथा च नः शं भवन्तु=उत्पन्नानां रोगादीनां शमनकारिण्यो भवन्तु। योः भवन्तु=यावनाय=अनुत्पन्नानां कष्टानां भाविनामित्यर्थः प्रागेव दूरीकरणाय च भवन्तु। नः अभि स्रवन्तु=अस्मान् अभिलक्ष्य सर्वतः सुखवृष्टिमिव कुर्वन्तु।

ब्रह्मयज्ञे सन्ध्योपासनकर्मणि विनियुक्तं मन्त्रमिमं पठन् उपासकस्त्रिराचामति। आचमनाङ्गभूतत्वादिह 'आपः' पदं जलार्थकम्। किन्तु मन्त्रस्यास्य ब्रह्मयज्ञे विनियोगात् परमात्मदेवताकत्वाच्च तदेवापः पदं परमात्मार्थकम्। तदुक्तं यजुर्वेदे—

तदेवाग्निस्तदादित्यस्तद् वायुस्तदु चन्द्रमाः।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः॥ यजु० ३२।१॥

देवताः—परमात्मा। ऋषिः—स्वयम्भु ब्रह्म। छन्दः=अनुष्टुप्।

एवमुभयोरर्थयोः प्रासङ्गिकत्वात् पदमिदमुभयार्थकम्। तेनाऽत्र श्लेषः। यथा—'सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः। मयोपकारसांमुख्यमायासि तनु वर्तनम्'॥ (साहि० द० १०।११)॥ राजपुरुषं-

निगृहीतस्य चौरस्य शिवं प्रति, तदेव संमुखागतं स्वपुत्रं प्रति च वचनमिदम् ।

जलार्थकेषु परमात्मार्थकेषु च पृथक् पृथक् पदेष्वनेकेषु सत्स्वपि 'आपः' इत्येकपदप्रयोगे किं प्रयोजनमिति चेत् यथा शीतलानि जलानि शरीरमभिव्याप्य तत्रत्यं सकलसन्तापं शमयन्ति तथा आपोरूपः स भगवान् नो बाह्यमाभ्यन्तरं च सर्वं सन्तापं शमयत्वित्यापःपदेन व्यज्यते । अत एव कश्चिदाह—

निराकारं भजन्त्येके नराकारमथाऽपरे ।
वयं संतापसंतप्ता नीराकारं भजामहे ॥

इह आपः पदं जलार्थे रूढम् । 'आपः स्त्री भूम्नि वा र्वारि सलिलं कमलं जलम्' इत्यमरः । भगवदर्थे तु व्याप्नोतेर्यौगिकम् । अत्र परिकराङ्कुरालंकारः । 'साभिप्राये विशेष्ये तु, भवेत् परिकरांकुरः । चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः' इति कुवलयानन्दः ॥

नाम राम इति तुल्यमात्मजे वर्तमानमहिते च दारुणे ।
हृद्यमस्य भयदायि चाऽभवद् रत्नजातमिव हारसर्पयोः ॥

रघुवंश० ११।६८॥

अत्रापि रामपदं प्रकरणप्राप्तयो राघवजामदग्न्ययोरुभयोर्वाचकं तेनात्र श्लेषः । यत्र त्वन्यत्र कृतसंकेतैश्चन्द्रनेत्ररामादिभिः स्वस्वार्थेषु रूढैः पदैरेकद्वित्रिप्रभृतयः संख्याः सूच्यन्ते तत्र लक्षणैव न श्लेषः । तादृशस्थलेषु रामादिभिः पदैः प्रथमं स्वमुख्यार्थानां राघवादीनाम् अभिधयोपस्थितिः । ततस्तद्बाधे राघवादिव्यक्तित्रयगोचरत्रित्वस्य प्रतीतिः । इह रामपदेन त्रित्वावगमे तत्पदाभिधेयव्यक्तीनां प्रसिद्धं त्रित्वमेव हेतुः । रामादिभिः पदैस्त्रित्वादिबोधने तादृशं किञ्चित् प्रयोजनं नास्ति यदर्थं गङ्गायां घोष इत्यादिषु स्थलेषु प्रयोजनवती लक्षणाश्रीयते ।

अथ चतुर्थः पदभेदो यौगिकरूढाख्यः—

समुदायस्य शक्त्यैकोऽवयवानां तथा परः ।
यत्रार्थो बोध्यते तत्तु पदं यौगिकरूढकम् ॥९९॥

प्रकृतिप्रत्ययादीनां शक्त्योद्भेदकृदर्थकम् ।
पदमुद्भिद् यथा रूढ्या यागभेदस्य वाचकम् ॥१००॥

उत्पूर्वकाद् भिदेः क्विपि निष्पन्नम् उद्भित्पदम् अवयवानां शक्त्या ऊर्ध्वभेदनकर्तृणामङ्कुरादीनां बोधकम् । ते हि भुवमुद्भिद्योत्पद्यन्ते । तदुक्तम्–'उद्भिदस्तरुगुल्माद्याः' इत्यमरः । तदेव रूढ्या यागविशेषस्य वाचकम् । **'उद्भिदा यजेत'** इत्यादिना विषयोऽयं मीमांसायाः प्रथमाध्यायस्य चतुर्थपादे प्रथमाधिकरणे निरूपितः । एवं निशान्त-पञ्चाननाश्वगन्धादिपदैरपि केवलावयवानां शक्त्या क्रमशो रात्र्य-वसानपञ्चसंख्यकमुखवद्व्यक्तिवाजिगन्धयुक्तमन्दुरादयः, केवल-समुदायशक्त्या च भवन-सिंह-भेषज-विशेषादयो रूढार्था बोध्यन्ते । तदुक्तं रसगङ्गाधरे—"अन्ये तु अश्वकर्णादिशब्देषु न अभिधायाः प्रथमद्वितीययोर्विषयोः (यौगिकस्य रूढेश्च) प्रसक्तिः कैवल्यविरहात्, परन्तु सङ्करस्य द्वौ भेदौ योगरूढिर्यौगिकरूढिश्चेति । तत्राद्यस्यो-दाहरणं पंकजादिशब्दाः, द्वितीयस्याश्वकर्णादयः इत्याहुः चतुर्थ एवा-ऽयमभिधाया भेदः (यौगिकरूढिः) इत्यन्ये ।" यथा—

द्राग्वारुणीभजननिह्नुतराजतेजो,
निष्क्रान्ततारमुपशान्ततमोविकारम् ।
पूर्वाशयाविशति सत्पथभाजि मित्रे,
सत्यं निशान्तसमयस्य निशान्तमासीत् ॥

चम्पूरामायणे सुन्दरकाण्डे ।

अत्र प्रथमं निशान्तपदमवयवानां शक्त्या निशावसानबोधकम्, द्वितीयं तु रूढ्या भवनवाचकम् ।

एवम्—

**आ नो भद्राः क्रतवो यन्तु विश्वतो**
**ऽदब्धासो अपरीतास उद्भिदः ।**
**देवा नो यथा सदमिद् वृधे अस-**
**न्नप्रायुवो रक्षितारो दिवेदिवे ॥ऋ० १।८९।१॥**

देवता—विश्वेदेवाः । ऋषिः—गोतमो राहूगणः । छन्दः—जगती ।

भद्राः=कल्याणकारिणः । क्रतवः=दृढसंकल्पाः । अदब्धासः=असुरैरहिंसिताः । अपरीतासः=अ+परि+इण् गतौ+क्तप्रत्यये रूपम् । शत्रुभिरप्रतिरुद्धागमनाः । उद्भिदः=सत्कर्मसु विघ्नोत्पा-दकानाम् उद्भेदनकर्तारः । अथवा यथा बीजाङ्कुरा जातमात्रा अपि

भुवः पृष्ठमुद्भिद्योत्तिष्ठन्ति तथा विघ्नान् विनिवार्य सर्वदाऽभ्युत्थानशीलाः। अप्रायुवः=अप्रमाद्यन्तः सततजागरूका इत्यर्थः। रक्षितारश्च देवाः=दिव्यगुणयुक्ताः सत्पुरुषाः। सदमित्=सदैव। दिवेदिवे=प्रतिदिनम्। अस्माकं यज्ञमायन्तु=आगच्छन्तु। नः वृधे य असन्=अस्माकं वृद्धयेऽभ्युदयाय च भवन्तु। क्रतुः संकल्पः। इह क्रतुपदं लक्षणया **क्रतुमतः पुरुषान् लक्षयति**। नितरां दृढसंकल्पवत्त्वबोधनं **प्रयोजनम्**। वृधे=वर्धतेर्भावे क्विपि स्त्रियां चतुर्थीविभक्तौ रूपम्। अदब्धासः अपरीतासः='आज्जसेरसुक्' इत्यनेन जसोऽसुक् (पाणि० ७।१।५०)। उद्भित्पदमिह यौगिकरूढम्।

**नि षसाद धृतव्रतो वरुणः पस्त्यास्वा।**
**साम्राज्याय सुक्रतुः॥** ऋ० १।२५।१०॥

देवता—वरुणः। ऋषिः—आजीगर्तिः शुनःशेपः। छन्दः—गायत्री।

धृतव्रतः धृतं प्रजापालनव्रतं येन, तथाविधः। सुक्रतुः=शोभनसंकल्पः शोभनकर्मा वा। क्रतुपदमिह संकल्पार्थकं वा। 'यत्क्रतुर्भवति तत् कर्म कुरुते' इति बृहदारण्यकोपनिषदि (४।४।५)। यज्ञोऽपि क्रतुरुच्यते। 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इत्यमरः। वरुण=प्रजाभिः कृतवरण इत्यर्थः, साम्राज्याय=साम्राज्यस्य रक्षार्थम्। पस्त्यासु आनिषसाद=प्रजासु सिंहासनमधि चक्रे अधिकरोति वा। वरुणपदमिह यौगिकम्। वृणोतेः 'कृवृदारिभ्य उनन्' (उणा० ३।५३)। व्रियते प्रजाभिर्वृणोति वा स्वगुणैर्जनानां हृदयानि। सम्राजो भावः साम्राज्यम्। सम्राट् तु—'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः। साम्राज्यादिपदान्तरसान्निध्यादिह वरुणपदं नृपार्थकम्। वरुणपदमिह यौगिकं, न तु **'अपां मध्ये०'** इति मन्त्रे[1] देवतार्थकपदवत् रूढम्। एवं वरुणपदं क्वचिद् यौगिकं क्वचिच्च रूढमिति यौगिकरूढम्।

**यथा वा—**

**बलविज्ञायः स्थविरः प्रवीरः,**
**सहस्वान् वाजी सहमान उग्रः।**

---

१, मन्त्रोऽयं पूर्वत्र ७४ तमे पृष्ठे व्याख्यातः।

अभिवीरो अभिसत्वा सहोजा,
जैत्रमिन्द्र रथमा तिष्ठ गोवित्॥ऋ०१०।१०३।५

इह वाजीति पदम् इन्द्रस्य विशेषणम्। वाजपदं वेगबलान्नपक्ष-स्वनाद्यर्थकम्। "..........वाजो निःस्वनपक्षयोः। वेगे पुमानथ क्लीबे घृतयज्ञान्नवारिषु" इति मेदिनी। वाजो वेगो बलं वाऽस्यास्तीति व्युत्पत्या पदमिदं यौगिकम्।

उद्धर्षय मघवन्नायुधानि,
उत्सत्वनां मामकानां मनांसि।
उद् वृत्रहन् वाजिनां वाजिनानि,
उद्रथानां जयतां यन्तु घोषाः॥
ऋ० १०।१०३।१०

देवता—इन्द्रः। ऋषिः—ऐन्द्रोऽप्रतिरथः। छन्दः—त्रिष्टुप्। इह वाजिपदमश्वार्थे रूढम्। तेन यौगिकरूढम्।

एवम् "जारः कनीनां पतिर्जनीनाम्"। (ऋ० १।६६।४) अत्र 'जार'पदं जारणकर्त्रर्थे यौगिकम्।"जार आ भगम्०"ऋ०१०।११।६॥ जारपदमत्र पारदारिकार्थे रूढम्। सोऽग्निरेव कन्यानां कन्याभावस्य=कौमार्यस्य जरयिता वर्तते। विवाहाग्नौ लाजादिद्रव्येण होमे तासां कौमार्यं निवर्तते। स एव जनीनां कृतविवाहानां जायानां पतिः=भर्ता च इति श्रीसायणः। पतिः पालनात्। 'पातेर्डतिः' (उणा० ४।६७) "जार आ भगम्" (ऋ० १०।११।६) जार इव भगम्। आदित्योऽत्र जार उच्यते, रात्रेर्जरयिता। तथापि निगमो भवति—"स्वसुर्जारः शृणोतु नः"(ऋ० ६।५५।५)इति। उषसमस्य स्वसारमाह। अपि त्वयं मनुष्यजार एवाभिप्रेतः स्यात्" इति निरुक्ते (३।१६) श्रीयास्कः।

एवम्—

शं नो अज एकपाद् देवो अस्तु,
शं नोऽहिर्बुध्न्यः शं समुद्रः।
शं नो अपां नपात् पेरुरस्तु,
शं नः पृश्निर्भवतु देवगोपा॥ऋ०७।३५।१३॥

इह रूढेर्बलाद् अजपदस्य छागाख्यः पशुविशेष इति, एकपाद् इति पदस्य एकचरणवान् कश्चित्=खञ्ज इति रूपोऽर्थश्च पाठकचेतसि प्रथमं पदं कुरुते; किन्तु प्रकरणेऽनुपपद्यमानत्वात् सविध एव 'देवः' इति विशेषणपदसत्त्वाच्च अजपदस्य अजनः=सततगतिमान् तमसामधिक्षेप्ता, अजन्मा अज्ञातजन्मा वेति, एकपात् पदस्य च एकः पाति पालयति विश्वम्, एकः पिबति भौमं जलं स्वरश्मिभिरिति, एकः पादोऽस्येतिरूपो वा यौगिकोऽर्थः स्वात्मानमुपस्थापयति। सायणभाष्ये तु अत्रत्यानां सर्वेषां कर्तृपदानां 'देवताविशेषः' इत्यभिधाय व्याख्या विहिता। एवमेतानि पदानीह यौगिकरूढानि। सूर्यस्य एकपात्त्वम्—"एकं पादं नोत्खिदति सलिसाद्धंस उच्चरन्" (अथर्व० ११।४।२१)इत्यादि मन्त्रेऽपि वर्णितम्।

अपि च—

**आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् आ राष्ट्रे राजन्य शूरः इषव्योऽतिव्याधी महारथो जायताम्। दोग्ध्री धेनुर्वोढाऽनड्वानाशु सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायताम्। निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्॥** (यजु० २२।२२)

हे ब्रह्मन्! अस्माकं राष्ट्रे ब्राह्मणः=ब्रह्म वेदम् अधीते वेद वा तथाविधो जनः। ब्रह्मवर्चसी आजायताम्=ब्राह्मतेजःसंपन्नो भूयात्। तदुक्तम्—'धिग्बलं क्षत्रियबलं ब्रह्मतेजः परं बलम्'। राजन्यः क्षत्रियः। शूरः=पराक्रमी। इषव्यः=शरप्रयोगे साधुः। अतिव्याधी=रिपूणामतिशयेन वेद्धा; महारथश्च आजायताम्। नः धेनुर्दोग्ध्री=प्रचुरपयोदानशीला। सप्तिः आशुः=अश्वः शीघ्रगामी। योषा पुरन्धिः=नारी च पुरं=परिवारं रूपादिगुणसंपन्नं वपुर्वा दधातीति तादृशी आजायताम्। नो राष्ट्रे रथेष्ठाः=रथारूढः सैनिकः। जिष्णुः=जयनशीलः स्यात्। किञ्चास्य नो यजमानस्य युवा वीरः सभेयो जायताम्=तरुणस्तनयः सभासु प्रभाववान् तत्र साधुर्वा भूयात्। स बाल्य एव न म्रियेत वार्धकेऽपि युवेव समर्थश्च स्यात्। निकामे निकामे नः पर्जन्यो वर्षतु=मेघो नः कामवर्षी भवेत्। न ओषधयः फलवत्यः पच्यन्ताम्=सस्यसंपदः प्रचुर फलशालिन्यः सन्तु। 'ओषध्यः फलपाकान्ता' इत्यमरः, मनुश्च १।४६। नः योगक्षेमश्च कल्पताम्=अप्राप्तस्य अभीष्टस्य प्राप्तिर्योगः,

प्राप्तस्य परिरक्षणं च क्षेमः। तयोर्द्वन्द्वसमासः। इहैकवचनं पुंस्त्वं च छान्दसम्।

वधते वर्धयति प्रजा वेति ब्रह्म। 'बृंहेर्नोऽच्च' (उणा० ४।१४६) बृहि वृद्धौ इति धातोर्मनिन्, नुमा निष्पन्नस्य नकारस्याकारश्च।"ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः" इति मेदिनी। ब्रह्म अधीते वेद वेति ब्राह्मणः। 'तदधीते तद्वेद' (पाणि० ४।२।५९) इति सूत्रेण अण्प्रत्ययेरूपम्। वेदाध्येतरि वेदविदि वा विवक्षिते यौगिकमपि पदमिदं कालान्तरे ब्राह्मणकुलोत्पन्नपुरुषार्थे निरूढम्। राजन्यः = राज्ञोऽपत्यमित्यर्थे 'राजश्वशुराद्यत्' (पाणि० ४।१।१३७)। इति सूत्रस्थ 'राज्ञो जातावेवेति वाच्यम्' इति वार्त्तिकेन केवलक्षत्रियकुलोत्पन्नस्य राज्ञो ऽपत्यार्थे नियन्त्रितोऽयं शब्दः, तेनास्य योगरूढता। तदुक्तं सि० कौ० टीकायां श्रीज्ञानेन्द्रसरस्वतीमहोदयेन 'एवं च पङ्कजादिवद्योगरूढ इति फलितोऽर्थं' इति। राजन्यपदस्याग्निवाचकत्वे तु 'राजेरन्यः (उणा. ३।१००)इति सूत्रेण राजृ दीप्तौ धातोः अन्यप्रत्ययेन सिद्धिः,। महांश्चासौ रथः, महान् रथो वा यस्येति[1] व्युत्पत्तिभ्यां लभ्ययोरर्थयोः कारणाद् यौगिकोऽपि महारथशब्दः 'एको दशसहस्राणि योधयेद् यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च स विज्ञेयो महारथः' इति वचनानुसारं तथाविधवीरार्थे निरूढत्वाद् यौगिकरूढः। शूर वीर विक्रान्तौ धातुभ्याम् अच्प्रत्यये शूरो वीरश्च। अथवा अज गतिक्षेपणयोः धातोः अजति = अभ्यमित्रं गच्छति क्षिपति वाऽस्त्राणीत्यर्थे 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विवतिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशि शीङ्हसिसिधिशुभिभ्यो रक्,(उणा० २।१३)रक्प्रत्यये अजेश्च 'अजेर्व्यघञपोः(पाणि०२।४।५६)इति सूत्रेण वीभावे वीरः। विशेषेण ईरयति कम्पयति शत्रूनिति वा वीरः। एवं वीरपदं यौगिकमपि क्वचित् पुत्रार्थे रूढम्। यथा— **'अधा स वीरैः दशभिर्वि यूयाः'**(ऋ०७।१०४।१५)अथवा **'अवीरामिव मामयं शरारु रभिमन्यते'** (ऋ० १०।८६।९)॥ लोकेऽपि वीरपदं क्वचित्पुत्रार्थेऽन्यत्र भ्रात्रर्थे जिनविशेषार्थ च रूढम्। सभेयः = सभासु भागग्रहणार्हः इत्यर्थे 'ढश्छन्दसि' (पाणि० ४।४।१०६) इति सूत्रेण

---

१. मन्त्रे 'महारथः' पदं राजन्यस्य विशेषणम्। तेनात्र बहुव्रीहिसमास एव युक्तः। यु० मी०

ढप्रत्यये कृते सिध्यति। तेन यौगिकः। एवम् इषव्य-अतिव्याधी-दोग्ध्री-वोढृ-आशु-जिष्णुप्रभृतिषु पदेषु अवयवशक्त्या स्वकीयार्थसमपर्कत्वमतिस्पष्टमेव।

ननु भवतु लोके यौगिकत्वादिनिमित्तं पदानां चतुर्विधत्वम्, येषां तु मीमांसकानाम् अपौरुषेया अत एव च नित्या वेदाः, येषां वा पुनरपरेषां वैदिकानाम्—'तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे' (ऋ० १०।९०।९। यजु० ३१।७। अथर्व० १९।६।१३)। इत्याद्यनुसारं वेदा मानवोत्पत्तेः पूर्वमेव तस्मात् परमपुरुषादाविर्भूताः इत्यभिमतं तेषां मते वेदेषु व्यवहारमूलिकाया रूढेः कथं संभवः? व्यवहारस्य वेदेभ्योऽर्वाचीनत्वादिति निरूपयति—

मीमांसामांसलप्रज्ञा जैमिन्याद्या विपश्चितः।
अपौरुषेयतां तावद् वेदानां प्रत्यपादयन्॥१०१॥

वैदिका ये च सर्गादौ लोकानुग्रहकाम्यया।
मन्यन्ते तान् समुत्पन्नांस्तस्मात् परमपूरुषात्॥१०२॥

उभयोरपि शब्दानां चतुष्ट्वं पूर्ववर्णितम्।
कथं नामोपपद्येत, तत्र रूढेरसंभवात्॥१०३॥

इति चेद् युक्तमुक्तं हि विमृश्य भवता न्विदम्।
मनीषिणामतिप्राचां चेदमेव मनीषितम्॥१०४॥

यतः सर्वेषु वेदेषु शब्दाः सर्वेऽपि यौगिकाः।
रूढेः प्रयोगतन्त्रत्वाद् बहूनां बहुशश्चिरम्॥१०५॥

पित्रादिकृतसंकेताद् व्यवहाराच्च तादृशात्।
प्रवर्तते पदार्थेषु रूढिर्योगापहारिणी॥१०६॥

नित्ये सर्गादिजे वाऽपि वेदे रूढिः कथं भवेत्।
मानवव्यवहारस्य तदनन्तरसंभवात्?॥१०७॥

अनित्यस्येतिहासस्य भूगोलस्याऽपि वर्णनम्।
न चास्ति तत्र नामापि विशिष्टव्यक्तिवाचकम्॥१०८॥

ये तु विष्णुवसिष्ठाऽत्रिदधीचिच्यवनादयः।
तथा सरस्वतीगङ्गाविपाशायमुनादयः॥१०९॥

देवर्षिनदीवाचिशब्दा मन्त्रेष्वनेकशः ।
दृश्यन्ते यौगिकास्तेऽपि तद्गुणातिशयार्थकाः ॥११०॥

शब्दान् वेदेभ्य आदाय तद्गुणख्यापनेच्छया ।
पश्चात् संज्ञाः कृता येषाम्, न तेषां वर्णनं श्रुतौ ॥१११॥

तदुक्तं भगवता मनुना—

सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ मनु० १।२१॥

यत्तु—

इदं विष्णुर्वि चक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पांसुरे ॥ ऋ० १।१२।१७॥

द्यौर्मे पिता जनिता नाभिरत्र,
बन्धुर्मे माता पृथिवी महीयम् ।
उत्तानयोश्चम्वोर्योनिरन्त-
रत्रा पिता दुहितुर्गर्भमाधात्॥ऋ० १।१६४।३३॥

इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः ।
जघान नवतीर्नव ॥ ऋ० १।८४।१३॥

उप प्रेत कुशिकाश्चेतयध्व-
मश्वं राये प्रमुञ्चता सुदासः ।
राजा वृत्रं जङ्घनत् प्रागपाग् उदग्
अथा यजाते वर आ पृथिव्याः ॥ऋ० ३।५३।११

मन्त्रेष्वेषु पौराणिकाख्यानानां प्राचीननृपतीनां यज्ञादेर्दानानाम्, इतिहासस्य च संकेतो न केनाऽप्यपलपितुं शक्य इत्युच्यते, तत्राह—

यद् विष्णुर्वामनो भूत्वा चक्राम भुवनत्रयम् ।
बलिमूर्ध्नि पदं धृत्वा पाताले प्राक्षिपच्च तत् ॥११२॥

यद् दधीचोऽस्थभिर्वृत्रासुरमिन्द्रो जघान च ।
निजां दुहितरं यच्च प्रजापतिरघर्षयत् ॥११३॥

यत् सुदासः क्षितीशस्योत्सृष्टुं यज्ञाय तद् ययुम् ।
वर्णितं कुशिकाख्यानामृत्विजां च प्रबोधनम् ॥११४॥

एतदाद्यखिलं वेदरहस्याऽज्ञानजृम्भितम् ।
सत्यार्थविद्भिराचार्यैरिदं प्रागेव दर्शितम् ॥११५॥

तथाहि—

बालसूर्यो भुवः पृष्ठादन्तरिक्षं ततो दिवम् ।
क्रामन् पादैर्बलिध्वान्तं प्रापयत्यधरं जगत् ॥११६॥

सूर्यः पिताऽन्तरिक्षं च योनिर्भू र्दुहिता तथा ।
दूरे विनिहिता यस्माद्, वृष्टिस्तद् गर्भधारणम् ॥११७॥

द्युलोकेन सम्बन्धात् सूर्यो द्यौरित्येतन्मन्त्रव्याख्यायां श्रीसायणः । अत्र तात्स्थ्यलक्षणा मञ्चाः क्रोशन्तीतिवत् । श्रीसायणोऽपि मन्त्रस्यास्यव्याख्यायां यौगिकार्थसरणिमेवानुससार । तथा—

इन्द्रो विद्युद् घनो दध्यङ् तदस्थीन्यस्थिरा अपः ।
दुर्भिक्षादेः क्षयो वृष्ट्या वृत्रासुरवधो मतः ॥११८॥

इन्द्रपदं निरुक्ते मध्यस्थानदेवतासु पठितम् । इरां=जलं दृणातीति तद् व्युत्पत्तिश्च प्रदर्शिता । 'इरा तु मदिरावारिभारत्यशनिभूमिषु' इति विश्वः । जलं हि विद्युद्धाराप्रवेशेन स्वघटकयोर्योस्तत्त्वयोः ओषजनोदजनयोर्विभक्तं भवति । जलं दधद् अञ्चतीति दध्यङ्=मेघः । पदमिदं दधत्पूर्वकस्य अञ्चतेः क्विन्प्रत्यये, दधतो दधिभावे च पृषोदरादित्वात् साधु । 'प्रत्यक्तमस्मिन्ध्यानम्' इति यास्कः ( निरुक्त १२।३३ ) । मेघे हि वृष्टिकामानां जनानां ध्यानं प्रत्यक्तं भवति । अनवस्थानाद् अस्थिरा आप एव तस्यास्थीनि । तस्य जलस्य कदाचित् करकाकारग्रहणाद् अस्थित्वं सुव्यक्तं भवति धवलत्वकठिनत्वसामान्यात् । मेघजलानामस्थिरत्वं मन्त्रान्तरेऽप्युक्तम् ।

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ॥
ऋ० १।३२।१०॥

अस्थावराणां काष्ठाः तासामिति, क्रान्त्वा स्थिताः (द्र० निरुक्ते २।१५) 'वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा' । आवृण्वन्ति लोकमनावृष्टिजन्यानि विविधानि कष्टानि । किं च मन्त्रेऽस्मिन्नस्थिपदस्य स्थानेऽस्थपदं दृश्यते । वृत्रपदमत्र नपुंसकलिङ्गकम् । तस्य संख्या च नवतीर्नवोक्ता । तेनास्य व्यक्तिविशेषवाचकत्वं न संभवति ।

अपि च—

सुदासो नृपतेरश्वमेधस्य नाऽत्र वर्णनम् ।
कोऽपि परन्तपो यज्वा सुदाः शोभनदानवान् ॥११९॥

ये गोतमभरद्वाजविश्वामित्रपुरोगमाः ।
प्रसिद्धा ऋषयः सन्ति सप्त लोकपुराणयोः ॥१२०॥

देहे सप्तेन्द्रियत्वेन यजुर्वेदे तु वर्णिताः ।
तथा शतपथे तेषां यौगिकत्वं निरूपितम् ॥१२१॥

तथाहि—

सप्त ऋषयः प्रति हिताः शरीरे,
सप्त रक्षन्ति सदमप्रमादम् ।
सप्तापः स्वपतो लोकमीयुस्
तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥
यजु० ३४।५५॥

अयमेव विषयो बृहदारण्यकोपनिषदि ( २।२।३ ) प्रकारान्तरेणोक्तः—

अर्वाग् बिलश्चमस ऊर्ध्वबुध्न्यस्
तस्मिन् यशो निहितं विश्वरूपम् ।
तस्या ऽऽसत ऋषयः सप्त तीरे
वागष्टमी ब्रह्मणा संविदाना ॥

अत्र शांकरभाष्यांशाः—······इमावेव गोतमभरद्वाजौ (कर्णौ) इमावेव विश्वामित्रजमदग्नी (नेत्रे)——इमावेव वसिष्ठकश्यपौ (नासिकाछिद्रे) वागेवात्रिर्वाचा ह्यन्नमद्यते, (बृहदारण्य० अध्या० २। ब्रा० २।३;४) । पुनस्तत्रैव—यो ह वै वसिष्ठां वेद, वसिष्ठः स्वानां भवति । वाग्वै वसिष्ठा । वसिष्ठः स्वानां भवति य एवं वेद' (बृहदा० अ० ६ । ब्राह्म० १।२) । तथैव शतपथे—'वाग् वै विश्वकर्मा ऋषिः । वाचा हीदं सर्वं कृतम्' इत्यादि(८।१।१।६॥ ८।१।२।६॥८।१।२।९) । अस्याधारो यजुर्वेदस्य त्रयोदशाध्यायस्य ५४—५८ मन्त्राः । एतेन वेदे वर्णिता वसिष्ठविश्वामित्रादयो न व्यक्तिविशेषा इति सिद्धान्तं संशीतिलेशोऽपि न स्पृशतीति - सुस्पष्टम् ।

ननु बृहदारण्यकादिषु श्रद्धातिशयाद् विश्वसितु भवदीयवचनेषु, गङ्गा-

यमुनादीनां नदीनां तु नदीत्वेन वर्णनं वेदेषूपलभ्यमानं न केनाऽप्यपह्नोतुं शक्यमिति – तथाहि—

**इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।।**
**असिक्न्या मरुद्वृधे वितस्तयाऽऽर्जिकीये शृणुह्या सुषोमया ।।**

ऋ० १०।७५।५।।

**पञ्च नद्यः सरस्वतीमपि यन्ति सस्रोतसः ।**
**सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ।।**यजु० ३४।११।।

एतादृशेनाग्रहग्राहेण ग्रस्तान् प्रत्येवमुच्यते—

**नदीनां नैव नामानि गङ्गादीनि पदानि च ।**
**तद्विशेषणमात्राणि किन्त्वन्योऽन्यबिभित्सया ।।१२२।।**

वेदेषु गङ्गादीनि पदानि न विशिष्टनदीवाचकानि प्रत्युत गत्यादिभेदेन तद्वैशिष्ट्यमात्रज्ञापकानि । यथा—

**गङ्गातिद्रुतगामित्वाद् यौतेश्च यमुना तथा ।**
**सर्तेः सरस्वती किंच शुतुद्र्या शुद्रुतेरपि ।।१२३।।**

**मरुद्भिर्वार्षिकैर्वातैर्वर्धिता च मरुद्वृधा ।**
**परुषेण पथायान्ती परुष्णीत्यभिधीयते ।।१२४।।**

तदुक्तं निरुक्ते – 'गङ्गा गमनात् । यमुना प्रयुवती गच्छतीति वा, प्रवियुतं गच्छतीति वा, सरस्वती सर इत्युदकनाम सर्त्तेः, तद्वती । शुतुद्री शुद्राविणी क्षिप्रद्राविण्याशुतुन्नेव द्रवतीति वा । इरावतीं परुष्णीत्याहुः पर्ववती भास्वती कुटिलगामिनी । असिक्न्यशुक्लाऽसिता । सितमिति वर्णनाम तत्प्रतिषेधोऽसितम् । मरुद्वृधाः सर्वा नद्यो मरुत एना वर्धयन्ति'० इत्यादि । निरु० ९।२५।

अथवा—

**नदनाद्वा नदी भाषा, शैल्यो भेदाश्च तद्गताः ।**
**हृदन्तर्गमनाद् गङ्गा – या शैली प्रौढनिर्मला ।।१२५।।**

**परुष्णी परुषैर्वर्णैर्मधुरा वाक् सरस्वती ।**
**मिश्रिता तु गुणैरेभिर्यमुना वाक् सुसंयता ।।१२६।।**

**मरुतां वर्धनाच्छक्तेरुत्साहस्य मरुद्वृधा ।**
**ऋजुमार्गार्जिकीया च वितस्ता विस्तरान्विता ।।१२७।।**

मरुतां—मर्त्यानामुत्साहादेर्वर्धनादित्यर्थः ।

द्रावयत्याशु चेतांसि शुतुद्री या तु शृण्वताम् ।
नाडीनामानि गङ्गादिपदानि हठयोगिनाम् ॥१२८॥

हठयोगिनां मते इति योज्यम् । तदुक्तं हठयोगप्रदीपिकायाम् (३। ११०)—

'इडा भगवती गङ्गा पिङ्गला यमुना नदी ।'

एवं शिवस्वरोदयेऽपि—

'इडा गङ्गेति विज्ञेया पिङ्गला यमुना नदी ।
मध्ये सरस्वतीं विद्यात् प्रयागादि समस्तथा ॥'

वर्ण्यते यत्तु—"यन्तीति पञ्च नद्यः सरस्वतीम् ।"
सङ्गः पञ्चेन्द्रियोपात्तधियां स तु गिरा सह ॥१२९॥

अथवा—

ज्ञानं पञ्चेन्द्रियोपात्तं मस्तिष्कं प्रापयन्ति याः ।
नाड्यस्ताः पञ्च नद्यो हि ग्रथिता ज्ञानतन्तुभिः ॥१३०॥

आत्तं पृथक् पृथग् ज्ञानजलं मानससञ्चितम् ।
प्रकाशयति या लोके सा वागेव सरस्वती[1] ॥१३१॥

तस्या एव तटे पुण्यो ज्ञानयज्ञः प्रवर्तते ।
सप्तर्षयो वसिष्ठाद्या यत्र गच्छन्ति होतृताम् ॥१३२॥

इतरेऽपि प्रतीयन्ते पौराणिककथाश्रयाः ।
ये प्रसंगाः समाधेयास्ते सुधीभिर्यथोचितम् ॥१३३॥

कानिचित् सुप्रसिद्धानि स्थलान्युद्धृत्य केवलम् ।
स्थालीपुलाकपद्धत्या दिङ्मात्रमिह दर्शितम् ॥१३४॥

ननु किमिदं पूर्वापरविरुद्धमसम्बद्धमभिधीयते पूर्वपदानां यौगिक-

---

१: यथा भारवेरस्मिन् पद्ये—

विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम् ।
प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा सरस्वती ॥ किरात० १४।३॥

त्वादिनिमित्तं चतुर्विधत्वं प्रतिपाद्य वैदिकोदाहरणैश्च तद् उपोद्बलय्याऽनुपदमेव तत् प्रतिषिध्यते, इति चेत् श्रूयतामङ्ग ! तत्र तु वस्तुतो यौगिका अपि अग्नीन्द्रवरुणरुद्रोषोमरुत्प्रभृतयो ये शब्दा येष्वर्थेषु मुहुर्मुहुः प्रयुक्तास्तान् प्राधान्येन तदर्थकान् अवधार्य पूर्वाचार्याः "गौः ग्मा ज्मा क्षा ·····पूषा गातुः इत्येकविंशतिः पृथिवीनामधेयानि" इति रीत्या वर्गीकृत्य पुनस्तान् वर्गान् पञ्चस्वध्यायेषु निरबध्नन् वेदोद्याने विहर्तुं कामानां जिज्ञासूनां पथप्रदर्शनार्थम् । तेषु तेषु चार्थेषु मुहुरावर्तनादेव ते शब्दसमुदायाः समाम्नायनाम्ना निर्दिष्टाः । म्ना अभ्यासे । अभ्यास आवृत्तिः । सम् आ—म्ना–घञ्–सु—समाम्नायः । तथाहि—अग्निपदम् अग्निसूक्तेषु प्रयुक्तं सत् स्वयौगिकमर्थम्—अग्निः कस्मादग्रणीर्भवति, अग्रे यज्ञेषु प्रणीयते, अङ्गं नयति सन्नममानः (अन्तः प्रविशन्), अक्नोपनो भवतीत्यादिरूपमजहदेव क्वचित् परमात्मानम् अन्यत्र जननायकं राजानं सेनापतिं वा परत्र भौतिकमग्निम्, क्वचित्पुनराध्यात्मिकम् आत्मप्रकाशम्, उत्साहम्, आत्मोत्त्थानसंकल्पं वा यथाप्रकरणमभिदधाति । इत्थमवयवानां शक्त्याऽनेकार्थवाचकमपि किञ्चित् पदं मन्त्रेषु यस्मिन्नर्थे मुहुरावृत्तं निघण्ट्वादिकोषेषु च यदर्थकेषु पदेषु पठितं पाठकचेतसि तस्य प्रथमोपस्थितत्वात् तस्मिन् रूढमिवाभाति । इदमेव वैदिकशब्दानां रूढत्वम् । यथा—

उद्बुध्यस्वाऽग्ने प्रतिजागृहि त्वमिष्टापूर्ते संसृजेथामयं च ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत ॥
यजु० १५।५४॥

देवताः—अग्निः । ऋषिः—परमेष्ठी । छन्दः—आर्षी त्रिष्टुप् ।

नित्यमुभयसन्ध्ययो दैनिकाग्निं प्रज्वालयतस्तदैव च मन्त्रमिमं पठतो जनस्य मानसमयं भौतिकोऽग्निरेव प्रथममधिरोहति, साहचर्यात् । परतस्तु कालान्तरे "अस्मिन्त्सधस्थे अध्युत्तरस्मिन्" इत्यादीनामन्येषां पदानां सांनिध्यात् तदग्निपदं साधकचेतसि समुद्बुद्धस्याऽभौतिकस्याऽग्नेरपि व्यञ्जकम्, उत्तरलोकेन भौतिकाग्नेरसम्बन्धात् सततसाधनयाऽन्तरात्मन्येव अग्निभावं प्राप्ते साधको बाह्यमग्निं परित्यजति । तदुक्तं मनुना—

आत्मन्यग्नीन् समारोप्यः ब्राह्मणः प्रव्रजेद् गृहात् । मनु० ६।३८॥

योऽदत्त्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् ।
तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः ।।मनु० ६।३६।।

यदा तु कस्यचित्पदस्य लोकप्रसिद्धोऽतएव रूढायमानोऽर्थस्तत्र वर्णितैः कार्यकलापैर्विशेषणैश्च सामञ्जस्यं नावहति तदा तत्र तस्य प्रकृतिप्रत्ययोपसर्गादिरूपावयवानां शक्त्यां समुद्भासमानो योऽर्थस्तत्र संगच्छते स यौगिकः । इत्थं वेदे योगो रूढिमपहरति । यथा—

**दिव्यं सुपर्णं वायसं बृहन्तमपां गर्भं दर्शतमोषधीनाम् ।**
**अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमि ।।**
**ऋ० १।१६४।५२।।**

देवता—सरस्वान् सूर्यो वा । ऋषिः—दीर्घतमा औचथ्यः । छन्दः—त्रिष्टुप् ।

रूढ्या कोशप्रामाण्येन च "वायसोऽगुरुवृक्षे च श्रीवासध्वांक्षयोः पुमान्" इति मेदिनी । "सुपर्णं वायसं बृहन्तम्" इत्यादेः पदसमुदायस्य कश्चिच्छोभनपतत्रवान् महान् काकाख्यः पक्षिविशेषो वर्ण्यविषय इत्यापाततः प्रतिभाति । '**अहं हि वामूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत्** ।' खिलेषु (१।२।२१) ऋग्वेदात् निरुक्ते (४।१७) उद्धृतम् । वायसपदमिह काकपरकम् । वर्ण्यमानव्यापाराणां काकेऽनुपपद्यमानत्वात्तु पर्यवसाने सूर्यपरको वाऽध्यात्मसम्बन्धी वाऽपरोऽर्थ उपतिष्ठते । तथाहि—सुपर्णं=सुपर्णा रविरश्मयस्तैरभेदात् सूर्योऽपि सुपर्णः, तम् । दिव्यं=दिवि भवं द्योतमानं वा । वायसम्=सततगमनशीलम् । सूर्यः सर्वदा भ्रमरकवत् (भ्रमरको बालकानां लट्टूनामकः क्रीडनक्षिपः) स्वस्थाने परिभ्रमति सौरमण्डलं वा स्वात्मानं परितो भ्रामयति । वयसः 'वयश्च' (३।१२०) इत्यौणादिकसूत्रेण वय गतौ धातोः असच्प्रत्यये, णित्वाच्च वृद्धौ निष्पन्नः । अपां गर्भं स्वरश्मिभिरपां ग्रहीतारम् । गर्भः—गृभ्णातेः गृह्णातेर्वा । 'हृग्रहोर्भश्छन्दसि' (पाणि० ३।१।८४) यथा—"न हि ग्रभायारणः सुशेवः" (ऋ० ७।४।८) । ग्रभाय=ग्रहीतव्य इत्यर्थ इति यास्कः (निरु० ३।३) अथवा अर्तिगृभ्यां भन् (उणा० ३।११५) । ओषधीनां दर्शतम्=जलसेकेन नवप्ररूढा ओषधीर्दर्शयन्तम् । विभक्तिव्यत्ययेन द्वितीयार्थे षष्ठी प्रयुक्ता । अभीपतो वृष्टिभिस्तर्पयन्तम्=अभिगमनवतः=यान् प्रति

जलान्यभिगच्छन्ति तान् जलाशयादीन् वृष्टिभिर्जलैस्तर्पयन्तम्। सरस्वन्तं सर इत्युदकनाम, तद्वन्तम् त्वाम् अवसे=रक्षणाय जोहवीमि=आह्वयामि। यथा वा—

> अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन्।
> अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥
> ऋ० ३।२६।७॥

देवता—आत्मा अग्निर्वा। ऋषिः—विश्वामित्रो गाथिनः। छन्दः—त्रिष्टुप्।

वानरवाहिनीं पाण्डवपताकिनीं सुरसेनां वा सञ्चालयतां श्रीरामकृष्णकार्तिकेयादीनां सदृशस्य कस्याऽपि जननायकस्य सुदृढः संकल्पो ऽत्र वर्ण्यते। तथाहि—अग्निरस्मि=अहं स्वसहयोगिनामनुगतानां वा अग्रणीरस्मि। अहं जन्मना जातवेदाः=प्रकृत्यैव जनानां स्वभावं तेषां चरित्रादिकं च सम्यग् वेद्मि। तेषां हृदये प्रविष्ट इवास्मि। जातवेदाः—जातंजातं वेद। जाते जाते वा विद्यते इति तस्य जातवेदस्त्वम्। घृतं मे चक्षुः=मम दृष्टिर्घृतमयी=स्नेहमयीत्यर्थः। मम दृष्ट्यैव ते विरोधभावनां विमुञ्चन्ति। म आसन् अमृतम्=ममास्ये वदने अमृतस्य=माधुर्यस्य सञ्जीवनशक्तेर्वा वासः। पीयूषवर्षिणी मम वाणी श्रोतॄणां हृदयानि केवलं समुत्साहेनैव नोद्वेलयति प्रत्युत मृतप्रायेष्वपि नवजीवनसञ्चारं समाचरति। अहम् अर्कः=पूजनीयानामर्चकः अन्येषामभ्यर्च्यश्चाप्यस्मि। अहं त्रिधातुः=त्रयो धातवो धारयितारो निर्मातारो वा यस्य तथाविधोऽस्मि। उत्तमजननीजनकाचार्या मानवस्य निर्मातारः,सत्संकल्पसत्साधनसत्समारम्भश्च वा।

राजनीतौ—प्रभुशक्तिः=उत्तमो नेता। मन्त्रशक्तिः=कुशला कूटनीतिः। उत्साहशक्तिः=सैन्यसामर्थ्यं समये प्रहारश्चेति। एत एव त्रयो धातवो व्यक्ते राज्यस्य समाजस्य चेति। रजसो विमानः=रजांसि लोका उच्यन्ते (निरुक्ते ४।१९) । अहं स्वसंकल्पानुकूलस्य लोकस्य स्वयं निर्माता न तु प्राकृतजनवल्लोकानुसारी। अहम् अजस्रो घर्मः। अजस्रः=न कदापि क्षीणशक्तिः। घर्मः=तेजसा सदाऽऽदित्यवत् प्रदीप्तः। नञ्पूर्वकस्य जसु उपक्षये धातोः 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' (पाणि० ३।२।१६७) इति सूत्रेण रप्रत्यये अजस्रः। घृ क्षरणदीप्त्योः धातोः क्तप्रत्यये घृतम् "घृतमाज्ये जले क्लीबं प्रदीप्ते

त्वभिधेयवत्" इति मेदिनी । घर्मः—सदा पर्जन्यवत् क्षरणाज्जनानामभिलाषपूरको वास्मि । हविरस्मि नाम= मया न केवलं स्वकीया वैयक्तिकस्वार्थाः प्रत्युत स्वात्माऽपि लोककल्याणकारिणि यज्ञे हव्यतां नीतस्तेनाऽहं हविरिति नाम्ना प्रसिद्धिं गतः ।

इहाज्यार्थकं घृतपदं प्रथमाविभक्त्यन्तेन चक्षुरितिपदेन सामानाधिकरण्याद् अभेदसंसर्गेण अन्वयं लभमानं स्निग्धत्वसाधर्म्यसम्बन्धात् स्नेहं लक्षयति स्नेहातिशयव्यजनं च प्रयोजनम् । विषयस्य स्नेहस्य निगरणात् तस्य घृतेनाभेदप्रतिपादनाच्च **साध्यवसाना गौणी लक्षणलक्षणा** । तथैव सुधाऽर्थममृतपदमपि लुप्तसप्तम्यन्तेन आसन् पदेन आधाराधेयभावसंसर्गेणान्वयमलभमानं तात्पर्यानुपपत्तेर्माधुर्यादिरूपसाधर्म्यसम्बन्धान्मधुरां नवजीवनसञ्चारकारिणीं वाणीं लक्षयति । अत्रापि पूर्ववदेव **साध्यावसाना गौणी लक्षणलक्षणा** । घर्महविरादिपदानां सम्बन्धेऽप्येवमेव यथास्वं स्वयमुन्नेयम् । **अत्रातिशयोक्तिरलङ्कारः** । आज्यगतस्निग्धत्वचक्षुर्गतस्निग्धत्वयोर्वस्तुतो भिन्नयोरपि अभेदेन वर्णनात् श्लेषानुप्राणिताऽतिशयोक्तिः । ममास्येऽमृतमिति कविप्रतिभोत्त्थितवस्तुना वाण्यमृतयोरभेदप्रतिपादनरूपातिशयोक्तिः व्यज्यते । नहि लोके अमृतनामकः कश्चित्पदार्थः स्वतः संभवी विद्यते । अस्य मन्त्रस्य अग्निः, जातवेदाः, घृतम्, अमृतम् ("अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः" इति मेदिनी) हविः—इत्याद्यनेकैः पदैरापाततः प्रतीयमानो भौतिकयज्ञाग्निपरको रूढिमूलोऽर्थः चक्षुराद्यवयवयोगित्ववक्तृत्वलोकनिर्मातृत्वादीनां चेतनधर्माणामचेतने अनुपपद्यमानत्वात् पर्यवसाने बाधितो लक्षणामूलध्वनिमुत्त्थापयति । श्रीसायणाचार्योऽपि "अग्ने परब्रह्म त्वम्" इत्युक्त्वाऽत्रत्यानेकशब्दानामर्थयोजनायां यौगिकार्थप्रक्रियामुररीचकार । एवम्—

**अयमग्निर्वीरतमो वयोधाः सहस्रियो द्योततामप्रयुच्छन् ।**
**विभ्राजमानः सरिरस्य मध्य उप प्र याहि दिव्यानि धाम॥**

यजु० १५।५२॥

देवता—अग्निः । ऋषिः—परमेष्ठी । छन्दः—स्वराडार्षी त्रिष्टुप् ।

वीरतमः=अतितमां पराक्रमी । वयोधाः=वयो दधातीति=प्राप्तवयस्कः पूर्णायुर्वेत्याशयः । सहस्रियः—योद्धृणां सहस्रेण संमित-

स्तत्तुल्यपराक्रमः। 'सहस्रेण संमितौ घः (पाणि० ४।४।१३५) इत्यनेन घप्रत्यये साधुः। अप्रयुच्छन्=अप्रमाद्यन्—शत्रूणां दुरभिसन्धि प्रतिकर्तुं निरन्तरतत्परो देशरक्षार्थं च सततजागरूकः। अयमग्निः=अस्माकं प्रधानसेनाध्यक्षो रक्षामन्त्री वा। सरिरस्य मध्ये विभ्राजमानः=स्वकीयैः शौर्यपूर्णैःकार्यैर्लोके जाज्वल्यमान इव। "इमे वै लोकाः सरिरम्" इति श्रुतेः ? इति महीधरः। दिव्यानि धाम उप प्रयाहि=दिव्यानि तेजांसि प्राप्नोतु। अथवा धामानि=शत्रूणां श्रेष्ठान् प्रदेशान् दुर्गप्रासादादींश्चात्मसात् करोतु।"धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः"इति मेदिनी। उप प्रयाहीति पुरुषव्यत्ययेन उपप्रयात्विति परिवृत्तिः कार्या। वीरतमत्वादयश्चेतनधर्माः कमपि चेतनमेव जनं स्वविवक्षितत्वेनोपस्थापयन्ति। इत्थं रूढ्या प्रथमप्रतीतोऽप्यग्निपदस्य भौतिकाग्निरूपोऽर्थोऽनन्तरप्राप्तेन यौगिकार्थेन अग्रणीरूपेण बाध्यते। रलयोरभेदात् सरिरम्=सलिलम्। सलिले चाग्नेर्विभ्राजमानत्ववर्णनात् सत्यपि प्रतिबन्धके कार्योत्पत्तिरूपा **तृतीया विभावना**। "कार्योत्पत्तिस्तृतीया स्यात् सत्यपि प्रतिबन्धके। नरेन्द्रानेव ते राजन् दशत्यसिभुजङ्गमः" ॥ इति कुवलया० ७९॥

अपि च—

**अग्ने नय सुपथा राये अस्मान्**
**विश्वानि देव वयुनानि विद्वान्।**
**युयोध्यस्मज्जुहुराणमेनो**
**भूयिष्ठां ते नम उक्तिं विधेम ॥** यजु० ५।३६॥

देवता—अग्निः। ऋषिः—आगस्त्यः। छन्दः—निचृदार्षी त्रिष्टुप्।

हे अग्ने देव विश्वानि वयुनानि विद्वान्=सर्वान् गमनोचितान् मार्गान् ज्ञानविज्ञानजातं वा जानन् त्वम्। राये=ऐश्वर्यप्राप्तये। सुपथा नय=शोभनेन मार्गेण नय। किं च जुहुराणम् एनः अस्मद् युयोधि=जुहुराणम्=यद् अस्मान् कुटिलीकर्तुमिच्छति कुटिलकर्ममु व्यापारयितुमिच्छति तदर्थं प्रेरयतीति तथाविधम् पापम् अस्मत् सकाशात् पृथक् कुरु। वयं ते=तुभ्यम्। भूयिष्ठाम्=निरतिशयाम्। नम उक्तिम्=नमोवाकम्=स्तुतिं विधेम। वयुनम्—वेतेः कान्तिर्वा प्रज्ञा वा (निरु० ५।१४)। अथवा "अजियमिशीङ्भ्यश्च' (उणा० ३।६१) इत्यनेन अज गतिक्षेपणयोः धातोरुनन्प्रत्यये अजेर्वीभावे गुणेऽयादेशे च

रूपम् । निघण्टौ प्रशस्यार्थकेष्वपि पदेषु वयुनं पठितम् । जुहुराणम्= 'हुर्च्छेः सनो लुक् छलोपश्च' (उणा० २।९२) इत्यौणादिकसूत्रेण हुर्च्छं कौटिल्ये धातोः सनि आनच्प्रत्यये रूपम् । पदमिदं चन्द्रार्थे रूढम् । इहतु तदेव कुटिलव्यवहारप्रयोजकार्थे यौगिकम् । युयोधि—यु मिश्रणाऽमिश्रणयोः इति धातोः शपः श्लुः । वा छन्दसि (पाणि० ३।४।८८) इत्यनेन हेरपित्त्वे 'अङ्कितश्च' (पाणि० ६।४।१०३) इति सूत्रेण हेर्धिभावे निष्पन्नम् । इह वयुनानि विद्वान् इति विशेषणं भौतिके ऽग्नौ न संगच्छते । किंच भौतिकोऽग्निर्विज्ञानद्वाराऽपरिमितवैभवऽप्राप्तये कामं प्रभवेत् कुटिलकर्मभ्यो जनानां प्रवृत्तिं वारयितुं तु सर्वथाऽसमर्थस्तेन सर्वज्ञसर्वान्तिर्यामित्वादिगुणविशिष्टे भगवत्येव मन्त्रस्यास्य संगतिरिति सुव्यक्तम् ।

क्रव्यादमग्निं प्रहिणोमि दूरं, यमराज्यं गच्छतु रिप्रवाहः ।
इहैवाऽयमितरो जातवेदा, देवेभ्यो हव्यं वहतु प्रजानन् ।।
यजु० ३५।१९

देवता—अग्निः । ऋषिः—दमनः । छन्दः—त्रिष्टुप् ।

क्रव्यादोऽग्निः=शोकः स हि गतमनुशोचतां जनानामामिशं मांसमत्ति रुधिरं च पिबति । विवेकी पुरुषः कथयति यत् तमग्निमहं यमराज्यं प्रति प्रहिणोमि मृत्युं प्रापयामि समापयामीत्यर्थः । रिप्रं—पापं वहतीति रिप्रवाहो विविधपापभावनोत्पादकः । तदुक्तं हर्षचरिते— "शोको हि नाम पर्यायः पिशाचस्य, रूपान्तरमाक्षेपस्य,⋯—विशेषणं विषस्य, अनन्तकः प्रेतनगरनायकः । अयमनिर्वृतिधर्मा दहनः" इति । द्रोणः पुत्रशोकसंतप्तः स्वजीवितं जहौ । अश्वत्थामा पितृशोकान्धो विवेकमत्यजत् । तद्विपरीतोऽयमितरो जातवेदाः ज्ञानाग्निर्विवेको वा येन—

"जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ।।" गीता २।२७इति

स्वरूपं तत्त्वं वेद । जातम्=जन्म वा समुत्पन्नः प्राणी वा । येन हि जनो जातं जातं वेद स खलु जातवेदाः । स इहैवास्माकं समीप एव सर्वदा तिष्ठतु । प्रजानन्=प्रज्ञापयन् प्रबोधयन्, देवेभ्यः=दिव्यभावेभ्यो हव्यं वहतु=पुष्टिं प्रयच्छतु । प्रजानन् इति लुप्तणिजन्तं पदम् । मन्त्रमिमं पितृमेधे विनियुञ्जानास्तु क्रव्यं मृतस्य देहमत्तीति तं

क्रव्यादम्—चिताग्निमिति व्याचक्षते तस्य प्रथमत एव श्मशाने वर्तमानस्य प्रशान्तस्य वा यमराज्यं प्रति प्रेषणे किं तात्पर्यमिति ते प्रष्टव्याः। अस्मन्मते तु—यमराज्यं गच्छतु=अवसानमेत्विति प्रकारान्तरेण वचनात् पर्यायोक्तालङ्कारः।

इत्थमेकमपि पदं स्वसम्बन्धिगुणकर्मादिवैशिष्टच्येन पाठकस्य दृष्टिभेदेन व्याख्यातुः शास्त्रान्तरज्ञानाधारेण च तत्र तत्राधिभौतिकाधिदैविकाध्यात्मिकान् व्यक्तिसमाजराजनीतिज्ञानविशेषपरकाँश्च विभिन्नार्थान् कथं प्रकटयतीति सुविदितं तत्त्ववताम्। तदुक्तं श्रीयास्केन—'पारोवर्यवित्सु खलु तु वेदितृषु भूयोविद्यः प्रशस्यो भवति' (निरु० १।१६)। शास्त्रं शास्त्रान्तरानुबन्धि। विभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यतीति।

यद्यपि, भागीरथ्या हिमगिरिं प्रति प्रतीपनयनवदियं वेदार्थपद्धतिर्नातिप्राचीना रुचिरा वा तथापि सुचिरसमुच्छिन्ने वेदार्थसम्प्रदाये उत्तरोत्तरमङ्गदपदवत् स्थेमानमुपेयुषि जनमानसेषु रूढिवादे सम्प्रति नाऽन्यः पन्था विद्यतेऽयनाय।

एवं गोपदं पृथिवीधेनुमाध्यमिकवाक्सूर्यरश्म्याद्यर्थकतया निघण्ट्वादिषु कोशेषु पठितं मन्त्रेष्वपि वहुशस्तदर्थकतया प्रयुक्तम्। तदेव धनुर्ज्याचर्मस्नाय्वाद्यर्थकतया न कोशेषु पठितं मन्त्रेष्वप्येतदर्थकतया ऽल्पशः प्रयुक्तमिति हेतोस्तत् पूर्वत्र रूढं परत्र तु यौगिकम्। यथा—

यस्याऽश्वासः प्रदिशि यस्य गावो,
यस्य ग्रामा यस्य विश्वे जनासः।
यः सूर्यं य उषसं जजान,
यो अपां नेता स जनास इन्द्रः ॥ऋ० २।१२।७॥

गवामश्वानां वयसश्च विष्ठा।
भगं वर्चः पृथिवी नो दधातु ॥ अथर्व १२।१।५॥

विष्ठा—विशेषेण स्थितिस्थानम्।

यत्र गावो भूरिशृङ्गा अयासः ॥ ऋ० १।१५४।६॥

इह तदेव गोपदं सूर्यरश्मिवाचकम्। किन्तु—

वृक्षे वृक्षे नियता मीमयद् गौस्ततो वयः प्र पतान् पूरुषादः।
ऋ० १०।२७।२२

वृक्षे वृक्षे=धनुषि धनुषि । नियता=निबद्धा । गौः=ज्या । अमीमयत् =शब्दं करोति । ततः पूरुषादो वयः प्रपतान्=तदनन्तरं तस्याः वेति पञ्चमी । पुरुषाणां प्राणभक्षकाः शराः शत्रुषु पतन्ति । ज्याऽपि गौरुच्यते गव्या (गोरङ्गभूता) चेत् । गोरवयवोऽपि गोपदेनोक्त इत्यवयवावयविभावसम्बन्धरूपा लक्षणा । यदि सा ज्या गव्या न स्यात्तर्हि गमयतीषून् इति व्युत्पत्त्या गोपदेनोच्यते तदा चेदं पदं यौगिकम् । वृक्षो व्रश्चनात्, वृत्वा क्षां (पृथिवीं) तिष्ठतीति वा । धनुरर्थं वृक्षपदं यौगिकम् । "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते०" (ऋ० १।१६४।२०) इत्यादौ द्रुमार्थे तु रूढम् । विः शकुनिनाम वेतेर्गतिकर्मणः अथापीषुनामेह भवत्येतस्मादेव—वी धातोरेव । वी गतिकान्ति० इति धातोः "वातेर्डिच्च"[1] (उणा० १।१३५) इतीण् । सर्वमिदं श्रीयास्कानुसारमुक्तम् निरुक्तमुपजीव्य (द्र० निरुक्त २।५-६) । 'वि' पदं विहगार्थे रूढं शरार्थे तु यौगिकम् । एवमेषां पदानां यौगिकरूढत्वम् ।

इत्थमवयवानां शक्त्यैव स्वार्थसमर्पणेन यौगिकत्वात्, तस्मिन्नेवाऽर्थेऽभीक्ष्णप्रयोगेण कोशेषु तदर्थकपदेषु पठनेन च पाठकचेतसि प्रथमोपस्थितत्वाद् रूढेः, अवयवानां शक्तेः पूर्वोक्तप्रकारकरुढेश्चैकत्र सन्निपाताद् योगरूढेः, एकत्रावयवशक्त्या परत्र च रूढ्या विभिन्नार्थप्रतिपादनाच्च यौगिकरूढेः, सत्त्वाद् वेदेऽपि पदानां चतुर्विधत्वं नानुपपन्नमिति निष्कर्षः ।

अस्तु वा वेदेऽपि लोकवद् रूढेरभ्युपगमः, संस्कारात् ? कोऽयं संस्कार इति चेत्—अतिक्रान्ताः खलु सहस्राधिकाः समाः समुच्छिन्नायाः साथकवेदाध्ययनपरम्परायाः यस्यां षडङ्गवेदाध्ययने जनानामास्थासीत् । कालक्रमेण क्रमागतह्रासनियमानुसारमुपक्षीणसामर्थ्यास्तेऽर्थाविबोधविधुरमपि मन्त्रपाठं पुण्यफलकं मन्यमाना 'मन्त्रानेव निरर्थकान् समुदघोषयन्'। ततः कदाचित्—

चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।
भूतं भव्यं भविष्यच्च सर्वं वेदात् प्रसिध्यति ॥

---

१. वातेरुक्तः प्रत्ययो बाहुलकाद् यास्कमते वीतेरपि द्रष्टव्यः । यु० मी०

वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन्।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥
मनु० १८। ९७,९८॥

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥

इत्यादीनि वचनानि पठतां शृण्वतां च मेधाविनां मनसि पुनस्तदर्थजिज्ञासायां जागरितायाम् "निरस्तपादपे देशे एरण्डोऽपि द्रुमायते" इत्याभाणाकानुसारं तदात्वे वेदार्थवित्त्वचणैर्विचक्षणैरपि गुणभूयस्त्वाद्यभिप्रायवन्ति यौगिकान्यपि वेदपदानि तदात्वप्रसिद्धपुराणेतिहासकथानकादिवर्णितानां प्राचीनानामृषीणां राज्ञां नदीनां प्रदेशविशेषाणां वा तानि नामानीति चिरारूढसंस्कारवशात् प्राचीनपरम्पराऽपरिचितत्वाच्च तथैव मन्यमानैः तत्रापि "इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्" इत्यादिवचनैः प्राप्तहस्तावलम्बैः वेदानामितिहासपरकाणि स्वप्रतिज्ञामवज्ञाया[१]ऽपि यानि व्याख्यानानि व्यधायिषत तान्येव गत्यन्तराऽभावे प्रामाणिकान्यमन्यन्तान्यैः।

अथाऽधुनिकाः पौरस्त्याः पाश्चात्त्याश्च प्रायः सर्वेऽपि वेदाध्येतारः प्रथमं लौकिकं संस्कृतसाहित्यमधीत्य पूर्ववर्णितभाष्योपनेत्रद्वारेणैव वेदार्थान् जिज्ञासन्ते। तत्संस्कारकारणाद् यौगिकार्थवतामपि मन्त्राणामितिहासपरका एवार्था अहमहमिकयाक्रम्य तेषां मतौ दिग्भ्रमं जनयन्ति। आस्तां तावत्कथा संजातदिग्विभ्रमाणां तेषाम्। ये तु याथार्थ्यविदस्तेषां तत्त्वाभिनिविष्टशेमुषीजुषामपि विदुषां मतौ यत् प्रागूढा एवार्थाः प्रतिभासन्तेऽनन्तरागतेन च यौगिकेन वाध्यन्ते सोऽयं संस्कारः।

नन्वेवं भवन्मते याथार्थ्यविदां विदुषामपि चिन्तनं न निर्दोषमिति चेत्, न। दीपालोकेनापगते रज्जुनिष्ठसर्पभ्रमे शुद्धाया एव रज्जुप्रमा-

१. सायणाचार्येण वेदभाष्यभूमिकायां मीमांसकानां मतमङ्गीकृत्यानित्येतिहासो निराकृतः, परन्तु वेदभाष्ये सर्वत्रेतिहासपक्षमवलम्ब्य व्याख्यानमकारि। एतदेवात्र 'स्वप्रतिज्ञामवज्ञाय' इत्यनेन ग्रन्थकृतेनोक्तम्। सायणस्योल्लेखस्तु निदर्शनायास्माभिः कृतः। प्रायेण सर्वेषामेव वेदभाष्यकाराणामियमेव गतिः।
यु० मी०

यास्तत्रोदयात् । प्रत्युत तादृशस्थलेषु कण्ठचामीकरन्यायेन तमसि सहसा प्रकाशरेखयेव काव्येषु वक्रोक्तिविरोधाभासादिभिरिव वा कोऽपि चमत्कारः सचेतसां चेतसि समुन्मिषतीति सहृदयाः प्रमाणम् । तथाहि—

**मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः ।**
**भ्रातेन्द्रस्य सखा मम ।।** ऋ० ६।५५।५

देवता—पूषा । ऋषिः—भरद्वाजो वार्हस्पत्यः । छन्दः—गायत्री ।

मातुः=निजजनन्याः । दिधिषुम्=द्वितीयपतिम् । अहम् अब्रवम्= स्वाभिप्रायं निवेदितवानस्मि । स्वसुर्जारः=स्वभगिन्या अपि अधिप्क्षेता सः । नः शृणोतु=अस्माकमभ्यर्थनाम् आकर्णयतु । न केवलं निज-जननीं परिणीय तेन गर्हितमाचरितम् अपि तु जाल्मेन स्वभगिन्यामपि धर्मविरुद्धमाचरितम् । मन्त्रमिममधीयानस्य पाठकस्य मनसि रूढिबलात् पूर्वोक्तोऽर्थः प्रथममुपस्थितो भवति चिरसंस्कारप्राबल्यात् । विचार्य-माणे तु सोऽनुपपन्नः सन् पदानामेषां यौगिकमर्थमुद्भावयति । तथाहि— माता रात्रिरादित्यस्य । माता निर्मातिः । स हि रात्र्या जघने (अपर-भागे) प्रातरुदेति कुमार इव स्त्रियाः प्रसवकाले । अतो रात्रिर्माता तस्य । स च तस्या दिधिषुः धारयिता रोद्धा वा "अन्दूदृम्भूजम्बूकफेलू-कर्कन्धूदिधिषू०" ([1]उणादि १।९३) इत्यौणादिकसूत्रेण डुधाञ् धातोः ऊप्रत्ययान्तो निपात्यते । "पुनर्भूर्दिधिषूरूढो द्विः, तस्या दिधिषुः पतिः" इत्यमरः । दिधिषुणा स्वाऽवरोधे धृता नारी न सर्वेषां दर्शनपद-मवतरति तथैव रात्रिरपि पूष्णावरुद्धा । स्वसुर्जारः इति—अत्र स्वसृ-शब्देन मन्त्रदृग् उषसमाह । केन पुनः सामान्येन ? उच्यते—साह-चर्यात् । यथा भ्राता स्वस्रा साकं बाल्ये नित्यमेव चरति तथा चोषसा साकमादित्यः । स हि स्वसुर्जारः—उषसो जारयिता । पूष्ण उदये उषा जीर्यति । अथवा स्वेन आदित्येन सह सरणाद् उषा स्वसा सुञ्यसेर्ऋन् (उणा० २।९६) सुञि उपपदे असु क्षेपणे धातोः ऋन्प्रत्यये साधुः । जारः जारणात् । जॄ वयोहानौ धातोः "दारजारौ कर्तरि णिलुक् च" इति वार्त्तिकेन साधुः । "जारस्तूपपतिः समौ" इत्यमरः । इन्द्रस्य

---

१. इदं दशपाद्युणादिवृत्तिकारमतेन (द्र० १।१७६) । अन्ये तु दिधि-उप-पदे स्यतेर्व्युत्पादयन्ति । वस्तुतस्तु दधातेरेव व्युत्पादनं युक्तम् । मन्त्रे तु 'दिधिषु' ह्रस्वोकारान्तः ।

भ्राता—आत्मनां भरणकर्ता भ्राजयिता वा तेजसां वर्धयिता इत्यर्थः। इन्द्रः, आत्मा "इन्द्रियमिन्द्रलिङ्गमिन्द्र······—जुष्टमिन्द्रदत्तमिति वा" (पाणि० ५।२।९३) इन्द्र आत्मा, तस्य लिङ्गम्। करणेन कर्तुरनुमानात् इति तत्सूत्र-व्याख्यायाम् श्रीभट्टोजी दीक्षिताः सिद्धान्तकौमुद्यामूचुः। पूषणः=पोषणकर्तुः। सूर्यस्योदयेन प्राणिनः आप्यायिता भवन्ति। स पूषा यज्ञकर्तुर्मम सखा=सुहृदस्ति। भ्राता=भ्राजतेर्जलोपे निपात्यते "नप्तृनेष्टृत्वष्टृहोतृपोतृजामातृपितृदुहितृ" (उणादि २।९७) इत्यौणादिकसूत्रेण। इह पूर्वोपस्थितं रूढमर्थं प्रत्यादिशतो यौगिकार्थस्य सौन्दर्यं न परोक्षं कस्यचिदपि प्रेक्षावतः।

इहैक एव पूषा मात्रादिभिः सम्बन्धभेदाद् दिधिषुजारादिविविधरूपैरुल्लिखित इति **उल्लेखालङ्कारः**। यस्यैव माता तस्यैव पत्नीत्वेन, यस्याश्च भ्राता तस्या एव जारत्वेन निबन्धने रूढिजन्यो विरोधो यौगिकार्थेन परिह्रियते इति **विरोधाभासः**, स च तदलङ्कारवाचकस्य 'अपि प्रभृति' पदस्याऽप्रयोगात् व्यङ्ग्यः। 'अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो। अहितः सहितः साधुयशोभिरसतामसि ॥' (सा० द० ४।७) इतिवत्।

उल्लेखविरोधयोश्चाङ्गाङ्गिभावसङ्करः। न चेह—

> 'अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम्।
> तिष्ठन्ति चपला यत्र स कालः समुपागतः ॥'

अत्र योगरूढ्या वर्षाकालसम्बन्धिनः, शब्दशक्तिमूलध्वनिना च पुंश्चल्यादिसम्बन्धिनो द्वितीयार्थस्य यथाऽवगमनं तथा प्रथमं रूढ्या, द्वितीयपतिजारादिरूपस्यार्थस्य, ततश्च शब्दशक्तिमूलध्वनिना रात्र्यवरोध—उषोजारणादिरूपस्य द्वितीयस्यार्थस्य ध्वननमिति वाच्यम्। इह प्रथमार्थे वक्तुः सर्वथा विवक्षाविरहात्। न च—विवक्षाऽभावे तथाविधपदयोजनायां श्रमवैयर्थ्यमाशङ्कनीयम्। तस्याश्चमत्कारफलकत्वात्। वस्तुत एतादृशमन्त्रेषु प्रतीकप्रधानायास्तस्या रहस्यवादशैल्याः कश्चिदाभासो लक्ष्यते, या परवर्तिनि तन्त्रादिसाहित्ये विचित्रवचनरचनया औत्सुक्यजननेन विनेयानुन्मुखीकर्तुम् अनधिकारिभ्यश्च तद्रक्षितुं गुरुभिरनुसृता। यथा—

'गोमांसं भक्षयेन्नित्यं पिबेदमरवारुणीम् ।
तमहं कुलजं मन्ये इतरे कुलघातकाः ॥'

ततस्तत्समाधानं च—

'जिह्वाग्रभागो गोमांसं तत्प्रवेशो हि तालुनि ।
गोमांसभक्षणं प्राहुः सर्वपातकनाशनम् ॥

ननु मन्त्रस्यास्य व्याख्यायां श्रीदुर्गाचार्यमनुसरता भवताऽपि 'स्वसुर्जार॰ इत्यस्मिन् मन्त्रे स्वसृपदेन मन्त्रदृगुषसमाह । केन पुनः सामान्येन ? उच्यते साहचर्यात् । यथा भ्राता स्वस्रा साकं बाल्ये नित्यमेव चरति तथा चोषसा साकमादित्यः' । इत्याद्युक्तम् । एतेन साधर्म्यनिरूपणेनाऽत्र विषयस्योषसो निगरणात् केवलस्य विषयिणः स्वसुरेवोपादानात् साध्यवसाना गौणी लक्षणा तन्मूलातिशयोक्तिर्वा प्राप्नोति । सादृश्यातिशयनिरूपणं च प्रयोजनम् । यथा साहित्यदर्पणे "गौर्जल्पति" अत्र विषयस्य वाहीकस्यानुपादानात् तस्य गवा सहाऽभेदनिरूपणात् तस्मिन् गोधर्माणां जाड्यमान्द्यादीनामतिशयो व्यज्यते । यथा वा— प्रासादशिखरेष्वत्र चन्द्रराजी विराजते । अत्र युवतीनां मुखरूपं विषयं निगीर्य तेन सह चन्द्रराज्या अभेदप्रतिपादनेन मुखानां सौन्दर्यातिशयो व्यज्यते, इति चेत्? न— इहोषसः स्वस्रा पूष्णश्च जारेण सह साम्यस्य भेदस्य वाऽभावात् । प्रत्युत बलादिवापततोऽनभीष्टस्य तस्य परिहारोऽभिमतः । एवमिह पक्षे रूढेः पक्षान्तरे च योगस्येत्युभयोर्योगाद् यौगिकरूढिरेव । तस्माद् युक्तमुक्तं यद् वेदेष्वपि पदानां चतुर्विधत्वं नाऽनुपपन्नमिति ।

अथ सिंहावलोकनपूर्वकं स्वाभिप्रायं कारिकाभिरुपसंहरति—

प्रतिज्ञाय श्रुतौ रूढेरभावं प्रथमं ततः ।
मन्त्रोदाहरणैस्तस्याः सविस्तरनिरूपणम् ॥१३५॥

पूर्वाऽपरविरोधेन किमिदं क्रियते ननु ?
इति चेच्छ्रूयतामङ्ग यदिहास्ति विवक्षितम् ॥१३६॥

रूढिर्नास्ति श्रुतौ पुंभिर्व्यवहारप्रकल्पिता ।
शब्दा इन्द्रादयो व्यक्तिविशेषाणां न वाचकाः ॥१३७॥

प्रयुक्तं यत्पदं यस्मिन्नर्थे मन्त्रेऽष्वनेकशः ।
यदर्थकेषु शब्देषु कोशे चापि निवेशितम् ॥१३८॥

प्रथमोपस्थितत्वेन तस्मिन्नर्थे हि तत्पदम् ।
पाठकस्य मतौ भाति न रूढम् अपि रूढवत् ॥१३९॥

संगच्छते न रूढोऽर्थो वाक्ये निजविशेषणैः ।
सामञ्जस्याय तत्रैति योगोत्थो यः स यौगिकः ॥१४०॥

उक्तोऽर्थो योगशक्त्या तु रूढ्या यत्र नियम्यते ।
संयोगादुभयोः शक्त्योर्योगरूढ स उच्यते ॥१४१॥

योगशक्त्या च यत्रैको रूढ्या चान्यः प्रतीयते ।
एकेनैव पदेनाऽसावर्थो यौगिकरूढकः ॥१४२॥

माहाभाग्यादिहैकैव देवता बहुनामभिः ।
स्तूयते, देवताश्चान्याः प्राप्नुवन्ति तदङ्गताम् ॥१४३॥

सर्वशक्तिमतो विश्वरूपस्य रूपशक्तयः ।
उच्यन्ते। नामभिस्तैस्तैरुपासकविवक्षया ॥१४४॥

एकोऽपि चैत्रः पुत्रेण पिता, पित्रा सुतस्तथा ।
गुरुणा चोच्यते शिष्यः शिष्येणाऽपि गुरुः स तु ॥१४५॥

भ्रात्रा भ्रात्रेति, पत्न्या च पतिः, सख्या सखा तथा ।
पण्डितः सैनिकः साधुरसाधुरथवा परैः ॥१४६॥

लोके सम्बन्धभेदेन प्रकृत्या कर्मणा गुणैः ।
एकोऽपि सन्ननेकाभिः संज्ञाभिर्ज्ञायते जनः ॥१४७॥

तथैकमपि सन्तं तु बहुधा कल्पयन्ति तम् ।
अग्निमिन्द्रं तथादित्यं वरुणं वा प्रचक्षते ॥१४८॥

तदुक्तम्—

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥
ऋ० १।१६४।४६॥

सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति ॥
ऋ० १०।११४।५॥

तदेवाग्निस्तदादित्यस्तद् वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः ॥यजु० ३२।१॥

दर्शनादग्रणीत्वाच्च भूलोके सोऽग्निरुच्यते ।
ऐश्वर्यातिशयादिन्द्रोऽन्तरिक्षे वृत्रमर्दनात् ।।१४६।।

द्योतनाद् दिवि चादित्यः सूर्यो वा प्रेरणात् तथा ।
दुष्टानां रोदनाद् रुद्रो विष्णुर्व्याप्तेश्च सर्वतः ।।१५०।।

स हि बृहत्त्वतो ब्रह्मा यमो लोकनियन्त्रणात् ।
निवासात् सर्वदेवानां महादेवोऽप्यसौ मतः ।।१५१।।

तदुक्तं श्रीमता यास्केन—'अथैतान्यग्निभक्तीन्ययं लोकः (पृथिवी) प्रातःसवनम्·········अथास्य कर्म वहनं च हविषामावाहनं च देवतानां यच्च किंचिद् दार्ष्टिविषयकमग्निकर्मैव तत् ।

अथैतानीन्द्रभक्तीन्यन्तरिक्षलोको माध्यन्दिनं सवनम् ·····अथास्य कर्म रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत् ।

अथैतान्यादित्यभक्तीनि । असौ (द्यु) लोकः । तृतीयसवनम् । अथास्य कर्म रसादानं रश्मिभिश्च रसधारणम् । यच्च किंचित् प्रवह्लितम (प्रभुत्वादिकम्) आदित्यकर्मैव तत्' (निरुक्ते ७।२।८,९,१०,११) ।

अथ पिण्डब्रह्माण्डयोः सादृश्यम्—पूर्यतेः पूः, वपुर्विश्वं च । पुरि देहे ब्रह्माण्डे च शयनात् पुरुषो जीवो विराट् पुरुषश्च—

पूर्यतेः पूर्जगत्सर्वं, शयनात् तत्र पूरुषः ।
सहस्रमूर्धभिर्युक्तः सहस्राक्षः सहस्रपात् ।।१५२।।

द्यौः शिरोऽग्निर्मुखं तस्य, दृक् सूर्यश्चन्द्रमा मतः ।
वायुः प्राणा दिशः श्रोत्रे धरणी चरणौ तथा ।।१५३।।

ब्रह्माण्डेऽग्नीन्द्रसूर्याद्या देवा ब्रह्माङ्गतां गताः ।
पिण्डेऽप्यात्मानमास्यादिभावात्ते पर्युपासते ।।१५४।।

तदुक्तमथर्ववेदे—

यदा त्वष्टा व्यतृणत् पिता त्वष्टुर्य उत्तरः ।
गृहं कृत्वा मर्त्यं देवाः पुरुषमाविशन् ।। अथर्व० ११।८।१८।

सूर्यश्चक्षुर्वातः प्राणं पुरुषस्य विभेजिरे ।
अथास्येतरमात्मानं देवाः प्रायच्छन्नग्नये ।। ऋ० ११।८।३१।।

शरीरस्य तापमानं यावत् स्वमर्यादां नातिक्रामति तावदेव प्राणी प्राणिति ।

तस्माद्वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते।
सर्वा ह्यस्मिन् देवता गावो गोष्ठ इवासते ॥
अथर्व० ११।८।३२॥

बृहदारण्यकोपनिषद्यपि वसुरुद्रादित्यादयो देवा न पुराणादिप्रसिद्ध-व्यक्तिविशेषरूपेण वर्णिताः, प्रत्युत यौगिकार्थसामर्थ्याद् अग्निपृथिवी-वाय्वादय एव ते इति दर्शयति—

'स होवाच महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति। कतमे ते त्रयस्त्रिंशद् इत्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशद् इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति ॥२॥ कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः, एतेषु हीदं सर्वं हितमिति तस्माद् वसव इति ॥३॥ कतमे रुद्रा इति ? दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्या-दुत्क्रामन्त्यथ रोदयन्ति। तद्यद्रोदयन्ति तस्माद् रुद्रा इति ॥४॥ कतमे आदित्या इति ? द्वादश वै मासाः संवत्सरस्यैते आदित्याः। एते हीदं सर्वमाददाना यन्ति। ते यदिदं सर्वमाददाना यन्ति तस्मादादित्या इति ॥५॥ कतम इन्द्रः ? कतमः प्रजापतिरिति ? स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति। कतमः स्तनयित्नुरिति ? अशनिरिति। कतमो यज्ञ इति ? पशव इति' (बृहदारण्यकोपनिषद् ३।९।३,४,५,६)।

पिण्डब्रह्माण्डयोरित्थं सादृश्यं शास्त्रवर्णितम्।
समाजेऽप्युच्यते वर्णव्यवस्थाव्याजतः श्रुतौ ॥१५५॥

तदुक्तं पुरुषसूक्ते—

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत ॥यजु० ३१।११

नृपसेनापतिन्यायाधीशाद्या अधिकारिणः।
मनुनाऽपीन्द्रसूर्येन्दुयमादित्वेन वर्णिताः ॥१५६॥

तथाहि—

अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात्।
रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः ॥

इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥

यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥

तपत्यादित्यवच्चैषां चक्षूंषि च मनांसि च ।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥

सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट् ।
स कुबेरः स वरुणः स महेन्द्रः प्रभावतः ॥मनु०७।३-७॥

विद्याप्रस्थानभेदेन प्रसङ्गादिवशात् तथा ।
निरस्य लौकिकीं रूढिं शब्दाः वेदेषु यौगिकाः ॥१५७॥

एकमिन्द्रपदं तस्माद् ब्रह्माण्डविषये प्रभुम् ।
आत्मानं पिण्डसम्बन्धे वृत्रासुरवधेऽशनिम् ॥१५८॥

नृपं राज्यप्रसङ्गे च यौगिकार्थं प्रयच्छति ।
न लोकरूढं कुत्रापि पौराणिककथाश्रयम् ॥१५९॥

यद्यप्यस्ति श्रुतावित्थं पदभेदचतुष्टयी ।
तथापि तत्र रूढ्यादेः परिभाषा विकल्पते ॥१६०॥

अस्तु वा लोकवद् वेदे पदभेदचतुष्टयी ।
वेदाध्ययनकालेऽपि लोकसंस्कारकारणात् ॥१६१॥

प्रागधीत्यैव साहित्यं लौकिकं सपुराणकम् ।
सर्वे प्राच्याः प्रतीच्या वा जना वेदमधीयते ॥१६२॥

तत्संस्कारवशात् तेषां बुद्धौ लोकप्रतिष्ठितः ।
अतिरूढोऽर्थ एवादावनुशीलयतां श्रुतिम् ॥१६३॥

भाष्याणि सायणादीनां पाश्चात्यविदुषामपि ।
अनुवादाश्च दिङ्मोहं प्रयच्छन्त्येव तं पुनः ॥१६४॥

योगार्थकुञ्चिका मोहयन्त्रमुद्घाटयेद् यदा ।
मन्त्रमञ्जूषिकागूढं तदा रत्नं प्रकाशते ॥१६५॥

प्राक् प्रतीतश्च रूढोऽर्थो बाधितो यौगिकेन तु ।
विरोधाभासवच्चित्ते विदधाति चमत्कृतिम् ॥१६६॥

एवमभिधायाः स्वरूपमभिधाय सम्प्रति प्रसङ्गप्राप्तां लक्षणां लक्षयति—

विवक्षितार्थनिष्पत्त्यै शक्यसम्बन्ध्युपस्थितिः ।
यया सा लक्षणावृत्तिर्द्वितीया सहजेतरा ॥१६७॥
अभिधेयार्थबाधे तु योग्यताविरहादिना ।
क्रियते लक्षणा, तस्या हेतू रूढिप्रयोजने ॥१६८॥

'गङ्गायास्तटे घोषः' इति कथनेन तटे विवक्षितस्य घोषनिष्ठस्य यस्य शीतत्वपावनवादेः,[1] तदतिशयस्य[2] वा नाऽवगमस्तत्कृते शक्यस्य= गङ्गापदेनाऽभिधाशक्त्या प्रतिपाद्यस्य तदीयप्रवाहरूपस्याऽर्थस्य सामीप्यादिसम्बन्धसम्बन्धी तटरूपोऽर्थः, शब्दस्य यया वृत्त्या[3]=गङ्गादिपदस्य येन व्यापारेणोपस्थाप्यते सा लक्षणा। इह गङ्गापदश्रवणाज्जातो वाच्यार्थोपस्थिति (स्मृति) स्वरूपः श्रोतुर्मानसो व्यापारोऽपि शब्दे उपचरितः । गङ्गापदात् तदीयप्रवाहरूपोऽर्थोऽभिधया[4] शक्त्या प्रथमं बोध्यते । तत्र घोषाऽधिकरणत्वयोग्यताविरहात् मुख्यार्थबाधे तत्सम्बन्धी तटरूपो द्वितीयोऽर्थस्तदनन्तरम् । तस्मादियं द्वितीया वृत्तिः । इयं सहजेतरा=न नैसर्गिकी ।

अभिधां केचिदीश्वरोद्भावितां मन्यन्ते, लक्षणां तु न तथा । इयं वाच्यस्य मुख्यार्थस्य बाधे=योग्यतादिविरहाद् अन्वयाऽनुपपत्तौ भवति। गङ्गायां घोष इत्यत्र प्रवाहाऽधिकरणा आभीरपल्लो न

---

१. 'गङ्गायास्तटे घोषः' इत्यादेः प्रयोगाद् येषां न तथा प्रतिपत्तिः, तेषां पावनत्वादीनां धर्माणां तथा प्रतिपादनात्मनः प्रयोजनाच्च मुख्येन अमुख्यार्थो लक्ष्यते । काव्यप्रका० उल्ला० २॥

२. उत्तरत्र गङ्गातटे घोषः इति प्रतिपादनादलभ्यस्य शीतत्वपावनत्वातिशयस्य बोधनरूपं प्रयोजनम् । सा० द० परि० २। कारि० ३८ ।

३. वृत्तयः अभिधालक्षणाव्यञ्जनादयः शब्दव्यापाराः । तदुक्तम्—वृत्तीनां विश्रान्तेरभिधातात्पर्यलक्षणाख्यानाम् । अङ्गीकार्या तुर्या वृत्तिर्बोधे रसादीनाम्॥ सा० दर्पण परि० ५। कारि० १॥

४. शक्तिः अभिधा । तया प्रतिपादितोऽर्थः शक्यः=वाच्यार्थः इति नैयायिकाः । लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः (न्यायमु० शब्दखण्ड, कारिका ८२) । शक्यसम्बन्धो लक्षणा इति रसगङ्गाधरे श्रीजगन्नाथाः । किन्तु केचिल्लक्षणां व्यञ्जनां चापि शक्तिमाहुः । तदुक्तम्—'वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः। व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः ॥'
सा० दर्पण परि० २। कारि० ३ ॥

संभवतीति वाक्येऽन्वयाऽनुपपत्तेर्मुख्यार्थबाधः। ततश्च गङ्गापदेन गङ्गा-प्रवाहसंयुक्तस्य तदीयतटरूपस्याऽर्थस्य ग्रहणे गङ्गातटाऽधिकरणाऽऽभीरपल्लीति प्रत्ययो लक्षणया जायते।

अन्ये 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ काकपदेन केवलवायस-रूपाऽर्थाऽभिधाने मुख्यार्थबाधाऽभावान्न लक्षणा। किन्तु वक्तुस्तात्पर्य-विषयीभूतेऽपि बिडालादिभ्यो दधिरक्षणेऽप्राप्ते तात्पर्याऽनुपपत्त्या लक्षणामङ्गीकुर्वन्ति। तया च सर्वेऽपि दध्युपघातका बिडालादयो लक्ष्यन्ते। इदमसहमानाः पूर्वे काकपदेन काकेतरबिडालादिरूपाऽर्थग्रहणे मुख्यार्थबाधाद् दध्युपघातकत्वसम्बन्धेन सर्वेऽपि बिडालादयो लक्ष्यन्ते, तत्र काकपदाऽभिधेयस्य काकरूपस्य मुख्यार्थस्य आत्मनोऽप्युपादानादियम् **उपादानलक्षणेति** व्याचक्षते। अत एव **'मा त्वा वृका अघायवो विदन्०'** (यजु० ४।३४) इत्यादौ वृकपदेन सर्वेऽपि हिंस्रश्वापदा लक्ष्यन्ते। अस्या लक्षणाया हेतुः क्वचिद् रूढिः। यथा—कर्मणि कुशल इति। क्वचित् किमपि प्रयोजनम्। यथा—गङ्गायां घोष इति। इदं विवृणोति—

**रक्षन् क्षतात्करं क्षिप्रं कुशांल्लात्येष पुष्कलान्।**
**इति वाक्यं क्रमात् क्षीणमभवत् कुशलं पदम् ॥१६९॥**

अयं कुशान् लातीति[1] प्रशंसापरकं वाक्यं मुहुरुदीरितम् एकसमस्त-पदवन्मध्यवर्तिविभक्तिलोपमनुभूय कुशलः इत्यभवत्। किंच—

---

१. साहित्यविशारदैः 'कुशल-प्रवीण-लावण्य' आदि शब्देषु 'अन्यद्धि प्रवृत्ति-निमित्तमन्यद् व्युत्पत्तिनिमित्तम्' इति मतमाश्रित्य यथाक्रमम् 'कुशान् लातीति कुशलः, प्रकृष्टो वीणायामिति प्रवीणः, लवणस्य भावो लावण्यम्' इत्यादि-व्युत्पत्तीः प्रदर्श्य एषु प्रवृत्तिनिमित्तस्यान्यस्य कल्पना क्रियते। 'अपि कुशलं भवतः ?' 'कुशलं देवदत्तस्य देवदत्ताय वा' इत्यादिप्रयोगेषु न कथमपि कुशल-पदस्य कुशान् लातीति काल्पनिका व्युत्पत्तिः स्वीकर्तुं शक्यते। अतः साहित्य-विशारदानामुक्तमतं तेषां व्याकरणशास्त्रस्याज्ञानमेव सूचयति। यतो नहि कश्चिदपि वैयाकरणः कुशलादिपदानामीदृशीर्व्युत्पत्तीः करोति। कुशलादि-पदानां यस्मिन्नर्थे लोके प्रसिद्धिस्तदर्थिकैव व्युत्पत्तिः व्याकरणग्रन्थेषूपलभ्यते। तद्यथा—'कुश इति सौत्रो धातुः वैदुष्यारोग्ययोः। कोशति कोशनं वा कुशलो मेधावी, कुशलम् आरोग्यम् ( द्र०—दशपाद्युणादिवृत्तिः ८।१०९, पृष्ठ ३५९ )। एवमेव 'प्रपूर्वाद् गत्याद्यर्थकाद् 'वी' धातोरौ-

विहायाऽर्थं कुशग्राहिरूपं स्वं योगजं ततः।
विवेचकत्वसाधर्म्याद् दक्षाऽर्थे रूढतां गतम् ॥१७०॥

प्रवीणः स प्रकृष्टो यो वीणावादनकर्मणि।
प्रवीणोऽध्ययनेऽत्रापि पूर्ववद् रूढलक्षणा ॥१७१॥

सादृश्यगुणयोगेन गौणीयं लक्षणोच्यते।
सादृश्येतरसम्बन्धैस्तैस्तैः शुद्धाऽभिधीयते ॥१७२॥

यत्तु दर्पणकारः 'केचित्तु कर्मणि कुशलः' इति रूढावुदाहरन्ति, तदन्ये न मन्यन्ते। कुशग्राहिरूपस्याऽर्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वाद् इत्याह। तत्र विचार्यते—प्रत्यक्षपरोक्षातिपरोक्षवृत्तीनि त्रिविधानि पदानि। तत्र प्रत्यक्षवृत्तिषु पाचकादिषु व्युत्पत्तिलभ्योऽर्थो झटित्यवभासते न तु परोक्षाऽतिपरोक्षवृत्तिषु। लोकव्यवहारे यत्र प्रचुरप्रयोगाद् यौगिकाऽर्थप्रतिसन्धानं विनैव प्रवृत्तिनिमित्तस्याऽर्थस्याऽवगमस्तत्र तत्पदस्य तदर्थे रूढिरेव शक्तिर्न तु लक्षणा। यत्र तु व्युत्पत्तिलभ्यस्याऽर्थस्य बाधे तत्सम्बन्धी परोऽर्थ उपतिष्ठते तत्रैव लक्षणा। पुरा काले कुशललावण्याऽनुकूलादिपदेषु समुच्चारितेषु तेषां व्युत्पत्तिलभ्याऽर्थानां कुशग्राहिप्रभृतीनां प्रथमोपस्थितिरभूत्, बहुजनानां संस्कृतभाषातद्व्याकरणनिपुणत्वात्। अद्यत्वे तु कदाचिदवकाशक्षणेष्वपि प्रयत्नपूर्वकं चिन्तितानामनेकपदानां व्युत्पत्तिलभ्योऽर्थो न धियमधिरोहति। तेन कथं तेषु लक्षणाऽवकाशः? सरित्प्रवाहवद्देशकालभेदेन सततपरिवर्तनशीलानां भाषाणां प्रकृतिरियं यत्—

कदाचित् वाक्यानि पदतां[1] पदानि स्वरूपविकृतिम्[2] अर्थाश्च परि-

---

णादिके नक्प्रत्यये णत्वे च चतुरार्थकः प्रवीणशब्दोऽञ्जसा सिद्ध्यति। एवं लुनातीति लवणा नन्द्यादिगणपाठात् (पाणि० ३।१।१३४) ल्युप्रत्यये णत्वे च् लवणा त्विट्=दीप्तिः, ततो भावे ष्यञि लावण्यम् (द्र० शब्दकल्पद्रुम कोशः भाग ४, पृष्ठ २१६ कालम ३)। 'यौगिकान्येव पदानि कथमुत्तरकाले रूढतां गतानि' इत्ययं विषयोऽस्माभिः 'संस्कृत व्याकरण-शास्त्र का इतिहास' ग्रन्थस्यैकोनविंशेऽध्याये विस्तरेण निरूपितः। यु० मी०।

१. पुरि शेते इति पुरुषः। अनसः शकटस्य अकं गतिं हन्तीत्यनोकहः। नितरां पुनातीति निपुणः। नितरां स्नातः निष्णातः।

२. दौर्हृदम्='औत ओत्' (१।४१) इत्यनेन ओकारस्योत्वे, 'सर्वत्र

वर्त्तनं वैविध्यं[1] वा प्राप्नुवन्ति, कानिचित् पदानि विभिन्नजातीनां परस्परसंपर्कवशाद् विभिन्नभाषाभ्यः समागत्य तदङ्गतां गच्छन्ति। तेषु व्युत्पत्त्यन्वेषणं वक्रः पन्थाः। तस्माद् यत् कुशलपदं श्रीमम्मटकाले स्वव्युत्पत्तिलभ्येनार्थेन कुशग्राहिरूपेण कथञ्चित् सम्बद्धमासीत्, तदेव श्रीविश्वनाथसमये तस्मात् सर्वथा विच्छिन्नमभवदिति नात्र चित्रम्। तेनाऽत्र न काव्यप्रकाशकारो दोषभाजनं न वा साहित्यदर्पणप्रणेता। तथापि येभ्यः कर्मणि कुशल इति रूढिमूललक्षणाया उदाहरणं न रोचते, तेषां सन्तोषाय 'कलिङ्गः साहसिकः, वङ्गो भावुकः' इत्याद्युदाहार्यम्। देशविशेषवाचकत्वेन प्रसिद्धं कलिङ्गपदमिह आधाराधेयभावसम्बन्धात् तन्निवासिनं जनं लक्षयति। यथा—

---

लबराम्' (३।३) इत्यनेन रेफलोपे। 'ऋतोऽत्' (१।२७) इत्यनेन ऋकारस्य अत्वे, 'प्रदीप्तकदम्बदोहदेषु दो लः' (२।१२) इत्यनेन दकारस्य लत्वे च दौर्हृदम्, दोहदम्, दोहल इति रूपत्रयसिद्धिः। इहाग्रे चोद्धृतानि सूत्राणि प्राकृतप्रकाशस्य ज्ञेयानि।

१. उपेत्याधीयतेऽस्मादित्युपाध्यायः। अत्रापि वाक्यं पदत्वं प्राप्तम्। ततः 'उत ओत् तुण्डरुपेषु' (१।२०) इत्यनेनादेः उतः ओत्वम्, 'पो वः' (२।१५) पकारस्य वत्वम्, 'ध्यह्ययोर्झः' (३।२८) ध्यइत्यस्य झकारादेशः, 'शेषादेशयोर्द्वित्वमनादौ' (३।५०) आदेशझकारस्य द्वित्वम्, 'वर्गेषु युजः पूर्वः' (३।५१) प्रथम झकारस्य जकारादेशः, 'कगडचजतदपयवां प्रायो लोपः' (२।२) अन्तिमस्य पकारस्य लोपः, ततश्च हिन्दी भाषायां स एव उपाध्यायो ह्रासमवाप्य ओझा =कुलविशेषो मन्त्रचिकित्सको वा, मिथिलायां च 'झा' ब्राह्मणानां वर्गविशेषार्थकोऽभवत्। उत्तरप्रदेशग्रामेषु स पाधा=ग्रामशिक्षकः श्रूयते। [पञ्जाबी भाषायां पांधा=पुरोहित उच्यते] कन्था=जीर्णवस्त्रम् भारते। पश्चिमोत्तरप्रदेशे ताशकन्दसमरकन्दादिनगरनामसु तदेव नगरार्थकमभवत्। 'कन्थापलदनगरग्रामह्रदोत्तरपदात्' (पाणि० ४।३।१४१)। नापितः=क्षौरकर्ता। संस्कृतभाषायामस्य पदस्य व्युत्पत्तिः दुःशका। भाषाविज्ञानविदस्तु अस्योद्भवं स्नापितपदात् स्न इत्यस्य विकर्षेण सनापित इति जाते ततः सकारस्य हकारत्वे तयोः आद्यन्तविपर्ययेण हकारलोपेन च वर्णयन्ति। अद्य हिन्दीभाषायां तदेव 'नाई' इति श्रूयते। भाषाणामीदृशे चक्रव्यूहे बहुत्र व्युत्पत्तिरेव दुःसाध्या तदाधारा लाक्षणिकत्वचिन्ता तु सुतरां दुरापेतेति सुधियः स्वयं विभावयन्तु।

वाष्पयानं समागच्छद् गच्छद् वा यात्रिभिर्जनैः ।
इन्द्रप्रस्थादिभिः शब्दैरुच्यते स्थाननामभिः ॥१७३॥

अभावाद् गमनादीनां क्रियाणां नगरादिषु ।
मुख्यार्थस्य परित्यागादियं लक्षणलक्षणा ॥१७४॥

स्थाननामानि यानेषु बाधितानीति लक्षणा ।
हेतुरत्र न सादृश्यं किन्तु तत्स्थानगामिता ॥१७५॥

परवञ्चनसम्बद्धा धारा दण्डविधौ च नः ।
खनेत्रयुगनिर्दिष्ट (४२०)[1] संख्यया वर्ततेऽङ्किता ॥१७६॥

तत्सम्बन्धवशाल्लोकभाषायां तत्प्रतीकताम् ।
प्राप्तयाऽऽख्यायते धूर्तो मानवः संख्यया तया ॥१७७॥

पारम्परिकसम्बन्धाद् धारायाः संख्यया सह ।
धूर्तार्थबोधने रूढिमूलेयं शुद्धलक्षणा ॥१७८॥

आह्वानाय तथा दूरात् क्रेतृभिः पण्यविक्रयी ।
भो आम्रेत्यादि तत्पण्यसंज्ञयैवाऽभिधीयते ॥१७९॥

निरूढा लक्षणा एतत्सदृश्यः प्रत्यहं जनैः ।
व्यवहारे विधीयन्ते लाघवायैव केवलम् ॥१८०॥

'गौर्वाहीकः' प्रयोगेऽस्मिन् जाड्यमान्द्यादिकं यथा ।
न तथा लक्षणास्वासु किञ्चिदन्यत् प्रयोजनम् ॥१८१॥

आसु=पूर्वप्रदर्शितलक्षणास्वित्यर्थः । लक्ष्यलक्षकयोः परस्परं सादृश्यसम्बन्धे गौणी, तदितरसम्बन्धेषु च शुद्धा लक्षणेत्यग्रे वक्ष्यते ।

अथ प्रयोजनवतीं लक्षणामाह—

विवक्षिताऽभिधाने तु न क्षमं वीक्ष्य वाचकम् ।
क्रियते लक्षणा तत्र प्रयोजनवती परा ॥१८२॥

गङ्गायां घोष इत्यत्र प्रवाहार्थस्य मुख्यता ।
तत्र घोषस्य बाधेन लक्ष्यं लक्षणया तटम् ॥१८३॥

सामीप्यं तत्र सम्बन्धस्तटस्य गङ्गया सह ।
शैत्यपावनतोत्कर्षबोधनं च प्रयोजनम् ॥१८४॥

---

१. ४२० इति स्वरूपया ।

शीतत्वपावनत्वादेर्य उत्कर्षः प्रतीयते ।
साक्षाद् गङ्गादिभिः शब्दैर्न स गङ्गातटादिभिः ॥१८५॥

तटार्थस्य न मर्यादा निर्देष्टुं क्वापि शक्यते ।
क्रोशद्विक्रोशपर्यन्तं प्रसारात् परतोऽपि वा ॥१८६॥

पूर्वोक्ता रूढिप्रयोजनाऽन्यतरहेतुका वा लक्षणा **उपादानलक्षणा लक्षणलक्षणा** चेति भेदाभ्यां द्विविधेत्युच्यते—

द्वैविध्यं ते अपि द्वे च गच्छतो लक्षणे पुनः ।
उपादानवती पूर्वा परा लक्षणलक्षणा ॥१८७॥

मुख्यार्थो बाधितो यत्राक्षिपत्यन्यं स्वसिद्धये ।
स्यादात्मनोऽप्युपादानात् तत्रोपादानलक्षणा ॥१८८॥

स्वसिद्धये=वाक्यार्थे स्वान्वयस्य सिद्धये यत्र बाधितो मुख्यार्थोऽन्यमाक्षिपन् स्वार्थं सर्वथा न जहाति तत्रात्मनोऽप्युपादानाद् उपादानलक्षणा ।

१. तत्र रूढिमूला उपादान लक्षणा—

धावति श्वेत इत्यत्र गुणः श्वेतः क्रियाऽक्षमः ।
अश्वादीनाक्षिपत्यन्यान् वाक्यार्थेऽन्वयसिद्धये ॥१८९॥

उपादानाद् गुणस्याऽपि गुणिना सह लक्षणे ।
उपादानवती नाम्ना जहत्स्वार्थाऽप्यसौ मता ॥१९०॥

गुणे शुक्लादयः पुंसि, गुणिलिङ्गाश्च तद्वति ।
तथापि लाघवादेषु गुणस्यैवाऽभिधेयता ॥१९१॥

गुणिनो ग्रहणे तेन कदाचिल्लक्षणोचिता ।
विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे ॥१९२॥

तस्मात्—

गुणाभिधायिभिः शब्दैः श्वेतश्यामादिभिः क्वचित् ।
बोध्यन्ते गुणिनो यत्र निरूढा तत्र लक्षणा ॥१९३॥

तदुक्तं रसगङ्गाधरे—"एवं नीलादिपदानां लाघवाद् गुणगतजातेरेव शक्यताऽवच्छेदकतया गुणद्रव्ययोः 'नीलो घटः' इत्यादौ सामानाधिकरण्येनाऽन्वयस्याऽनुपपत्तेः समवायात्मना गुणरूपशक्यस्य सम्बन्धेन नीलादिशब्दैर्गुणिनो लक्ष्यन्ते" । वेदेऽपि—

**शुक्रं ते अन्यद् यजतं ते अन्यद् विषुरूपे अहनी द्यौरिवासि ।**
**ऋ० ६।५८।१।**

देवता—पूषा । ऋषिः—बार्हस्पत्यो भरद्वाजः । छन्दः—त्रिष्टुप् ।

हे पूषन् स्वरश्मिभिः सर्वेषां परिपोषकृत् सूर्य ! ते शुक्रम् अन्यद् (अस्ति) त्वदीयं शुक्रं=शुक्लं, रलयोरभेदात् । इह रूपमितिपदं योज्यम् । अन्यद् वर्तते । यजतम्=यजनीयम्=हवनीयम् इन्धनादिकम् । लक्षणया-तत्सदृशं कृष्णमित्यर्थः । तद्रूपं चान्यदस्ति । विषुरूपे =विषमवर्णे । प्रकाशमयत्वाद् दिनं शुक्लं तमोमयत्वाद् रजनी श्यामा । इति तयोर्विषमरूपत्वम् । ते अहनी तव कर्म इति यास्कः (निरुक्त १२।१७) । तवोदयेन दिनमस्तमयेन च रजनी भवतीति भावः । त्वं द्यौरिव=द्युलोक इव द्योतनशीलः सर्वमावृत्य वर्तसे ।

शुक्रमिति पदमिह श्वेतगुणवाचकम् । तच्च वाक्यार्थेऽन्वयसिद्धये इतरपदं रूपमाक्षिपति । रूपे शुक्लगुणस्याऽप्युपादानादिह रूढिमूलोपादानलक्षणा । यद्यप्यनुपदं वक्ष्यमाणयोः सारोपा साध्यवसाना चेति लक्षणाभेदयोः सारोपाया एव प्रथमं प्रतिपादनमुचितं तथापि श्वेतो धावतीत्यत्र लक्षणाया या विशदता—गुणे क्रियाया असंभवात्, न सा श्वेतोऽश्वो धावतीत्यत्र । एतादृशस्य प्रयोगस्य लोके प्रत्यहं पामरैरपि विधीयमानत्वान्मुख्यार्थबाधः केवलतार्किकधीगम्यः । तस्माद् व्युत्क्रम्य प्रथमं साध्यवसाना लक्षणोपात्ता । सारोपायास्तु "श्वेतोऽश्वो धावती" त्येवोदाहरणम् । गुणवाचकस्य श्वेतपदस्य गुणिवाचकेनाऽश्वपदेन अभेदाऽन्वयो न संभवति ।"द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् । समवायस्तथाऽभावः पदार्थाः सप्त[1] कीर्तिताः ।।"(न्यायमुक्ता० प्रत्यक्षखण्डे द्वितीया कारिका) इत्युक्तेस्तयोः पृथग्विषयत्वात् । तथापि श्वेतोऽश्व इत्यादौ सामानाऽधिकरण्येनाऽन्वयाऽनुपपत्तौ लक्षणया श्वेतगुणवान् अश्व इति प्रतीतिरुपजायते ।

२. अथ प्रयोजनवती उपादानलक्षणा—

**भुञ्जते यष्टयः, कुन्ताः प्रविशन्तीति वाक्ययोः ।**
**भुजि प्रविष्टिकर्तृत्वं जडानां नोपपद्यते ।।१६४।।**

---

१, काणादमते तु षडेव पदार्थाः । यु० मी०

मुख्यार्थबाधे मुख्यार्थयुक्ता यष्टयादिधारिणः।
लक्ष्यन्ते पुरुषास्तस्मादत्रोपादानलक्षणा ॥१९५॥
यष्टिकुन्तादिभिः शब्दै रूढया बोधो न तद्वताम्।
यष्टयाद्यत्यन्तबाहुल्यद्योतनं तु प्रयोजनम् ॥१९६॥

"जडेषु यष्टिकुन्तादिषु भोजनप्रवेशनादिक्रियाकर्तृत्वमनुपपद्यमानं तत्संयुक्तान् पुरुषान् लक्षयति। पुरुषैः सह तेषां संयोगः सम्बन्धः। इह पुरुषैः सह मुख्यार्थानां यष्टीनां कुन्तानां चाऽप्युपादानाद् इयमुपादान-लक्षणा, किञ्च यष्टिकुन्तपदे स्वसंयुक्तान् पुरुषान् लक्षयेताम् इति रूढिर्नास्ति, किन्तु यष्टयादिनिष्ठबाहुल्यतैक्ष्ण्यादीनां पुरुषेष्वपि द्योतनं प्रयोजनमेव निमित्तम्। अत्रैव 'एते कुन्ताः प्रविशन्ति' इति वाक्य-प्रयोगे एतत्सर्वनाम्ना विषयस्यापि निर्देशात् **सारोपा**, तदप्रयोगे ('कुन्ताः प्रविशन्ति' इत्यत्र) तु **साध्यवसाना** लक्षणा।

यथा वा—

सर्वे नन्दन्ति यशसाऽऽगतेन सभासाहेन सख्या सखायः।
किल्विषस्पृत् पितुषणिर्ह्येषामरंहितो भवति वाजिनाय ॥
ऋ० १०।७१।१०॥

देवता—ज्ञानम्। ऋषिः—बृहस्पतिराङ्गिरसः। छन्दः—त्रिष्टुप्।

सर्वे नन्दन्तीति—यशसा=यशस्विना=मूर्तिमतेव यशसेत्याशयः। सभासाहेन=सभां सोढुं क्षमेण। विदुषां महान्तमपि समवायं विलोक्य अप्रतिहतप्रतिभेन सख्या=सुहृदा। सभागतेन=सभां प्राप्तेन। सर्वे सखायः नन्दन्ति=अनेनाऽस्माकं विजयोऽवश्यं भविष्यतीति विश्वासेन प्रसीदन्ति। स च ज्ञानातिशयेन स्वसहयोगिनाम् किल्विषस्पृत्=किल्विषं पापम् अज्ञानं वा बाधते निगूहति वा। पितुषणिः=पितुरित्यन्न-नाम। पातेर्वा पिबतेर्वा प्यायतेर्वेति निरुक्ते (९।२४) यास्कः। स विजयलब्धदानदक्षिणाऽन्नाऽऽदिविभजनेन स्वसहयोगिनोऽपि परि-पुष्णाति। एषाम्=स्वपक्षस्थजनानाम्। अरंहितः=अतिमात्रं हित-साधकः वाजिनाय=सर्वज्ञत्वाय बलाय समुत्कर्षाय वा भवति। वाचा-मिनः वाजिनः इति श्रीसायणः।

इह यशःपदं यशस्विनं जनं लक्षयति। पुरुषेण सह यशसोऽप्यु-पादानाच्चात्र प्रयोजनवत्युपादानलक्षणा। यशसोऽतिशयख्यापनं च प्रयो-

जनम् । किंच धर्मिवाचकं वाजिनपदं यथा धर्मं ज्ञानं बलं वा लक्षयति तथा हितपदमपि हितसाधकम् ।

३. अथ रूढौ लक्षणलक्षणा—

रूढोऽर्थो बाधितो यत्र स्वमर्थं सर्वथा जहत् ।
स्वद्वारा गमयत्यन्यं तत्र लक्षणलक्षणा ॥१९७॥

अथवा—

बोधाय लक्षणीयस्य यदि मुख्यार्थवाचकम् ।
अर्पयेत् पदमात्मानं वाक्याऽर्थेऽन्वयसिद्धये ॥१९८॥

उपलक्षणहेतुत्वादियं लक्षणलक्षणा ।
मुख्याऽर्थाऽमिश्रमुख्याऽर्थभिन्नोक्तिरुपलक्षणम् ॥१९९॥

यथा 'कलिङ्गः साहसिकः' । इह देशविशेषवाचकस्य कलिङ्गपदस्य चेतनधर्मेण साहसिकत्वेन सम्बन्धाऽभावान्मुख्यार्थबाधे तत्पदमाधाराऽऽधेयभावसम्बन्धेन कलिङ्गदेशवासिनं जनं लक्षयति । निवासिनि विवक्षितस्य साहसिकत्वधर्मस्य देशविशेषरूपे भूभागे सर्वथाऽभावाल्लक्षणलक्षणा । इह कलिङ्गपदं स्वमुख्यमर्थं जहातीति जहत्स्वार्थाऽपराऽभिधेयम् । अन्ये तु—कलिङ्गदेशवास्तव्यः पुरुष इत्यर्थबोधाय कलिङ्गपदम् इहाऽऽत्मानं समर्पयति उपस्थापयति, तेन च वाक्ये पदार्थानामन्वयः संगच्छते । इयम् उपलक्षणहेतुका । मुख्यार्थेनाऽमिश्रितस्य मुख्यार्थभिन्नस्य लक्ष्यार्थस्य प्रतिपादनम् उपलक्षणम् । कुन्ताः प्रविशन्तीत्यत्र तु कुन्तपदं स्वमुख्यार्थयुक्तानेव पुरुषान् लक्षयतीति सोपादाना लक्षणा ।

यथा वा —

सुरुचिर्गुर्जरः पञ्चनदस्त्वध्यवसायवान् ।
हरियाणा रणे शूरः सिन्धुर्व्यापारपारगः ॥२००॥

कूटनीतिर्महाराष्ट्रं राजस्थानं पराक्रमः ।
बङ्गश्च भावुकः स्वात्मोपेक्षाप्रदेश उत्तरः ॥२०१॥

प्रदेशरूढसंज्ञाभिराभिस्तत्र निवासिनः ।
लक्ष्यन्ते पुरुषास्तस्माद् रूढिमूलाऽत्र लक्षणा ॥२०२॥

अत्र प्रदेशविशेषरूढैस्तैस्तैः शब्दैस्तन्निवासिनो जना लक्ष्यन्ते।
यथा वा—

इदं देवाः शृणुत ये यज्ञिया स्थ
भरद्वाजो मह्यमुक्थानि शंसति।
पाशे स बद्धो दुरिते नियुज्यतां
यो अस्माकं मन इदं हिनस्ति॥

इदमिन्द्र शृणुहि सोमप
यत्त्वा हृदा शोचता जोहवीमि।
वृश्चामि तं कुलिशेनेव वृक्षं
यो अस्माकं मन इदं हिनस्ति॥

अथर्व० का० २, सू० १२, मन्त्र २,३॥

देवता—देवाः इन्द्रश्च क्रमेण। ऋषिः—भरद्वाजः। छन्दः—जगती त्रिष्टुप् क्रमेण।

इदं देवा इति—ये केचन यज्ञियाः=यजनार्हाः=पूज्याः। 'यज्ञर्त्विग्भ्यां घखञौ' (पाणि० ५।१।७१) इति सूत्रेण यज्ञपदाद् अर्हार्थे घप्रत्ययः। देवाः=देवोचितगुणशालिनः सत्पुरुषाः सन्ति, ते यूयं मदीयमिदं वाक्यं शृणुत। वाजम्=अन्नं बलम् उत्साहवर्धिनीं वाचं वा भरतीति भरद्वाजः,स मह्यम् उक्थानि शंसति=नः सत्प्रयत्नान् विलोक्य प्रशंसावचनान्युच्चारयति। तद्विपरीतं यः कश्चित् शत्रुपक्षपाती अस्माकम् इदं मनः हिनस्ति=शत्रुक्षयाय जनकल्याणाय वा दृढनिश्चयमपि नो मनोबलं मिथ्यादूषणोद्घोषणेन क्षिणोति, स पाशे बद्धो दुरिते नियुज्यताम्=बन्धनागारे निक्षिप्तः सन् स्वपापफलोपभोगाय बाधितो भवतु। प्राणनाशापेक्षया मनोबलनाशोऽधिकतरः गर्हणीयोऽपराध इति भावः।

हे सोमप इन्द्र सौम्यगुणवतां जनानां पालक, केषाञ्चिद् देशद्रोहिणां दुश्चरितानि दृष्ट्वा शोचता हृदा यद् अहं जोहवीमि=निवेदयामि तत् त्वं शृणुहि=आकर्णय। त्वां सहायकमवाप्य अहं तं पापिनं कुलिशेन वृक्षमिव वृश्चामि=छिनद्मि योऽस्माकमिदं मनो हिनस्ति। मनः पदं संकल्पविकल्पसाधनीभूताऽन्तःकरणार्थे रूढम्। हिंसा च जीवितजन्तोः प्राणैर्वियोजनं तच्च मनसो न संभवति। तेन मनः पदं

मनोबलं हिनस्तीति क्रियापदं च तत्क्षयं लक्षयति। किंच दुरितपदं पापार्थे रूढम्। कश्चित् सुशासकः स्वयमेव स्वप्रजाजनं पापे न नियोजयति। तेन दुरितपदमिह दुरितफलं लक्षयति।

एवम् अनयोर्मन्त्रयोर्मनोदुरितपदाभ्यां स्वमुख्यार्थं परित्यज्य स्वसम्बन्धिनो मनोबलस्य (उत्साहस्य) पापफलस्य च लक्षणादत्र रूढिमूला लक्षणलक्षणा।

यथा वा—

अहश्च कृष्णमहरर्जुनं च
विवर्तेते रजसी वेद्याभिः।
वैश्वानरो जायमानो न राजा
ऽवातिरज्ज्योतिषाऽग्निस्तमांसि ॥ऋ० ६।९।१॥

देवता—वैश्वानरोऽग्निः। ऋषिः—बार्हस्पत्यो भरद्वाजः। छन्दः—त्रिष्टुप्।

अहश्चेत्यादि—अहः पदं दिनार्थे रूढम्। 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इत्यमरः। अर्जुनपदं धवलार्थवाचकम्। 'वलक्षो धवलोऽर्जुनः' इत्यमरः। अह्नः कृष्णत्वं बाधितं तेनाऽत्र प्रथममहः पदं समानविभक्तिकत्वाद्रात्रिमाह, द्वितीयं तु अर्जुनमिति विशेषणयोगाद् दिवसम्।

अथ मन्त्रार्थः—कृष्णमहः=रात्रिः। अर्जुनम्=शुक्लम् अहर्दिनम्। ते रजसी=स्वेन श्यामेन शुक्लेन च वर्णेन विश्वस्य रञ्जके अथवा प्राणिनां रञ्जनकारके। वेद्याभिः=सर्वजनविज्ञेयाभिः प्रवृत्तिभिः विवर्तेते=पर्यायेणागच्छतः। रात्रौ प्रकृतेः प्राणिनां च भिन्नाः प्रवृत्तयः, दिवसे च भिन्नाः। जायमानः=उदयम् अयमानः। राजेव=सूर्यइव। सूर्यो हि समस्तसौरमण्डलस्य राजेव। स च यथा प्रातः स्वज्योतिषा तमांसि अवातिरत्=तमांसि तिरयति तथा रात्र्यागमे वैश्वानरोऽग्निरपि। अथवा राजपदेनाऽत्र चन्द्रो ग्राह्यः। सोऽपि स्वचन्द्रिकया तिमिरमपहरति। 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः' इत्यमरः। दिनवाचकम् अहःपदं कथं रात्रिपरकम् इति चेत्—लक्षणया। यथा—सोऽयं देवदत्त इत्यत्र तच्छब्दस्य (स इत्यस्य) तत्कालतद्देश-

विशिष्टरूपोऽर्थः। इदं शब्दस्य (अयम् इत्यस्य) एतत्काल-एतद्देश-विशिष्ट इति।

अनयोर्मिथो विरुद्धार्थकत्वेऽन्वयाऽसंभवाद् भागत्यागलक्षणया तत्कालतद्देश-एतत्काल-एतद्देशवर्तित्वरूपविरुद्धांशपरित्यागेन अविरुद्ध उभयसामान्यः देवदत्तरूपोऽर्थो लक्ष्यते। तथाऽत्रापि द्विरुच्चारितस्य अहःपदस्य रात्रित्वावच्छिन्नः कालः दिनत्वावच्छिन्नः कालश्चेति परस्परविरुद्धांशपरित्यागेन अविरुद्ध उभयसामान्यः कालरूपोऽर्थो लक्ष्यते। परतश्च श्वेतोऽश्वो धावतीति वाक्ये इव इहापि गुणवाचिनोः कृष्णार्जुनपदयोर्गुणिनि लक्षणा कृष्णवर्णवद् अहः=रात्रिः, अर्जुन-वर्णवद् अहः=दिवम् इत्यर्थो विशेष्यविशेषणभावसम्बन्धात् प्रतीयते। अत्र दिवसवाचकस्य अहःपदस्य रात्रिसम्बन्धे स्वार्थपरित्यागाल्लक्षण-लक्षणा सा च रूढिमूला।

अध्यात्मपक्षे तु— न हन्यते भोगं विना न क्षयमेतीति अहः=कर्म। तच्च शुक्लम् अशुक्लं चेति द्विविधम्। उभे कर्मणी मानवं यावज्जीवं रञ्जयतः। वैश्वानरोऽग्निः=विश्वेषु नरेषु निलीय स्थितः। अग्निस्तु स्वज्योतिषा=दिव्यात्मप्रकाशेन सर्वं तमो नाशयति साधकं च सत-तमग्रे नयतीति तस्याग्नित्वम्।

**४. अथ प्रयोजननिमित्ता लक्षणलक्षणा—**

गङ्गायां घोष इत्यादिवाक्ये गङ्गादिकं पदम्।
प्रवाहादिकमर्थं स्वं यस्मान्मुञ्चति सर्वथा ॥२०३॥

तटे घोषाऽभिधानेन सम्यग्बोधो न जायते।
शीतत्वपावनत्वादेर्यस्य गङ्गापदेन तु ॥२०४॥

घोषनिष्ठस्य तस्यापि द्योतनं च प्रयोजनम्।
प्रयोजनवती तस्मादियं लक्षणलक्षणा ॥२०५॥

यथा—

द्यावा चिदस्मै पृथिवी नमेते
शुष्माच्चिदस्य पर्वता भयन्ते।
यः सोमपा निचितो वज्रबाहु-
र्यो वज्रहस्तः स जनास इन्द्रः ॥ऋ०२।१२।१३।

देवता—इन्द्रः । ऋषिः—गृत्समदः । छन्दः=त्रिष्टुप् ।

द्यावा चिदिति—अस्मै द्यावापृथिवी नमेते=द्यावापृथिव्यौ भक्ति-भावेन नमस्कुरुतः । अस्य शुष्मात्=बलात् । पर्वता भयन्ते=गिरयो बिभ्यति । शुष्ममिति बलनाम । शोषयतीति सतः । (निरु० २।२४) जडयोर्द्यावापृथिव्योर्नमनम्=आदरदानार्थं कमपि प्रति शिरोनमना-दिकम् अनुपपद्यमानं तत्रत्यानां चेतनप्राणिनां नमनं लक्षयति । तथैव, चेतनेष्वेव उपलभ्यमाना भयानुकूला क्रिया पर्वतगतत्वेन वर्णिता तत्र-त्यजन्तुषु तां प्रकटयति । यः सोमपाः=सौम्यगुणवतां पालयिता । निचितः=सर्वत्र व्याप्तः । वज्रबाहुः=वज्रसदृशौ सुदृढौ बाहू यस्य सः अशरीरिणः परमात्मनो बाह्वोरभावाद् इह बाहुपदं सृष्टिनिर्मा-णादिषु तस्य सामर्थ्यं लक्षयति । तदुक्तं श्वेताश्वतरोपनिषदि—'अपाणि-पादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' (अध्या० ३। श्लोक १९)। यो वज्रहस्तः=दुष्टदमनशक्तिर्हस्ते यस्य । जनासः=हे जना ! एतादृशो यः कश्चित् स एवेन्द्रः । द्यावापृथिव्योः पर्वतानां च नमन-क्रियायाः भयस्य च सम्बन्धाऽभावेऽपि सम्बन्धवर्णनादतिशयोक्तिर-लङ्कारः ।

पूर्वोक्तायाश्चतुर्विधलक्षणायाः **सारोपा साध्यवसाना** चेति भेदद्वयं निरूपयति—

> **आरोपाऽध्यवसानाभ्यां हेतुभ्यां सा पुनर्द्विधा ।**
> **तयोः पूर्वा तु सारोपा, परा साध्यवसानिका ॥२०६॥**
>
> **सारोपाऽऽरोप्यते प्रोक्ते विषये विषयी यदा ।**
> **निगीर्णे तु तदारोपात् सैव साध्यवसानिका ॥२०७॥**

पूर्वोक्ता चतुर्भेदा लक्षणा प्रथमं रूढिमूला प्रयोजनमूला चेति द्विविधा सती, उपादानलक्षणा-लक्षणलक्षणाऽऽख्याभ्यां भेदाभ्यां विभक्ता चतुर्विधतां भजते । चत्वारोऽपि च ते भेदाः पुनः सारोपेण साध्यवसानेन चेति भेदद्वयेन प्रगुणिता अष्टविधत्वं भजन्ते । प्रोक्ते=विषयिणाऽनिगीर्णे अत एव साक्षादुक्ते विषये सामानाधिकरण्येन तादा-त्म्यारोपात् सारोपालक्षणा यथा—मुखं चन्द्रः । अत्र शब्दोपात्ते मुखे चन्द्रत्वारोपः । सर्वथा भिन्नयोर्मुखचन्द्रयोस्तादात्म्यं न संभवतीति मुख्याऽर्थबाधाच्चन्द्रसदृशं मुखमिति लक्ष्यते । अत्र विषयविषयिणोर्मुख-

चन्द्रयोः सादृश्यसम्बन्धः । सादृश्यसम्बन्धवतीयं सारोपालक्षणा रूपकालङ्कारस्य बीजम् । विषयिणा निगीर्णे तु विषये साध्यवसाना-लक्षणा, सा अतिशयोक्त्यलङ्कारस्य बीजम् । 'विषयिणा विषयस्य तिरोधानम् अध्यवसानम्' इति प्रदीपकाराः । यथा 'प्रासादशिखरे-ष्वत्र चन्द्रराजी विराजते' । अत्र स्त्रीणां मुखराजीरूपं विषयं निगीर्य तस्य चन्द्रराज्या तादात्म्यं कृतम् ।

यथा वा—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥
ऋ० १।१६४।२०॥

देवता—विश्वेदेवाः । ऋषिः—दीर्घतमा औचथ्यः । छन्दः—त्रिष्टुप् ।

अत्र जीव-परमात्म-प्रकृतयो विषयाः पिप्पलभुक्-पिप्पलाऽभुक्-पक्षियुगल-वृक्षैर्विषयिभिर्निगीर्णाः । तेन साध्यवसानेयं लक्षणा । विषयविषयिणोः सादृश्यसम्बन्धाऽभावे तु सारोपा साध्यवसाना वा लक्षणा न रूपकस्य अतिशयोक्तेर्वा बीजम् । 'लक्ष्मीविलासा विदुषां कटाक्षा वेङ्कटप्रभोः' । अत्र 'हेतुहेतुमतोरैक्यं हेतुं केचित् प्रचक्षते' इत्युक्तस्वरूपो हेत्वलङ्कारः (कुवलयानन्दे कारि० १६८) । हेतुभूता अपि वेङ्कटप्रभोः कृपाकटाक्षास्तत्कार्यैविद्वद्वृन्दविलासैरेकीकृत्य वर्णिताः । तेषां कार्यकारणभावः सम्बन्धः ।

अथ सारोपालक्षणायाश्चतुर्षु भेदेषु रूढिमूला उपादानवती सारोपा लक्षणा—

श्वेतोऽश्वो धावतीत्यत्र लक्षणा रूढिमूलिका ।
सोपादाना च सारोपा, गुणेन गुणिलक्षणात् ॥२०८॥

अनिगीर्णस्वरूपोऽश्वो निजश्वेतगुणाऽन्वितः ।
समवेतस्वकश्वेतगुणाऽभेदेन लक्ष्यते ॥२०९॥

समवेतः=समवायसम्बन्धेन स्थितो यः स्वकः श्वेतगुणस्तेन सहा-ऽभेदेनाऽश्वो लक्ष्यते । श्वेतो धावतीत्यत्र अश्वरूपस्याऽर्थस्य स्ववाचक-पदेन अनुपादानात् तं श्वेतगुणविशिष्टं 'इतिरूपो' लक्ष्याऽर्थो निगि-रति । किन्तु श्वेतोऽश्वो धावतीत्यत्र मुख्यार्थस्य अश्वस्य स्ववाचकेन

अश्वपदेनैव उक्तत्वात् तं श्वेतगुणविशिष्टम् 'इतिस्वरूपो' लक्ष्यार्थो न निगिरति ।

यथा वा—

गिरयस्ते पर्वता हिमवन्तोऽरण्यं ते पृथिवि स्योनमस्तु ।
'बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम् ।
अजीतोऽहतोऽअक्षतोऽध्यष्ठां पृथिवीमहम्' ।। अथर्व० १२।१।११।।

देवता—भूमिः । ऋषिः—अथर्वा । छन्दः—त्र्यवसाना षट्पदा विराडष्टिः ।

गिरयस्ते इति—हे मातृभूमे ते हिमवन्तः पर्वताः, गिरयः=हिम-रहिताः पर्वताः सामान्या इत्यर्थः । तव अरण्यम्=वनोपवनादिकं सर्वं नः स्योनं=सुखदम् अस्तु । स्योनम् इति पदस्य लिङ्गवचनविपर्ययपूर्वकं सर्वैः सम्बन्धः । इन्द्रेण परमात्मना पृथिवीम्=अतिविस्तृताम् । बभ्रुं कृष्णां रोहिणीम्=पिङ्गलश्यामरक्तवर्णमृत्स्नामयीम् । विश्वरूपाम् =क्रमागतैः ऋतुभिः विश्वरूपाम् । अथवा विश्वस्य प्रतिमानभूताम् । ध्रुवाम्=सुस्थिरशासनाम् त्वाम् । अजीतः=केनाऽप्यपराजितः अहीन-बलो वा । अहतः=समरादिष्वपि निधनमप्राप्तः । अक्षतः=व्रणादिवि रहितः । अहम् अध्यष्ठाम्=अधितिष्ठेयम् । अत्र बभ्रुकृष्णादीनि पदानि यथाक्रमं पिङ्गलश्यामरक्तवर्णवाचकानि, तैश्च तद्वर्णविशिष्टा भूमिर्ल-क्ष्यते । अथवा—बभ्रुः भरणात्, कृष्णा कर्षणात्, रोहिणी रोहणात् । प्रजानां भरणपोषणकर्त्री, कर्षणयोग्या, उर्वरा चेत्याशयः, अस्यां व्या-ख्यायां नात्र लक्षणावकाशः । स्योनपदं सुखवाचकम् । 'स्योनमिति सुख-नाम स्यतेः, अवस्यन्त्येतत्, सेवितव्यं भवतीति वा, इति निरुक्ते (८।१०) श्रीयास्कः । षो अन्तकर्मणि इति धातोः "सिवेष्टेर्यु च" (उणा० ३।९) इत्यनेन विहितो 'न' प्रत्ययो 'यू' आदेशाभावे भवति । तत ऊठादेशे (पा० ६।४।१७) गुणे यणादेशे च कृते रूपम् । धर्म-वाचकमिदं पदं धर्मिणं लक्षयति ।

श्वेतोऽश्वो धावतीत्यस्य स्थाने श्वेतो धावतीति वाक्यप्रयोगे तु विषयस्य अश्वस्य विषयिणा निगरणादिदं साध्यवसानाया लक्षणाया उदाहरणं स्यात् ।

यथा वा—

गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि ।
ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानेमि मनसा मोदमानः ।।

येषामध्येति प्रवसन् येषु सौमनसो बहुः ।
गृहानुपह्वयामहे ते नो जानन्तु जानतः ।। यजु० ३।४१,४२

देवता –वास्तु । ऋषिः—शंयुः । छन्दः—त्रिष्टुप् विराट् ।

गृहाः=हे नो गृहजनाः । मा बिभीत मा वेपध्वम्=मा भीतिं भजत, मा कम्पं वहत । यतो वयम् ऊर्जं बिभ्रतः=प्रवासात् प्रागस्माभिः सञ्चितं पुष्कलमन्नधनादिकं धारयतो युष्मान् प्रति । एमसि =आगच्छामः । इदं प्रथमं बिभ्रत इति पदं द्वितीयाबहुवचनान्तं कर्मणि । ऊर्जं बिभ्रद् अहम् अस्मिन् प्रवासे नवमन्नधनादिकं बिभ्रत् धारयन् अतएव सुमनाः प्रसन्नचित्तः सुमेधा अस्यां यात्रायाम् अभिनवाऽनुभवैर्वर्द्धितज्ञानसंपत् मनसा मोदमानः गृहान् एमि । इदं द्वितीयं बिभ्रत् पदं प्रथमैकवचनान्तं कर्तरि । प्रवसन् येषाम् अध्येति= देशान्तरगतोऽपि जनो येषाम् अनेकशः स्मरति । येषु बहुः सौमनसः= प्रगाढं सौमनस्यं च वर्तते तान् गृहान् गृहजनान् वयम् उपह्वयामहे आमन्त्रयामहे प्रेमपूर्वकमाह्वयामः । चिरादागतानप्यस्मान् जानतः सुपरिचितान् अविस्मृतान् ते अस्माकं गृहजनाः जानन्तु=अभिनन्दन्तु ।

गृहपदं सदनाऽर्थे रूढम् । जड़े सदने चेतनधर्मयोर्भयकम्पयोर्बाधात् तद् आधाराधेयभावसम्बन्धेन पत्नीप्रभृति गृहजनं लक्षयति । 'गृहं गृहाश्च पुं भूम्नि कलत्रेऽपि च सद्मनि' इति मेदिनी । लोकेऽपि 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' । तेन पुंसि बहुवचनान्तस्य गृहपदस्य पत्न्यादिषु **रूढिमूला लक्षणा** । प्रवासप्रत्यावृत्तस्य पुंसो गृहजनैः सह सङ्गमे गृहपदवाच्यार्थस्य सदनस्यापि सङ्गमाद् **उपादानलक्षणा** । प्रवासेऽपि पुरुषो गृहजनैः सह गृहमपि स्मरति । चेतनधर्माणां भयकम्पज्ञानादीनां जड़गृहेऽभावात् तावत्यंशे **लक्षणलक्षणा** । प्रथममन्त्रस्य पूर्वार्धे प्रवासिसमुदायस्य सहचिन्तनवर्णनाद् बहुवचनप्रयोगः । उत्तरार्धे प्रतिव्यक्ति पृथक् चिन्तनस्य निर्देशादेकवचनम् । मन्त्रयोः 'येषां' 'ते' 'वः' इत्यादि सर्वनामभिः गृहजनरूपस्य विषयस्याऽपि निर्देशाद् अत्र **सारोपा लक्षणा** ।

अथ द्वितीया प्रयोजननिमित्ता उपादानवती सारोपा लक्षणा—

अमी कुन्ता विशन्तीति लक्षणा सप्रयोजना ।
सोपादाना च सारोपा विषयेऽमीपदोदिते ॥२१०॥

प्रवेशकर्तृता यस्माज्जडकुन्तेषु बाधिता ।
लक्ष्यन्ते लक्षणाद्वारा कुन्तवन्तोऽत्र मानवाः ॥२११॥

कुन्तानामप्युपादानात् सोपादानेयमीर्यते ।
पुंसु तैक्ष्ण्यातिशय्यस्य बोधनं च प्रयोजनम् ॥२१२॥

अत्र चेतनधर्मस्य प्रवेशनक्रियाकर्तृत्वस्य अचेतनेषु कुन्तेषु बाधात् प्रवेशकाले पुरुषैः सह कुन्तानामप्युपादानात्, पुरुषेषु तीक्ष्णताद्यतिशय-बोधनप्रयोजनात्, 'अमी' इति सर्वनामपदेन निर्दिष्टस्य विषयस्य विषयिणाऽनिगीर्णत्वात् इयं प्रयोजनवती सोपादाना सारोपा लक्षणा ।

यथा वा—

तेजोऽसि तेजो मयि धेहि । वीर्यमसि वीर्यं मयि धेहि ॥
बलमसि बलं मयि धेहि । ओजोऽस्योजो मयि धेहि ॥
मन्युरसि मन्युं मयि धेहि । सहोऽसि सहो मयि धेहि ॥
यजु० १९।९॥

मन्त्रेऽस्मिन् समुपात्तानां तेजःप्रभृतिधर्माणां परमाधारतया परम-कारणतया वा भगवान् तेजःप्रभृतिभिः सहाऽभेदेन वर्णितः । तेजः-प्रभृतिपदानां तेजस्व्यादिवृत्तिधर्मविशेषमात्रवाचकत्वात् तेषु भक्तस्या-ऽभ्यर्थनापूर्तिकर्तृत्वं बाधितं सत् धर्मधर्मिभावसम्बन्धेन धर्मिणं भगवन्तं लक्षयति । धर्मिणि धर्मस्याप्युपादानात्, इतरदातृवैलक्षण्येन भगवत-स्तेजःप्रभृतिप्रदानसामर्थ्यातिशयव्यञ्जनप्रयोजनात्, पूर्वमन्त्रयोर्मन्त्र-देवतारूपेण वर्णितस्य सोमस्य अध्याहारेण विषयस्याऽनिगरणाच्चेयं प्रयोजनवती सोपादाना सारोपा लक्षणा ।

तेजःप्रभृतिलक्षणं तु—

तपःप्रभृतिजं तेजो वीर्यं कर्मसमर्थता ।
बलं शारीरिकी शक्तिरोजस्तु प्रभविष्णुता ॥
सुविचार्य कृतः क्रोधः स्थाने मन्युश्च मन्यते ।
प्रतापः कोशदण्डोत्थः प्रतिरोधक्षमं सहः ॥

एवमेषां भिन्नार्थकत्वान्न पुनरुक्तिप्रसक्तिः।

कारिकासु अमी कुन्ता विशन्तीति वाक्ये (कारिका २१०) विषय-निर्देशकस्य 'अमी' इति पदस्याऽप्रयोगे कुन्ताः प्रविशन्तीत्युक्ते इदमेव साध्यवसानाया उदाहरणं भवति। ननु श्रीमम्मटाचार्यः 'गौरयम्' इत्यत्र विषयस्य वाहीकस्य सामान्यवाचिना अयम् इति सर्वनाम्ना निर्देशेऽपि विशेषरूपेणाऽनुपस्थितेः साध्यवसानां लक्षणामङ्गीचकार। तत्कथं भवान् अमी कुन्ता विशन्तीति वाक्यं सारोपाया लक्षणाया उदाहरणत्वेनोपन्यस्यति ? इति चेत्, पुरोवर्तिनः पुरुषानभिलक्ष्य उक्तैः सर्वनामपदैरपि विशेषा उच्यन्त इत्याशयं मनसि निधाय दर्पण-कारः 'एते कुन्ता विशन्तीति' वाक्यं सारोपाया लक्षणाया उदाहरणपदे न्यवेशयत्। किञ्च, काव्यप्रकाशटीकाकृत् प्रदीपकारोऽपि दशमो-ल्लासाऽवसाने सङ्करप्रकरणे—'नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसी-दति०' इत्यादि पद्यमुदाहृत्य—'अथवा एतदिति (सर्वनाम्ना) बिम्ब-परामर्शकतया वदनस्येन्दुबिम्बेनाध्यवसानादतिशयोक्तिः, अथवा एत-दिति (सर्वनाम्ना) वक्त्रं निर्दिश्य इन्दुबिम्बरूपणवशाद्रूपकम्०' इत्यादि प्रतिपादयन् प्रकाशकारमतानुसारं सन्देहसङ्करं न्यरूपयत्। तेन अमी कुन्ताः प्रविशन्तीत्याद्युदाहरणेष्वप्येवमेव समाधेयं सुधीभिः॥

अथ तृतीया रूढिमूला लक्षणलक्षणा सारोपा—

**कलिङ्गो युध्यते वीर इति वाक्ये किलोदिते।**
**रूढिमूला च सारोपा भवेल्लक्षणलक्षणा॥२१३॥**

**कलिङ्गशब्दो भूभागविशेषस्यैव वाचकः।**
**भूमिभागे च बाध्यन्ते धर्माश्चेतनवर्तिनः॥२१४॥**

**ते लक्षयन्ति तद्युक्तान् जनांस्तद्देशवासिनः।**
**उक्तत्वाद् विषयस्याऽपि सारोपा चेयमिष्यते॥२१५॥**

**विषयिणा निगीर्णे तु विषये च सति क्वचित्।**
**सैव साध्यवसाना स्यात् 'कलिङ्गो युध्यते' यथा॥२१६॥**

'कलिङ्गो वीरो युध्यते' इति वाक्ये कलिङ्गपदं यद्यपि भूभाग-विशेषार्थे रूढं तथापि चेतनधर्मभूता योधनादिक्रिया अचेतने भूभागे-ऽनुपपन्ना। तेन कलिङ्गपदम् आधाराधेयभावसम्बन्धेन स्वनिवासिनो

जनान् लक्षयति । इह वीरपदेन विषयस्याऽपि उक्तत्वात् सारोपा लक्षणा । अथ विषये विषयिणा निगीर्णे सति 'कलिङ्गो युध्यते' इति वाक्यप्रयोगे तु साध्यवसाना लक्षणा भवति ।

यथा वा—

सत्यं बृहद् ऋतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति ।
सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु ॥
अथर्व० १२।१।१॥

देवता—भूमिः । ऋषिः—अथर्वा । छन्दः—त्रिष्टुप् ।

सत्यं बृहदिति—सत्यम्=मनसा वाचा कर्मणा सत्यव्यवहारः । बृहत्=वृद्धिः सर्वाङ्गीणो विकासः हृदयस्योदारता वा । ऋतम्=यथार्थज्ञानम् । उग्रम्=क्षात्रतेजः । दीक्षा=व्रतग्रहणम् । तपः=द्वन्द्व-सहिष्णुता । ब्रह्म=ब्राह्मं तेजः ज्ञानम् आस्तिक्यं वा । यज्ञः=स्वार्थ-त्यागपूर्वकं परस्परसहयोगः समर्पणभावना वा । एते गुणाः पृथिवीं=राष्ट्रं धारयन्ति । गुणा गुणिनं विना न तिष्ठन्तीति तैस्तद्वन्तो नाग-रिका लक्ष्यन्ते । प्रथमेन पृथिवीपदेन च राष्ट्रं लक्ष्यते । जडा भूमिः प्रकृतेः शक्तिभिर्धृता न जनानां गुणैः । नो भूतस्य भव्यस्य पत्नी=अस्माकं पूर्वपुरुषैः कृतानां महतामवदानानाम् अस्माभिः अस्माकं संततिभिश्च करिष्यमाणानां कार्याणां पालयित्री । पृथिवी=नो मातृ-भूमिः । अस्मभ्यम् उरुं=विस्तृतं लोकं विस्तारस्य विकासस्य विशालं क्षेत्रं नः प्रयच्छतु । पत्नीपदं लोके विधिवत् परिणीतभार्यार्थे रूढम्, तदेव मातृभूमिसम्बन्धे बाधितार्थं सत् पालयित्रीरूपमर्थं लक्षयति । भार्यारूपस्यार्थस्य सर्वथा परित्यागात् पृथिवीति विषयस्य अनिगरणात् इह रूढिमूला लक्षणलक्षणा सारोपा । न च भूमिर्भूपतेः पत्नीत्वेन प्रसिद्धेति न मुख्यार्थबाध इति वक्तव्यम्, तादृशव्यवहारस्य औप-चारिकत्वात् । किंच, पृथिवीह भूतस्य भवस्य च पत्नीत्वेनोक्ता, न तु राज्ञः ।

यथा वा—

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनाऽवगत्य ।
इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥
ऋ० ६।७५।५॥ (यजु० २७।४२)

देवता—इषुधिः । ऋषिः—पायुर्भारद्वाजः । छन्दः—त्रिष्टुप् ।

अत्र इषुधेः स्तुतिः । "इषवो धीयन्तेऽस्मिन्निति । पृष्ठप्रदेशे बद्धस्नूणो बह्वीनामिषूणां पिता=पालकः सुरक्षितरक्षणात् । वहुबाणसमूहश्चास्य पुत्रः । पुरून् वहून् निजपक्ष्यान् त्रायते" इति महीधरः । अत्र जनकार्थकं पितुपदमपि लक्षणया पालकरूपमर्थं प्रकाशयति, एवं तनयार्थकं पुत्रपदमपि । इषुपदं वेदे प्रायः स्त्रीलिङ्गे प्रयुक्तम् । चिश्चा =शरे तूणीरादाकृष्यमाणे यः शब्दो भवति तदनुकरणपरकमिदं पदम् । समनं संग्रामनाम (निघ० २।१७)। सङ्काः=संकटाः सघनाः । पृतनाः=सेनाः । अत्र अनुक्तेऽपि शरे पुत्रत्वारोपात् **साध्यवसाना लक्षणा** । इषुधौ पितृत्वस्य शरेषु पुत्रत्वस्यारोपात् **रूपकमलङ्कारः** । प्रसूतः=प्रेरितो जनितो वा । लोके पिता स्वगर्भात् सुतं न जनयति अत्र पिता इषुधिरेव स्वगर्भात् पुत्रान् प्रसूतवानिति अद्भुतम् ।

अथ चतुर्थी **प्रयोजननिमित्ता लक्षणलक्षणा सारोपा**—

**अत्यन्ताऽऽयुष्करत्वेन यद्वायुर्घृतमुच्यते ।**
**कार्यकारणसम्बन्धाल्लक्षणा सप्रयोजना ॥२१७॥**

**घृतशब्दाभिधानेन विषयस्याऽपि कीर्तनात् ।**
**विषय्यभेदतादात्म्यात् सारोपा सापि पूर्ववत् ॥२१८॥**

**घृतपानप्रसङ्गे च नाऽऽयुः केनापि पीयते ।**
**सर्वथा तत्परित्यागात् तत्र लक्षणलक्षणा ॥२१९॥**

आयुर्घृतमिति वचनप्रयोगे घृतस्य इतरभेषजभोजनादिवैलक्षण्येन आयुर्वर्धकत्वप्रख्यापनं प्रयोजनम् । आयुर्घृतयोः कार्यकारणभावः सम्बन्धः । घृतभोजने आयुःस्वरूपस्य अर्थस्य सर्वथा परित्यागाद् विषयस्य घृतस्य धिषयिणाऽऽयुषा अनिगीर्णतया तत्र **प्रयोजननिमित्ता सारोपा लक्षणलक्षणा** ज्ञेया ।

घृलपानप्रवृत्तं कञ्चिदभिलक्ष्य अयम् आयुः पिवतीति वचने विषयस्य घृतस्य विषयिणा निगीर्णत्वात् सा **साध्यवसाना लक्षणा** भवति । तदुच्यते—

**घृतं पिबन्तमुद्दिश्य पिबत्यायुरितीरिते ।**
**विषयस्य निगीर्णत्वात् सा तु साध्यवसानिका ॥२२०॥**

तैलादिविकारे यन्त्रनिर्मिते वनस्पतिघृतादौ घृतपदप्रयोगस्तु स्निग्धत्वादिसाधर्म्याद् गौण्या लक्षणया भवतीति तत्प्रकरणे वक्ष्यते ।

यथा वा—

निषसाद धृतव्रतो वरुणः पस्त्यास्वा ।
साम्राज्याय सुक्रतुः ॥ ऋ० १।२५।१०॥

शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्च श्मश्रूणि ।
राजा मे प्राणो अमृतं सम्राट् चक्षुर्विराट् श्रोत्रम् ॥

जिह्वा मे भद्रं वाङ् महो मनो मन्युः स्वराड् भामः ।
मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः ॥
बाहू मे बलमिन्द्रियं हस्तौ मे कर्म वीर्यम् ।
आत्मा क्षत्रमुरो मम ॥ यजु० २०।५,६,७॥

निषसादेत्यादि—धृतं प्रजापालनरूपं व्रतं येनेति बहुव्रीहिसमासः। सुक्रतुः=शोभनकर्मा शोभनसङ्कल्पो वा । वरुणः=प्रजाभिः स्वेच्छया कृतवरणोऽयम् । साम्राज्याय=साम्राज्यस्य रक्षार्थं तद्विस्ताराय च । पस्त्यासु=प्रजासु । आनिषसाद=आसन्दीमधिष्ठितवान् ।

एवं राज्याभिषेकसमारोहे राजपुरोहितेन अन्यै राजकृद्भिश्च कृतायां घोषणायां स राजा स्वात्मानं राष्ट्राय समर्पयन् स्वदेहाङ्गराष्ट्राङ्गयोरभेदाऽध्यासं करोति—इतः परं मदीयं प्रत्यङ्गं शरीरं जीवनं च राष्ट्रार्थं राष्ट्रस्यैव चेति । शिरो मे श्रीः=मम शिरः मम चिन्तनस्य प्रधानविषयः राष्ट्रस्य श्रीः राजकोशः । तदीयं यश एव मम मुखम् । राष्ट्रस्य यशोऽभिवृद्धिरेव मम साफल्यम् असाफल्यं वा वक्ष्यति तेन तदेव मे मुखम् । त्विषिः=दीप्तिः, कोशदण्डजं तेज एव मम केशाः श्मश्रूणि च । [कदाचित् मन्त्रस्यास्य आशयं जानतैव दशमगुरुणा श्रीगोविन्दसिंहेन केशश्मश्रुरक्षणं स्वशिष्याणां कृते आवश्यककर्त्तव्यत्वेन निर्धारितं स्यात् ।] राजा मे प्राणः राजत्वं सुशासनमेव मम प्राणः मम जीवनस्य परमं लक्ष्यम् । तदेव च देशेतिहासे ममाऽमरत्वनिबन्धनम् अतएव च अमृतम् । सम्राट् चक्षुः=सम्यग् राजते स्वकर्तव्यपालनेनेति सम्राट् मन्त्रिपरिषत् सैव मम चक्षुः । तदुक्तं कौटिलीयार्थशास्त्रे (प्रथमाधिकरणस्य १५ शाध्याये)—"ऋषीणां सहस्रम् इन्द्रस्य मन्त्रिपरिषत् । तच्चक्षुः । तस्माद् द्व्यक्षमपि तं सहस्राक्षमाहुः" । माघोऽपि "बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः । चारेक्षणो दूत-

मुख्यः पुरुषः कोऽपि पार्थिवः" (शिशु० २।८४)। कुशलः सक्रियश्च चरविभाग एव राज्ञः चक्षुः[1]। 'चारैः पश्यन्ति राजानः' इति[2]। विराट् श्रोत्रम्=विविधं राजते इति विराट्—राष्ट्रस्य गुप्ताऽगुप्तसमाचार-सञ्चारव्यवस्था। तथा हि राजा राजधान्यां स्थितोऽपि कुत्र किं भवतीति सर्वं शृणोति जानाति च[3]। जिह्वा मे भद्रम्=जिह्वा भाषण-हेतुः भाषणसाधनं वा। राष्ट्रकल्याणकामना एव मम भाषणहेतुः। वाङ् महः। "मह उत्सवतेजसोः" इति मेदिनी। मदीया वाणी जगति उत्सवस्य आनन्दस्य वा हेतुर्न तु विवादानां युद्धानां च। अथवा मम ओजस्विनी वाग् जनमनस्सु नवजीवनं संचारयति। मनो मे मन्युः तैस्तैर्हेतुभिः समये समये मम मन्युः=सुविचार्य कृतः क्रोधो मनन-शीलान्मनसो जातः, न तु आवेशपूर्णाद् हृदयात्। कदाचिद् उद्भूतो भामः=उग्रक्रोधः स्वराट्=स्वयं राजते इति तथाविधः स्वप्रशमाय नाऽन्यसाहाय्यमपेक्षते। तदुक्तं भारविणा—"अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः" (किरात० १।३३)। मोदः= स्वाभाविकश्चित्तप्रसादः। प्रमोदः=उत्सवविजयादिभिः जातो हर्षः। इमौ मोदप्रमोदौ देहे अङ्गुलय इवोपाङ्गभूतौ। सहः=प्रतिरोध-क्षमता मम मित्रमिव। मे बाहू बलम्=मूर्तौ बलस्वरूपौ अतिबल-शालिनौ किञ्च, इन्द्रियम्=आत्मनो लिङ्गभूतौ। सबलो मदीय

---

१. न तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति।

ऋ० १०।१०।८।

२. द्वौ सन्निषद्य यन्मन्त्रयेते राजा तद्वेद वरुणस्तृतीयः॥

अथर्व० ४।१६।२॥

३. भारते प्राचीनकाले गुप्तागुप्तदूरसमाचारसंचारव्यवस्था सुव्यवस्थिता-ऽऽसीत्। अत एव शुक्रनीतौ राज्यव्यवस्थाप्रकरणे दूरतमप्रदेशानां वार्त्ताविज्ञा-नायोक्तम्—'अयुतक्रोशजां वार्त्तां हरेदेकदिनेन वै'(१।३६७)। अयुतक्रोशजाः= दशसहस्रक्रोशजा=२० सहस्रमीलजा=३२०० किलोमीटरजा वार्ता यथा केन्द्रं प्रति (=राजानं प्रति) एकेनैवाह्ना विदिता भवेत् तादृशः प्रयत्नो राज्ञा विधातव्य इति नीतिकाराणामादेशः। यदि हि नाम पुरा नैतादृशी काचित् दूरसंचारव्यवस्थाऽभविष्यत् तर्हि कथं नीतिकारः शशशृङ्गायमाणां तादृशीं व्यवस्थां विधातुमुपादेक्ष्यत्। यु० मी०

आत्मा न तु हीनभावनाभिभूत इति प्रकटयतः। हस्तौ मे कर्म वीर्यं च=कर्मसमर्थौ मम हस्तौ वीर्यवन्तौ च। देशे विद्यमानं क्षत्रम्=क्षत्र-वलं मम निज आत्मैव नितरामात्मीयो विश्वासयोग्य इत्यर्थः। मम उर-इव=युद्धेषु यथाऽहं सदा सम्मुखे स्थितस्तथा मम सैनिका अपीति तात्पर्यम्।

शिरो मे श्रीरित्यत्र समानविभक्तिकतया प्रतिपाद्यमानमत्यन्त-भिन्नयोः शिरःश्रियोरभेदतादात्म्यमनुपपन्नं सच्छ्रियो नृपाणां प्रधान-चिन्तनविषयतां लक्षयति। समस्तचिन्तनव्यापारस्य मस्तिष्के जाय-मानत्वात् तयोः परम्परया आधाराधेयभावः **सम्बन्धः**, चिन्तनातिशय-द्योतनं **प्रयोजनम्**। शिरःपदमुख्यार्थस्य उत्तमाङ्गरूपस्येह सर्वथा परि-त्यागाल्लक्षणलक्षणा। लक्ष्यलक्षकयोः श्रीशिरसोरुभयोः कण्ठोक्तत्वाच्च **सारोपा**ऽपि। यदि तु—यथा मदीयवपूंषि शिर उत्तमाङ्गं प्रधानं च तथा राष्ट्रशरीरे कोश इति तयोः सादृश्यसम्बन्धो विवक्षितस्तर्हि **गौणीयं लक्षणा** भवितुमर्हति। राष्ट्राङ्गानि तु "स्वाम्यमात्यसुहृत्कोश-राष्ट्रदुर्गवलानि च" इत्यमरः। एवं यशो-मुख-त्विषि-केशादिकेषु आत्मा क्षत्रमुरोममान्तेषु सर्वेष्वपि विभिन्नलक्षणास्वरूपविवेचनं सुधीभिः स्वयं कर्तुं सुशकमिति विस्तरभिया तन्नेह प्रपञ्च्यते।

इह पस्त्या-साम्राज्य-सुक्रतु-राज-सम्राट् चक्षुःश्रोत्रक्षत्रबाहुद्वयादि-पदसान्निध्यात् प्रथममेषां मन्त्राणां मानवनृपपरकोऽर्थोऽभिधयोपस्था-प्यते। ततः "सर्वं तद्राजा वरुणो विचष्टे यदन्तरा रोदसी यत्परस्तात्। संख्याता अस्य निमिषो जनानाम्०"(अथर्व० ४।१६।५), 'यः समाम्यो वरुणो यो व्याम्यो यः सन्देश्यो वरुणो यो विदेश्यः। यो दैवो वरुणो यश्च मानुषः'। (अथर्व० ४।१६।८) इत्यादिस्वरूपो भगवतो वरुण-देवस्य सर्वव्यापकत्वसर्वज्ञत्वादिप्रख्यापको द्वितीयोऽर्थोऽपि वेदस्वाध्याय-शीलानां विदुषां मनीषामभिधामूलव्यञ्जनावशात् स्पृशति। तेन च नृपतिवरुणदेवयोरुपमानोपमेयभावो व्यज्यते। राज्ञापि वरुणदेवेनेव जागरूकेण पक्षपातशून्येन दुष्टानां दमयित्रा च भाव्यमिति **व्यङ्-ग्योऽर्थः**।

विषयं निगीर्य तस्य विषयिणाऽभेदप्रतिपत्तौ तु इयमेव साध्य-वसाना लक्षणा भवतीत्युक्तं प्राक्। यथा—**'यस्य छायाऽमृतं यस्य**

मृत्युः कस्मै० (यजु० २५।१३)। यस्य छाया=आश्रयो ज्ञानं वा अमृतम् अमृतत्वस्य हेतुः। यस्य अनाश्रयोऽज्ञानं वा मृत्युः। अत्र प्रथमरूपके विषयश्छाया अनिगीर्णः, उत्तरत्र मृत्योः विषयोऽनाश्रयोऽज्ञानं वा नोपात्तस्तेन विषयस्य निगरणात् साध्यवसाना लक्षणा।

अथ गौणी लक्षणा—

अष्टाऽपि लक्षणा रूढिप्रयोजननिमित्तकाः।
शुद्धागौणीतिभेदाभ्यां यान्ति षोडशभेदताम् ॥२२१॥
सादृश्येतरसम्बन्धे ताः शुद्धाः सकला अपि।
गौण्यस्ता एव चोच्यन्ते सादृश्यगुणयोगतः ॥२२२॥
पूर्वोक्तान्येव शुद्धायाः सन्त्युदाहरणानि तु।
निरूप्यन्तेऽधुना भेदा गौण्या अपि यथाक्रमम् ॥२२३॥

सादृश्येतरसम्बन्धाश्च सहचरण-स्थान-तादर्थ्यसामीप्य-योग-साधनाऽवयवावयविभावादयो न्यायदर्शनोक्ताः (२।२।६१)। एषां केचन—

१. इन्द्रो यातूनामभवत् पराशरो हविर्मथीनामभ्या विवासताम्।
अभीदु शक्रः परशुर्यथा वनम्० ॥ ऋ० ७।१०४।२१॥

अत्र परशुपदेन परशुना संयोगवान् पुरुषो लक्ष्यते॥

२—......सर्वा आशा मम मित्रं भवन्तु॥ अथर्व० १९।१५।६॥

सर्वदिङ्निवासिनो जना मम सुहृदो भवन्तु। अत्र आशापदेन तत्रस्था जना लक्ष्यन्ते। आशाभिस्तेषां स्थानकृतः सम्बन्धः। आशा दिशः। 'दिशस्तु हरितः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः।

३—न वा उ देवाः क्षुधमिद् वधं ददुः०। ऋ० १०।११७।१।

अत्र वधेन क्षुधः साध्यसाधनभावः सम्बन्धः।

४—वृक्षे वृक्षे नियता मीमयद् गौः०। ऋ० १०।२७।२०।

वृक्षे वृक्षे धनुशि धनुषि, गौर्ज्या० इति निरुक्ते (२।६) श्रीयास्कः। अत्र धनुषो वृक्षेण, ज्यायाश्च गवा सह अवयवावयविभावः सम्बन्धः। तथा वनस्पते वीड्वङ्गो हि भूयाः अस्मत्सखा प्रतरणः सुवीरः।

गोभिः सन्नद्धोऽसि वीडयस्व०। यजु० २९।५२॥ अत्राऽपि रथ-वनस्पत्योः स्नायुगवोश्च पूर्ववद् अवयवावयविभावः सम्बन्धः।

५—बभ्रुं कृष्णां रोहिणीं विश्वरूपाम्०। अथर्व० १२।१।११॥

अत्र बभ्रुकृष्णादिरागयोगाद् भूमिर्बभ्रुः कृष्णा रोहिणी चोक्ता[1]।

६—सर्वे नन्दन्ति यशसा गतेन०। ऋ० १०।७१।१०॥

अत्र यशो यशस्विनोर्धर्मधर्मिभावः सम्बन्धः[2]।

७—अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।

विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम्॥

ऋ० १।८९।१०॥

'इत्यदितेर्विभूतिमाचष्टे। एतान्यदीनानीति वा। अदितिरदीना देवमाता' इति निरुक्ते (४।२२,२३) श्रीयास्कः। अदितिरखण्डनीया नित्या मूलप्रकृतिः, सर्वस्रष्टा परमात्मा वा अदितिः। अत्र अदित्य-भिन्नतया वर्णितानां पदार्थानां मूलप्रकृत्या परमात्मना वा सह कार्य-कारणभावः सम्बन्धः।

एतानि कानिचिदुदाहरणानि दिग्दर्शनायोपस्थापितानि। न्याय-सूत्रोक्तवृत्तमानधारणसम्बन्धेषु सत्सु तु गौणी लक्षणैव। वृत्तादिना समानवृत्तस्यैव अभिप्रेतत्वात्। पत्रस्थवृत्ताद् अनुशासनादितो राजनि यमव्यवहारः, यमसदृश इत्याशयात्। अन्यसम्बन्धानामप्युदाहरणानि मन्त्रेषु तत्र तत्राऽन्वेष्टव्यानि।

शुद्धलक्षणाया अष्टौ भेदा उक्ता उदाहृताश्च। गौण्यास्तु सम्प्रत्यु-च्यन्ते—

तत्र प्रथमा रूढिनिमित्ता उपादानलक्षणा सारोपा गौणी –

तैलान्येतानि हेमन्ते सुखानीत्युदिते यथा।
तैलं पदं तिलोद्भूतस्नेहमात्रस्य वाचकम् ॥२२४॥
अमुञ्चद् रूढमर्थं स्वं सार्षपादौ प्रवर्तते।
उपादानेन मुख्यस्याऽनिगीर्य विषयं तथा ॥२२५॥
विषय्यभेदतादात्म्यात् साधर्म्याद् रूढितोऽपि च।
सोपादाना च सारोपा गौणीयं रूढलक्षणा ॥२२६॥

---

१. द्र० पूर्वत्र पृष्ठ १२५। २. द्र० पूर्वत्र पृष्ठ ११८।

'एतानि तैलानि हेमन्ते सुखानि' इत्यत्र तैलपदं मुख्यया वृत्त्या तिलभवस्नेहरूपमर्थम् अभिदधदपि व्यवहारवशात् सर्षपनारिकेलादिजातम्, क्वचित् खनिजं (मिट्टी का तेल इति हिन्दीभाषायाम्) वा स्नेहं लक्षयति। तादृशप्रयोगस्थलेषु तिलोद्भवस्नेहस्याऽपि लक्षणीयेषु स्नेहान्तरेषु अन्तर्भूतत्वात्, एतानीति सर्वनामपदप्रयोगे विषयस्यानिगरणात्, स्निग्धत्वसाधर्म्यसम्बन्धाच्चेयं रूढिनिमित्ता सोपादाना सारोपा गौणी लक्षणा।

तथा घृतपदं मुख्यवृत्त्याऽऽज्यार्थस्य वाचकम्।
पूर्वोक्तैर्हेतुभिस्तैर्डालडादौ प्रवर्तते ॥२२७॥

पूर्वोक्तैः साधर्म्यादिभिरित्यर्थः।

यथा वा—

—...मा त्वा परिपणिनो विदन्, मा त्वा परि-
पन्थिनो विदन्, मा त्वा वृका अघायवो विदन्०।

यजु० ४।३४।

परिपणिनस्तस्करा ये सुप्तानां प्रमाद्यतां धनादिकं चोरयन्ति, परिपन्थिनः पाटच्चरा ये वनमार्गेऽभिपत्य बलेन छित्त्वा भित्त्वा परस्वमपहरन्ति। वृकपदेन त्वत्र सर्वेऽपि हिंस्रजन्तवो लक्ष्यन्ते। तेषु च वृकाणामप्युपादानादिह रूढावुपादानलक्षणा। 'एतानि तैलानि'। इत्यत्र एतानीति सर्वनामपदोपस्थापितस्य विषयस्य निगरणे 'तैलानि हेमन्ते सुखानि' इत्युक्ते त्वियमेव साध्यवसाना स्यात्।

यथा—

परेणैतु पथा वृकः परमेणैतु तस्करः।
परेण दत्वती रज्जुः परेणाऽघायुरर्षतु ॥ अथर्व० ४।३।२॥

मन्त्रेऽस्मिन् तृतीयचरणे 'दत्वती रज्जुः सर्पः'। दत्वती=दन्तवतीत्यर्थः। अत्र विषयं सर्पं निगीर्य तस्य विषयिणा रज्ज्वाऽभेदतादात्म्यात् साध्यवसाना लक्षणलक्षणा। रज्जुरूपस्य मुख्यार्थस्य सर्वथा परित्यागात्। अथवा सोपादानायाः साध्यवसानाया उदाहरणान्तरं मृग्यम्। किञ्च—'अस्मान् न पीडयतु' इति वक्तव्ये 'परेण मार्गेण

गच्छत्विति प्रकारान्तरेण कथनाद् पर्यायोक्ताऽलङ्कारः। 'पर्यायोक्तं यदा भङ्गया गम्यमेवाभिधीयते' इति सा० द० परि० १० का० ६०।

अथ द्वितीया प्रयोजननिमित्ता उपादानलक्षणा सारोपा गौणी—

उद्दिश्य राजपुत्रांस्तत्तुल्यांश्चाऽन्यान् प्रदीर्यते।
'राजपुत्रा व्रजन्तीमे' तर्हि युपादानलक्षणा ॥२२८॥
राजपुत्रपदेनाऽत्राऽपरेषामपि बोधनात्।
सोपादाना च सारोपा गौणीयं सप्रयोजना ॥२२९॥

इह राजपुत्रैः सह गच्छतां तत्तुल्यानामपि समृद्ध्युत्कर्षबोधनं प्रयोजनम्। क्वचिद् 'इमे' इति सर्वनामपदनिर्दिष्टस्य विषयस्याऽनुक्तावियमेव साध्यवसाना स्यात्।

यथा वा—

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥
ऋ० १०।१२१।३॥

देवता—कः प्रजापतिः। ऋषिः—हिरण्यगर्भः प्राजापत्यः। छन्दः—त्रिष्टुप्।

यः प्रजापतिः; महित्वा=स्वमहिमातिशयेन। प्राणतः=निःश्वसतः=प्राणधारणं कुर्वतः। निमिषतः=नेत्रयोर्निमीलनमुन्मीलनं च विदधतः। चेतनस्येत्याशयः। अथवा प्राक् प्राणत इति कथिते पुनरुक्तिपरिहरणाय निमिषत इति पदस्य शश्वन्निमीलतः जडस्येत्यर्थः स्वीकार्यः। तेन चेतनाऽचेतनात्मकस्य सकलसंसारस्येति भावः। एक इद्राजा बभूव=एक एव स्वामी आसीत् अस्ति भविष्यति च। योऽस्य द्विपदः=चरणद्वयवतो मनुष्यपक्ष्यादेः। चतुष्पदः=चरणचतुष्टयवतो गवाऽश्वादेः=प्राणिजातस्य च ईशे-ईष्टे प्रभवति। तथाविधाय कस्मै=सुखस्वरूपाय प्रजापतये हविषा=स्वात्मसमर्पणस्वरूपेण हविषा, विधेम=परिचरेम।

अत्र हि द्विपाच्चतुष्पात्पदाभ्याम् अनुक्ताः पादरहिताः सर्पादयः षट्पदा भ्रमरप्रभृतयः ततोऽपि बहुतरपदाः शतपदीप्रभृतयः विविधकीटा अपि लक्ष्यन्ते प्राणित्वसाधर्म्यात्। भगवतः प्रभुत्वाऽतिशयद्योतनं

च प्रयोजनम् । अत्रोपान्ते करूपप्रजापतौ राजत्वारोपात् प्रजापते राज्ञश्च निग्रहानुग्रहक्षमत्वं साधर्म्यम् । "को ब्रह्मणि समीरात्मयम-दक्षेषु भास्करे । कामग्रन्थौ चक्रिणि च पतत्रिणि च पार्थिवे । मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षजलेषु कम्" ।। इति मेदिनी । ब्रह्मवाचकस्य क-पदस्य सर्वनामत्वं छान्दसम् ।

यथा वा—

सर्वं तद्राजा वरुणो विचष्टे,
यदन्तरा रोदसी यत्परस्तात् ।
संख्याता अस्य निमिषो जनानाम्
अक्षानिव श्वघ्नी निमिनोति तानि ।।

अथर्व० ४।१६।५।।

देवता—वरुणः । ऋषिः—ब्रह्मा । छन्दः—भुरिक् त्रिष्टुप् ।

सर्वं तदिति—यदन्तरा रोदसी=यत् किमपि द्यावापृथिव्योरन्तराले । ततः परस्तात् वा किं चिदस्ति । राजा वरुणस्तत्सर्वं विचष्टे=पश्यति । संख्याता अस्य निमिषो जनानाम्=मानवानां पक्ष्मपाता अप्यस्य गणिताः । यथा श्वघ्नी=कितवः स्वस्य परस्य च अक्षान् सम्यग् जानाति तथा वरुणोऽपि जनानां सर्वं कृतमकृतं वा पुण्यं पापं वा कृत्स्नं वेत्ति । अत्रापि वरुणदेवे राजत्वारोपात् सारोपा लक्षणा । मन्त्रे जनानाम् इति पदेन इतरे प्राणिनोऽपि लक्ष्यन्ते तेषु जनानामपि अपरित्यागादुपादानलक्षणा । निमिषपदेन प्राणिनां जीवनक्षणास्तैश्च प्रतिक्षणसम्बन्धि मानसं कायिकं शुभमशुभं च सर्वं कर्म लक्ष्यते । कर्मणा सह निमेषाणामप्युपादानात् सोपादाना लक्षणेयम् । मानवैः क्रियमाणानां शुभाऽशुभकर्मणामनुक्त्या च साध्यवसाना ।

अथ तृतीया रूढिनिमित्ता लक्षणलक्षणा सारोपा गौणी—

गौडेन्द्रं कण्टकं राजा शोधयत्युत्कलेश्वरः ।
गौडेन्द्रकण्टकाऽभेदोऽभिधया नोपपद्यते ।।२३०।।
मार्जन्या कण्टकादीनां शोधनं राज्ञि बाधितम् ।
क्षुद्रशत्रुस्वरूपं तल्लक्ष्याऽर्थं स्थापयत्यतः ।।२३१।।
वाच्यार्थस्य परित्यागादत्र लक्षणलक्षणा ।
सारोपा विषयस्योक्त्या, गौणी सादृश्ययोगतः ।।२३२।।

विनिगीर्यं तु गौडेन्द्रं पदं यद्यभिधीयते।
तदेव वाक्यं तत्र स्यात् तर्हि साध्यवसानिका ॥२३३॥

कण्टकपदं तीक्ष्णाग्रे द्रुमाङ्गविशेषे रूढम्। उत्कलेश्वरो गौडेन्द्रं कण्टकं शोधयतीति वाक्ये राज्ञा मार्गगतानां कण्टकानां मार्जन्या कुठारादिना वाऽपसारणम् अनुपपन्नम्, अतस्तत् क्षुद्रशत्रुरूपमर्थं लक्षयति। यथा मार्गगतः कण्टकः पथिकस्य गमने स्वल्पं विघ्नं करोति तथा क्षुद्रशत्रुरपीति तयोः साधर्म्यात्, उक्ते विषये गौडेन्द्रे कण्टकत्वारोपात्, कण्टकरूपस्य मुख्यार्थस्य सर्वथा परित्यागाद् अत्र रूढिनिमित्ता लक्षणलक्षणा सारोपा गौणी। 'कण्टकः कृन्तनात्। कण्टकः कन्तपो वा, कृन्ततेर्वा कण्टतेर्वा' (निरु० ६।३)। "कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे। नैयायिकादिदोषोक्तौ स्याद् रोमाञ्चद्रुमाङ्गयोः" इति मेदिनी। न च उक्तकोशवचनप्रामाण्यात् कण्टकपदम् अभिधया क्षुद्रशत्रुरूपमर्थं प्रकाशयतीति वक्तव्यम्। कानिचित् पदानि लाक्षणिकान्यपि प्रचुरप्रयोगवशात् वाचकायमानानि कोशकृद्भिः स्वग्रन्थेषु निवेशितानि। तदुक्तम्—निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्। क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः॥

यथा वा—

एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः।
पादोऽस्य विश्वा भूतानि त्रिपादस्याऽमृतं दिवि॥
ऋ० १०।९०।३॥

"पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्"। ऋ० १०।९०। ॥ इत्यादिना पूर्वोक्तस्य सहस्रशीर्षादिरूपस्य पुरुषस्य एतावान् महिमा विश्वरूपः। स तु अस्मादपि महत्तरः। विश्वानि भूतानि=कार्यरूपं जगत् तस्य पादमात्रं चतुर्थभागमात्रम्। अस्य त्रिपाद् भागत्रयात्मकोंऽशोऽतिविशालत्वात् सामान्यमानवबुद्धेरविषयः। कारणात्मना स्थितो वा स महत्तरो भागो दिवि=दिव्यलोके=पारेपरार्धसौरमण्डलपरम्परायाम् दिव्यज्ञानेन प्रकाशमाने साधकानां चेतसि वा वर्तते। कारणात्मना स्थितत्वमेव तस्याऽमृतत्वम्। कार्यरूपस्य सर्वस्याऽनित्यत्वात्। पद गतौ धातोर्निष्पन्नः पादशब्दो लोके मुख्यया वृत्त्या चरणाऽर्थकोऽपि चरणचतुष्टयवता गवादीनामेकपादस्य चतुर्थांशमात्रत्वात् कस्याऽपि वस्तु-

नश्चतुर्थांशं लक्षयति। तदुक्तं निरुक्ते भगवता यास्केन "पादः पद्यतेः ·········पशुपादप्रकृतिः। प्रभागसामान्याद् इतराणि पदानि" (निरु० २।८)। पशोः पादः प्रकृतिः कारणं यस्येति तात्पर्यम्। पादोऽस्य विश्वा भूतानीत्यत्र पादशब्दः स्वमुख्यमर्थं चलनसाधनरूपं सर्वथा मुञ्चति। तेनाऽत्र लक्षणलक्षणा। विश्वानि भूतानि विषयस्तत्र पादत्वारोपात् सा सारोपा साधर्म्यकारणाच्च गौणी। विषयं निगीर्य तस्य विषयिणा भेदनिरूपणे त्वियं साध्यवसाना स्यादिति।

अथ चतुर्थी प्रयोजननिमित्ता लक्षणलक्षणा सारोपा गौणी—

वाहीको गौरिति प्रोक्ते सति लक्षणलक्षणा।
तादात्म्यं सर्वथा भिन्नवाहीकस्य गवा कथम् ॥२३४॥

सास्नादिमत्स्वरूपस्य गोः स्वमुख्यार्थवर्जनात्।
विषयस्याऽनिगीर्णत्वाद् वाहीकस्य गवा तथा ॥२३५॥

गोनिष्ठजाड्यमान्द्यादेर्वाहीकेऽपि प्रकाशनात्।
प्रयोजनवती गौणी सारोपेयमुदीर्यते ॥२३६॥

गौर्जल्पतीति वाक्ये तु निगीर्णे विषये सति।
गवा विषयिणा साध्यवसाना सैव जायते ॥२३७॥

अत्यन्तमूर्खतापूर्णं वाहीकस्य प्रजल्पितम्।
पशोरिवाऽस्य पुंसोऽपीति व्यक्तिश्च प्रयोजनम् ॥२३८॥

गौर्जल्पतीति वाक्ये विषयस्य वाहीकस्य विषयिणा गवा निगरणात् साध्यवसाना लक्षणा भवतीति बोध्यम्।

यथा वा—

मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः।
मधु द्यौरस्तु नः पिता॥ ऋ० १।९०।७॥

देवता—विश्वेदेवाः। ऋषिः—गोतमो भरद्वाजः। छन्दः—गायत्री।

नक्तं नो मधु=अस्माकं कृते रात्रिर्मधुमयी मधुरा सुखकरी स्यात्। उत उषसः मधु भूयासुः। पार्थिवं रजः=पृथिवीलोकः नः कृते मधु स्यात्। पिता=पालयिता पितृतुल्यो वा द्युलोकोऽपि नः कृते मधुमयो भूयात्। द्युलोके पितृत्वारोपात् पृथिव्या मातृत्वारोपोऽनुक्तोऽपि स्वयं प्राप्तो भवति। मन्त्रेऽस्मिन् नक्तं विषयः, तस्मिन् मधुन आरोपः

कृतः। अत्यन्तभिन्नयोः पदार्थयोस्तादात्म्याऽसंभवात् मधुसदृश्यो रात्र्य इति प्रतिपत्तौ **सारोपा गौणीयं लक्षणा**। उषसां मधुत्वं न संभवति तेन मधु यथा मधुरं सुखदं तथोषसोऽपि सुखदाः स्युरित्यर्थो लक्ष्यते।

यथा वा—

**अयं मे हस्तो भगवान् अयं मे भगवत्तरः।**
**अयं मे विश्वभेषजोऽयं शिवाऽभिमर्शनः॥**

अथर्व० ४।१३।६॥

कश्चिद् आत्मशक्तिसंपन्नो लोकनायको हतोत्साहान् स्वानुयायिनो जनान् कुशलो भिषग् वा स्वरोगिणं प्रति ब्रूते—मदीयोऽयं हस्तः साक्षाद् भगवान् ततोऽप्यधिकतरो वा। एतन्मात्रसहायस्य मम किमप्यसाध्यं नास्ति। अयं मम हस्तः सर्वेषामपि रोगाणां भेषजभूतः, अयं शिवाभिमर्शनः शिवमभिमर्शनम्=कल्याणकरः स्पर्शो यस्य तथाविधोऽस्ति। अस्य स्पर्शमात्रेण सर्वे रोगाः शाम्यन्तीति। अतएव लोकभाषायामप्युच्यते "अपना हाथ जगन्नाथ" इति। प्राण्यङ्गमात्रस्य हस्तस्य भगवत्त्वं वाधितं तस्य भगवत्सदृशत्वं सर्वकर्मक्षमत्वं लक्षयति। उक्ते विषये हस्ते विषयिणो भगवत्त्वारोपात् भगवत्पदमुख्यार्थस्य परित्यागात् हस्तस्य महिमातिशयव्यंजनप्रयोजनाच्चेयं **प्रयोजननिमित्ता लक्षणलक्षणा सारोपा गौणी च**। विषयं वाहीकं निगीर्य तस्य विषयिणा गवाऽभेदप्रतिपत्तौ साध्यवसाना लक्षणा भवतीत्युक्तं प्राक्।

यथा वा—

**जिह्वाया अग्रे मधु मे जिह्वामूले मधूलकम्।**
**ममेदह क्रतावसो मम चित्तमुपायसि॥**

अथर्व० १।३४।२॥

देवता—मधुवनस्पतिः। ऋषिः—अथर्वा। छन्दः—अनुष्टुप्।

सूक्तस्य दवताया मधुलताया व्याजेन मनसि वचसि कर्मणि माधुर्यभावोऽत्र प्रार्थ्यते। हे मधुवीरुत् (प्रथममन्त्रे मधुवीरुदियं साक्षादुक्ता) मम जिह्वाया अग्रे मधु स्यात् माधुर्यं वसतु। जिह्वामूले च मधूलकम् =नितरां मधुरं सुरभि चाम्रफलम्। ममेदह क्रतावसः=मम+इत्+अह, क्रतौ+असः=मम क्रियाकलापेऽपि त्वमेव भव। मम चित्तम्

उपायसि=मम हृदये त्वमेव आगच्छ। इत् पदम् एवार्थकम्। अह निपातो विनिग्रहार्थीयः। विनिग्रहो नियमनम् 'जिह्वाया अग्रे' शब्दस्य आपाततः प्रतीतेऽर्थे। जिह्वामूले=पौर्वापर्यपर्यालोचनानन्तरं प्रतीते गूढार्थे इत्यर्थोऽग्रे मूले चेति पदाभ्यां लक्ष्यते। इह विषयं मधुरवचनं तत्र निगूढं मधुरभावं च निगीर्य तयोर्मधुर्मघूलकयोस्तादात्म्यारोपात् साध्यवसाना गौणी लक्षणा।

यथा वा—

> सिंह्यसि सपत्नसाही देवेभ्यः कल्पस्व।
> सिंह्यसि सपत्नसाही देवेभ्यः शुन्ध्यस्व।
> सिंह्यसि सपत्नसाही देवेभ्यः शुम्भस्व॥ यजु० ५।१०॥

देवता—वाक्। ऋषिः—गोतमः। छन्दः—ब्राह्म्युष्णिक्।

सिंह्यसीति—अन्यायमत्याचारं च प्रतिकर्तुमुत्थिता ओजस्विनी निर्भया च वाणीह वाग्देवतारूपेण संबोध्यते। यज्ञवेदीप्रतीका मातृभूमिस्तन्निवासिनी जनता वा। हे वाग्देवि मातृभूमे जनते वा त्वम् अत्याचारिणः परपीडकान् असुरान् प्रति क्रुद्धा सती सिंही=सिंहीव भव। यतस्त्वं सपत्नान् शत्रून् सहसे=प्रतिकरोषि, अतो देवानाम्=देवोचिताचाराणां सतां त्राणार्थमुपकारार्थं च कल्पस्व=समर्था भव। शुन्ध्यस्व=शुद्धा भव, शुद्धजलवाय्वादिभिर्युक्ता भव। अथवा शुद्धाचारैर्नतु भ्रष्टाचारैर्देशधर्मद्रोहिभिः शत्रुप्रणिधिभूतैराक्रान्ता स्याः। शुम्भस्व=प्रासादराजमार्गवनोपवननगरादिभिः शोभमाना भव। वाक्पक्षेऽपि च्युतसंस्कृत्यादिदोषरहिता ओजःप्रभृतिगुणैः शोभिता भावप्रकाशनक्षमा चेत्यादि यथायथं योजनीयम्। इह वाचो मातृभूमेर्वा विषयस्य निगरणात् तस्य विषयिणा सिंह्या अभेदप्रतिपादनाच्च साध्यवसाना गौणी लक्षणलक्षणा।

> प्रयोजनेऽष्टभेदा वा लक्षणाः पूर्ववर्णिताः।
> अगूढगूढभेदाभ्यां व्यङ्ग्यस्य ताश्च षोडश॥२३९॥
> यत्प्रयोजनमुद्दिश्य क्रियन्ते सप्रयोजनाः।
> लक्षणास्तत्फलं व्यङ्ग्यं स चाऽर्थे व्यञ्जनोत्थितः॥२४०॥

रूढिप्रयोजननिमित्ताभ्यां लक्षणायाः षोडशभेदा वर्णितपूर्वाः (द्र०

पृष्ठ १३४)। तेषु प्रयोजननिमित्ता येऽष्टौ भेदा निरूपितास्ते व्यङ्ग्यार्थस्य अगूढगूढभेदाभ्यां विभक्ताः पुनः षोडशप्रकारतां भजन्ते। यत्प्रयोजनमुद्दिश्य लक्षणाश्रीयते तदेव तस्याः फलम्। तत्फलं च व्यञ्जनाव्यापारजन्यम्। तत्र—

शब्दार्थज्ञानमात्रेण ज्ञेयोऽगूढोऽखिलैः सुखम्।
गूढः सहृदयैरेव संवेद्यः प्रतिभाबलात् ॥२४१॥

अगूढो व्यङ्ग्योऽतिस्फुटत्वात् शब्दार्थज्ञानमात्रसंवेद्यः। प्राकृतो जनोऽपि तम् अनायासेन हृदयङ्गमं करोति। गूढस्तु प्रतिभासंवेद्यः सहृदयैरेव ज्ञायते।

तत्र अगूढो व्यङ्ग्यो यथा—

गावो गन्धेन पश्यन्ति शास्त्रैः पश्यन्ति च द्विजाः।
इत्यादौ ज्ञायते सर्वैर्ज्ञानार्था पश्यतिक्रिया ॥

यथा वा—

शतहस्त समाहर, सहस्रहस्त संकिर।
कृतस्य कार्यस्य चेह स्फातिं समावह ॥
अथर्व० ३।२४।५॥

देवता—प्रजापतिः। ऋषिः—भृगुः। छन्दः—अनुष्टुप्।

इह संख्याविशेषवाचके शतसहस्रपदे स्वमुख्यमर्थं विहाय अधिकाऽधिकतरार्थौ व्यङ्क्तः। यथासामर्थ्यमधिकं धनं संचिनु अधिकतरं च पात्रेषु वितर। कृतस्य करणीयस्य च व्यापारस्य उत्तरोत्तरमधिकं विस्तारं कुरु। मन्त्रस्याऽस्यायमर्थः सर्वजनैः सुखेन संवेद्यः।

यथा वा—

अजैष्माद्याऽसनामाऽद्याऽभूमाऽनागसो वयम् ॥
अथर्व० १६।६।१॥

देवता—उषाः। ऋषिः—यमः। छन्दः—प्राजापत्यानुष्टुप्।

वयमद्यैव शत्रून् जयेम, जयलब्धं धनादिकम् अद्यैव सम्यग् उपयुञ्जीमहि, अद्यैव निष्पापाश्च भवेम। लोके पराजय एव पापम्। अथवा समरे वधादिजन्यं पापं सुखशान्तिव्यवस्थापनादिभिः सुकर्मभि-

रपमृज्य निष्पापा भवेम । इह अद्यपदम् अचिररूपमर्थं व्यनक्ति । स चातिस्फुटः ।

अथ गूढो व्यङ्ग्यः—

अहो किमुच्यते मित्र यत् त्वयोपकृतं मम ।
एवमेवाचरन् जीव सुखेन शरदां शतम् ॥२४२॥

कृताऽपकारमुद्दिश्य जनमुक्तमिदं यतः ।
मित्रोपकृतजीवाऽऽद्यैः प्रतीपोऽर्थोऽत्र लक्ष्यते ॥२४३॥

वैपरीत्यं च सम्बन्धो व्यङ्ग्यस्यार्थस्य गूढता ।
अपकारातिशय्यादि व्यञ्जनं चाऽत्र तत्फलम् ॥२४४॥

मया कृताऽपकारोऽपि वेत्ति मामुपकारिणम् ।
इति वाच्याऽर्थमेवाऽस्य गृह्णाति प्राकृतो जनः ॥२४५॥

गूढं व्यङ्ग्यार्थमवगन्तुमक्षमः कश्चिज्जडः 'मया कृतमपकारमप्यसौ उपकारमेव वेत्ति' इति वाच्यार्थेनैव संतुष्टो भवति—

यथा वा—

**इमं जीवेभ्यः परिधिं दधामि, मैषां नु गादपरो अर्थमेतम् ।**
**शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥**

यजु० ३५।१५, अथर्व० १२।२।२३॥

देवता—मनुष्यो वा मृत्युर्वा । ऋषिः—संकसुकः भृगुर्वा । छन्दः—त्रिष्टुप् ।

इमं जीवेभ्यः इति—जीवेभ्यः जीवद्भ्यो मानवेभ्यः । इमं परिधिं दधामि=वर्षशतात्मिकामिमाम् आयुषो मर्यादां स्थापयामि । एषां जनानां मध्ये कश्चिदपरः—परस्तादुपत्पन्नः स्वपूर्वोत्पन्नात् प्राक् । एतम् अर्थम्=इमां मर्यादामुल्लङ्घ्य मानुगात्=परलोकं गतान् पूर्वतरान् पितॄन् नाऽनुगच्छतु । ज्यायसि जीवति कश्चित् कनीयान् नियतावधेः प्राक् न म्रियताम् । कदाचित् ततः प्राग् उपसर्पन्तमपि मृत्युं भवन्तः पर्वतेन=जीवितुं पर्वतवद्दढेन संकल्पेन अन्तर्दधताम्=तिरोहितं कुर्वन्तु । पुरूचीः शतं शरदश्च जीवन्तु=पुरु बहु अञ्जन्तीति तथोक्ताः विविधैर्लोककल्याणकारिभिर्महासमारम्भैः संघर्षसाफल्यसुखसमृद्धिभिः शबलाः शताऽधिकाः समा जीवन्तु । पर्वतपदस्य निगूढं

पर्वतवदविचाल्यसंकल्पात्मकं व्यङ्ग्यार्थमजानद्भिः कैश्चिदस्य मन्त्रस्याऽनर्थः कृतः। तैरिदं नाऽवबुद्धं यच्छ्मशानमार्गे मृल्लोष्टस्थापनेन मृत्युर्वारयितुं न शक्यः।

यथा वा—

**उदुत्तमं वरुणपाशमस्मदवाऽधमं वि मध्यमं श्रथाय।**
**अथा वयमादित्य व्रते तवाऽनागसो अदितये स्याम॥**

ऋ० १।२४।१५॥

देवता—वरुणः। ऋषिः—शुनःशेपः। छन्दः—त्रिष्टुप्।

उदुत्तममिति—मन्त्रेऽस्मिन् मुमुक्षुणा जनेन वरुणदेवस्य उत्तमाधममध्यमपाशेभ्यो मुक्तिः प्रार्थ्यते। हे वरुण! त्वम् उत्तमम्=सत्त्वगुणप्रधानम् मध्यमम्=रजोगुणबहुलम् अधमम्=तमोगुणप्रायं पाशं बन्धनम्। अस्मत् विश्रथाय=अस्मत्तः शिथिलय छिन्धि वा। येन वयम् अनागसः=पापरहिता भूत्वा, अदितये अखण्डात्मानन्दोपभोगाय अधिकृताः स्याम। आदित्य=आदित्यवद्दिव्येन प्रकाशेन भासमान इत्यपि वरुणदेवस्य संबोधनपदम्। मानवस्य अधमाः पाशाः शारीरिका देहसम्बन्धिनो यैर्बद्धः स उदरभरणार्थं परस्य दास्यमङ्गीकरोति। मध्यमाः पाशा मानसिका यैर्निगडितः स पुत्रकलत्रादिमोहवशंवदस्तैलिकबलीवर्द इव नक्तंदिवं पारिवारिकचिन्ताचक्रे चङ्क्रम्यमाणः क्षणमात्रं न विश्राम्यति। उत्तमाः पाशाः बौद्धिका ये हि वैयक्तिकक्षुद्रस्वार्थोन्मुक्तमपि तं लोकैषणाकृष्टं विदूषकमिव विविधभूमिकासु नर्त्तयन्ति। एते एव पाशा एषणात्रयनाम्ना बृहदारण्यकोपनिषदि वर्णिता "एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्ति"।

(बृहदा० ६।५।१)

अथवा पितृ-ऋण, ऋषि-ऋण, देवऋणाख्यानि त्रीणि ऋणानि त्रयः पाशाः। उक्तं च मनुना—

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥
अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः।

इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥

मनु० ६।३५,३६॥

अत्र वर्णिताः पाशा वासनात्मका न भौतिकाः इति मन्त्रस्य गूढमाशयमजानद्भिस्तु वाच्यार्थमेव बहुमन्यमानैः 'अजीर्गततनयः शुनःशेपो यज्ञे वरुणनिमित्तं बलिप्रदानाय यूपे शिरसि नाभिप्रदेशे चरणयोश्च बद्धः स्वविमुक्तये वरुणं प्रार्थयते' इति या योजना व्यधायि न सा समीचीना। सायणभाष्यभूमिकायां वेदेष्वितिहासो नास्तीति स्वप्रतिज्ञाऽवज्ञानात्। विषयासक्ता जीवा एव शुनःशेपाः। अत्राऽपि व्यङ्ग्यार्थस्य गूढता।

धर्मधर्मिगतत्वेन षोडशाऽपि फलस्य ताः।
द्वात्रिंशद्विधतां यान्ति लक्षणाः सप्रयोजनाः ॥२४६॥

प्रयोजननिमित्ता अनन्तरोक्ताः षोडशलक्षणाः फलस्य धर्मगतत्वेन धर्मिगतत्वेन च प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्विधतां यान्ति। तासां दिङ्मात्रं यथा—

गङ्गायां घोष इत्यत्र लक्षणीये तु तत्तटे।
शीतत्वपावनत्वादेर्धर्मस्याऽतिशयः फलम् ॥२४७॥

गङ्गायास्तटेऽतिशीतत्वपावनत्वविशिष्टो घोषोऽस्तीति कथनेन तस्य सा शीतलता पवित्रता च न प्रतीयते या शीतलताऽद्यमूर्तभावयोर्मूर्तंप्रतीकभूतगङ्गाधिकरणकताकथनेन।

यथा वा—

मधुमन्मे निक्रमणं मधुमन्मे परायणम्।
वाचा वदामि मधुमद् भूयासं मधुसंदृशः ॥

अथर्व० १।३४।३॥

मन्त्रोक्तानां निक्रमणपरायणभाषणानां क्रियाणां मधुमत्त्वं क्षौद्रवत्त्वं नोपपद्यते तेन तेषु माधुर्यभावो लक्ष्यते। व्यञ्जनागम्यो माधुर्याऽतिशयश्च फलम्। माधुर्यभावो धर्मो न तु धर्मी।

अथ फलस्य धर्मिगतत्वम् उदाहरति। यथा—

रामोऽस्म्यहं सहे सर्वमित्यत्राऽतिविपत्सहे।
लक्ष्ये धर्मिणि रामेऽस्ति तस्यैवातिशयः फलम् ॥२४८॥

कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे ।
वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव ॥

अत्राकैशोराद् वनवासपितृमरणपत्नीहरणादिविपत्पातपरम्परा-सहिष्णुरहं रामोऽस्मीति तदुक्तौ अत्यन्तदुःखसहनक्षमताया अतिशयो व्यज्यते स एव च फलम् ।

यथा वा—

**वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।**
**गोभिः सन्नद्धो असि वीडयस्वाऽऽस्थाता ते जयतु जेत्वानि ॥**
यजु० २९।५२॥

समरारम्भे रथिनः स्वरथं प्रत्यामन्त्रणम् । हे वनस्पते वनस्पत्यङ्ग-सुदृढकाष्ठनिर्मित रथ ! त्वं वीड्वङ्गो भूयाः=दृढाङ्गो भव इति श्री-यास्को निरुक्ते (९।२) । त्वमस्मत्सखा=अस्माकं मित्रम्, प्रतरणः=प्रतरन्त्यनेन संग्राममिति तथाविधः । सुवीरश्चासि । त्वं गोभिः गोर-वयवभूतैः स्नायुचर्मादिभिः सन्नद्धः=परिवृतः सुबद्धश्चासि । अतो वीड-यस्व=समरे सुदृढश्चर । ते आस्थाता जेत्वानि जयतु=त्वामधिरूढो वीरो जेतव्यान् रिपून् जयतु । जडस्य रथस्य चेतनोचितं सखेति विशे-षणमनुपपन्नं सत् तस्य सखिवद् विश्वसनीयत्वं मध्येसंग्राममेव अभ-ङ्गुरतां च लक्षयति । लक्ष्ये धर्मिणि रथे विश्वसनीयतातिशयश्चाऽत्र फलं व्यञ्जनालभ्यम् । सखा तु

अत्यागसहनो बन्धुः सदैवाऽनुगतः सुहृत् ।
एककार्यं भवेन्मित्रं समप्राणः सखा मतः ॥

**इत्थमष्टविधा रूढौ द्वात्रिंशच्च प्रयोजने ।**
**पदवाक्यगतत्वेनाऽशीतिः स्युर्लक्षणाभिदाः ॥२४९॥**

उक्तरीत्या रूढावष्टविधाः प्रयोजने च द्वात्रिंशाद्विधा इति मिलिता-श्चत्वारिंशत्प्रकारका लक्षणाः पदगतत्वेन वाक्यगतत्वेन चेति प्रत्येकं पुनर्द्विधा भिन्नाः सत्योऽशीतिविधा भवन्ति । तत्र गङ्गायां घोष इत्या-दीनि पदगतायाः, 'अहो किमुच्यते मित्र यत्त्वयोपकृतं मम०' इत्यादीनि च वाक्यगताया उदाहरणानीत्यलम् ।

**इति लक्षणा प्रकरणम्**

अथ व्यञ्जनायाः स्वरूपं निरूप्यते—

अभिधालक्षणावृत्त्योः प्रकाश्यार्थं कृतार्थयोः ।
तदन्याऽर्थस्य बोधाय व्यञ्जनावृत्तिरिष्यते ॥२५०॥

कल्पेते तस्य बोधाय नाऽभिधालक्षणे पुनः ।
नाऽर्थबोधो विना शब्दव्यापारं च क्वचिद् भवेत् ॥२५१॥

सकृद् विरम्य जायन्ते न शब्दबुद्धिकर्मणाम् ।
व्यापाराः स्वात्मना जातु प्रयत्नमपरं विना ॥२५२॥

शब्दस्याऽर्थादिकस्याऽसौ व्यापारो व्यञ्जनाऽभिधः ।
द्विविधा व्यञ्जना शाब्दी साऽभिधालक्षणाश्रया ॥२५३॥

वाच्यार्थमभिधाय अभिधायाम्, लक्ष्यार्थं लक्षयित्वा च लक्षणायां विरतायाम् शीतत्वपावनत्वादिरूपस्य अन्यार्थस्य अभिव्यक्तये काचिदपरा वृत्तिरवश्यमभ्युपेया। परस्ताद् वक्ष्यमाणा तात्पर्याख्या वृत्तिः पदार्थानामन्वययोजने कृतार्था भवतीति न साऽभिनवार्थबोधायाऽलमिति तत्प्रसङ्गे स्फुटीभविष्यति । न च पूर्वोक्ता अभिधा लक्षणैव वा पुनरुत्थिता सती तदर्थप्रकाशनाय समर्था। 'शब्दबुद्धिकर्मणां विरम्य व्यापाराऽभावात्' इति च नयः । अभिधालक्षणे च शब्दव्यापारतां नातिवर्तेते। अतोऽभिनवार्थबोधाय तृतीया वृत्तिः स्वीकर्तव्यैव। सा च वृत्तिर्व्यञ्जनैव, या व्यञ्जनध्वननरसनाद्यनेकव्यपदेशा यथाऽवसरं तेन तेन नाम्ना व्यवह्रियते। व्यञ्जनायाः शब्दाऽर्थप्रकृतिप्रत्ययादिमूलत्वात् सा बहुविधा।

तत्र शब्दसंभवा व्यञ्जना अभिधामूला लक्षणामूला चेति प्रथमं द्विविधा।

अनेकाऽर्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।
एकार्थे या व्यनक्त्यन्यं व्यञ्जना साऽभिधाश्रया ॥२५४॥

अनेकार्थस्य हरिप्रभृतिपदस्य एकस्मिन्नर्थे संयोगादिभिर्नियन्त्रिते सति तस्य कश्चिदपरोऽर्थस्तत्र स्फुरति चेत् स व्यङ्ग्यः, तस्य बोधिका वृत्तिश्च अभिधामूला व्यञ्जनैव। व्यञ्जनया प्रतीयमानोऽसावर्थो यद्यपि तत्र व्यङ्ग्यस्तथापि कोशादिषु तस्मिन्नर्थेऽपि तस्य संकेतितत्वात् सोऽभिधामूलव्यञ्जनाया एव विषयः।

अथ प्राचीनैरुक्ताः संयोगादयः प्रकृतोपयोगित्वाद् वर्ण्यन्ते —

"संयोगो विप्रयोगश्च साहचर्यं विरोधिता
अर्थः प्रकरणं लिङ्गं शब्दस्याऽन्यस्य सन्निधिः ।।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्याऽनवच्छेदे विशेषस्मृतिहेतवः ।।"

इति वाक्यपदीये (२।३१७,३१८) श्रीहरिः ।

अनवच्छेदे अनिश्चये । विशेषस्य प्रकृते उपयुक्तस्य कस्यचिदेकस्यार्थस्य स्मृतेः उपस्थितेरित्यर्थः । अनेकार्थस्य शब्दस्य क्वचिद् अनेकार्थानाम् एकत्र सन्निपाते तत्र कतमोऽर्थः संगच्छत इति निश्चयाऽभावे एषां संयोगादीनामन्यतम एव यथावसरं कमप्येकं निश्चित्य निर्णयं विधत्ते ।

तत्र संयोगो यथा—

**वाच्यान्तरैरसम्बद्धे सति त्वन्यतमेन यः ।**
**कस्यचित् ख्यातसम्बन्धः स संयोग उदीर्यते ।।२५५।।**

हरिशब्दस्य हि बहवो वाच्यार्थाः । "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांऽशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ।" इत्यमरः । सशङ्खचक्रो हरिरित्युक्ते हरिपदस्य पूर्वोक्तेषु चतुर्दशाऽर्थेषु शंखचक्राभ्यां संयोगः कृष्णेन (विष्णुना) एव प्रसिद्धो नेन्द्रादिना । तस्मादिह हरिपदस्य सर्वेष्वर्थेषु व्याप्ताऽभिधाशक्तिः शङ्खचक्रसंयोगेन कृष्णमात्रे नियम्यते । ततश्च शङ्खचक्रवान् कृष्ण इत्यर्थो लभ्यते ।

**सहादयो निपाता ये प्रत्यया मतुबादयः ।**
**समासाश्च बहुव्रीहिमुखाः संयोगबोधकाः ।।२५६।।**

सहादयः '......सार्धम्' । 'साकं सत्रा समं सह' इत्यमरः । मतुबादयः प्रत्ययाः बलवान् दण्डी इत्यादिषु मतुब् इति प्रभृतयः पुरुषाणां बलदण्डादिभिः सम्बन्धं प्रकटयन्ति । संयोगश्चात्र सम्बन्धमात्रं न तु— अप्राप्तयोस्तु या प्राप्तिः स संयोग उदाहृतः (मुक्तावली कारिका १।५) इत्युक्तलक्षणो द्वयोर्द्रव्ययोरेकदेशसम्बन्धरूपः ।

यथा वा—

स्वयं पञ्चमुखः पुत्रौ षडाननगजाननौ ।
दिगम्बरः कथं जीवेदन्नपूर्णा न चेद् गृहे ॥

अत्र शंकरस्य पञ्चभिः स्कन्दस्य षड्भिर्मुखैर्गणेशस्य च गजमुखेन संयोगो बहुव्रीहिसमासगम्यः ।

यथा वा—

**इन्द्रस्य नु वीर्याणि प्रवोचं यानि चकार प्रथमानि वज्री ।**
**अहन्नहिमन्वपस्ततर्द प्रवक्षणा अभिनत् पर्वतानाम् ॥**

ऋ० १।३२।१॥

देवता—इन्द्रः । ऋषिः—आङ्गिरसो हिरण्यस्तूपः । छन्दः—त्रिष्टुप् ।

इन्द्रस्येति—अहं स्तोता इन्द्रस्य मध्यस्थानवर्तिनो देवस्य, वीर्याणि बलकार्याणि, प्रवोचं वच्मि । वज्री वज्रहस्तोऽशनिमान् अशनिरूपो वा स यानि प्रथमानि श्रेष्ठानि मेघभेदनगिरिविदारणादीनि समये समये करोति । स हि अहिम् मेघम्, अहन् हन्ति । अपः मेघजलानि अनुततर्द हिंसितवान् भूमौ पातयतीत्यर्थः । उतृदिर् हिंसानादरयोः इति धातोर्लिटि रूपम् । पर्वतानां वक्षणाः प्रवहणशीला नदीः अभिनत् भिनत्ति । अथवा पर्वतानां वक्षणाः कटकान् उदग्रभागान् पार्श्वप्रदेशान् वा । वक्षः प्राण्यङ्गभेदः उरःस्थलं पार्श्वभागो वा । 'बक्खी' इति देशभाषायाम् । 'इदमपि इतरद् वक्षः (उरः) एतस्मादेव, अध्यूढं काये' इति निरुक्ते श्रीयास्कः (४।१६) । वज्रसंयोगादिह इन्द्रो मध्यस्थानवर्ती देवविशेष इति नैरुक्ताः ।

अथ विप्रयोगः—

**असम्बन्धस्तयोरेव विप्रयोगोऽभिधीयते ।**
**शङ्खचक्रविहीनोऽपि हरिः कृष्णार्थबोधकः ॥२५७॥**

अशङ्खचक्रो हरिरित्यादौ नञ्समासो हरिशब्दस्य शक्तिं कृष्णमात्रे नियमयति ।

यथा—

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनः शंभुर्भगवान् बादरायणः ॥

यथा वा—

अवज्रबाहुरिन्द्रः । अपाशी वरुण इत्यादिः ।

साहचर्यम्—

अन्योन्याऽपेक्षिताख्याता साहचर्यं तथेष्यते ।
यथा भीमाऽर्जुनावत्र साहचर्येण पाण्डवौ ॥२५८॥

समुच्चयार्थकाः सर्वे निपाताश्चादयः खलु ।
द्वन्द्वादयः समासाश्च साहचर्यप्रकाशकाः ॥२५९॥

यद्यपि भीमपदस्य भयानकादयः अर्जुनपदस्य च श्वेतकार्तवीर्यादयोऽनेकेऽर्थाः प्रसिद्धाः तथापि साहचर्यमिह तयोः शक्तिं पाण्डवयोरेव नियमयति । "भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे" "अर्जुनः ककुभे पार्थे कार्तवीर्य०" इत्युभयत्र मेदिनी । एवं वेदेऽपि अग्नीषोमौ, इन्द्राग्नी—एतदादिकान्यनेकानि पदानि दृश्यन्ते, येषु साहचर्यमेवाऽन्यतमार्थनिर्णयाय समर्थं भवति ।

प्रसिद्धो वैरसम्बन्धो विरोधिता—

प्रसिद्धो वैरसम्बन्धो नैकत्राऽवस्थितिस्तथा ।
विरोध उच्यते—कर्णाऽर्जुनौ, छायातपौ यथा ॥२६०॥

कर्णाऽर्जुनपदयोः श्रोत्रधवलाद्यनेकार्थेषु सत्स्वपि कर्णस्य मध्यमपाण्डवस्य च प्रसिद्धो वैरसम्बन्धस्तयोः पदयोः शक्तिं राधेयधनञ्जययोरेव नियच्छति । तथा—छायापदम् "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरानुसारमनेकार्थकम् । तस्माच्छायातपा वत्यत्र एकत्रसहाऽनवस्थानरूपेण प्रसिद्धविरोधेन छायापदस्य शक्तिरातपाऽभावार्थे नियम्यते ।

यथा वा—

अहन् वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।
स्कन्धांसीव कुलिशेना विवृक्णाऽहिः शयत उपपृक् पृथिव्याः ॥
ऋ० १।३२।५॥

देवता—इन्द्रः । ऋषिः—आङ्गिरसो हिरण्यस्तूपः । छन्दः—त्रिष्टुप् ॥

अहन्निति—अयमिन्द्रो मध्यस्थानी देवताविशेषः (इति यास्कः)

महता वधेन वधसाधकेन अशनिरूपेण वज्रेण। वृत्रतरं वृत्रम्=अतिशयेन आवरकं मेघं व्यंसम्=विगतांसं कृत्वा=प्रत्यङ्गं छित्त्वा भित्त्वेत्यर्थः। अहन्=हन्ति ताडयति। तत्रोपमा, केनापि परशुपाणिना पुरुषेण कुलिशेन कुठारेण विवृक्णा छिन्नानि वृक्षस्य स्कन्धांसीव स्कन्धा इव सोऽहिः स मेघः पृथिव्याः पृष्ठे। उपपृक् संपृक्तः शयते इव। विपूर्वकस्य ओव्रश्चू छेदने धातोर्निष्ठायां रूपम्। अत्र वधसाधनभूतोऽशनिः वध एवोक्त इति **सप्रयोजना लक्षणा**। अत्र अहिपदमनेकार्थम्। "अहिर्वृत्राऽसुरे सर्पे पुंसीहोद्यमवाञ्छयोः" इति मेदिनी। तथापि इन्द्रवृत्रयोः प्रसिद्धेन वैरसम्बन्धेन वृत्रार्थकम्। वृत्रासुरश्च वेदे वहुत्र मेघ एव। "वृत्रो मेघे रिपौ ध्वान्ते दानवे वासवे गिरौ" इति हेमचन्द्रः।

यथा वा—

**दृष्ट्वा रूपे व्याकरोत् सत्याऽनृते प्रजापतिः।**
**अश्रद्धामनृतेऽधाच्छ्रद्धां सत्ये प्रजापतिः॥** यजु० १९।७७॥

प्रजापतिः दृष्ट्वा सम्यग्विविच्य सत्यमनृतं च पृथक् चकार। तयोः सत्ये मानवस्य स्वाभाविकीं श्रद्धाम् अनृते च स्वाभाविकीमश्रद्धां न्यधात्। इह सत्यानृतपदे अपि अनेकार्थे। सत्यं कृते (कृतयुगे) च शपथे तथ्ये त्रिषु तु तद्वति। सत्यानृतं तु वाणिज्यम्।

तदुक्तं मनुना—

ऋतमुञ्च्छशिलं ज्ञेयममृतं स्यादयाचितम्।
मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम्॥
सत्याऽनृतं तु वाणिज्यं तेन चैवापि जीव्यते॥
सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्॥

मनु० ४।५, ६॥

एवमनेकार्थयोः सत्यानृतपदयोर्विरोधो हि तथ्ये मिथ्याकथने च तयोः शक्तिं नियमयति।

अर्थः प्रयोजनम्।

**अर्थः प्रयोजनं तच्च चतुर्थ्यादिनिरूपितम्।**
**भवच्छिदे भज स्थाणुमिह स्थाणोः शिवाऽर्थता॥२६१॥**

शङ्कुस्थूणादिरूपस्य स्थाण्वर्थस्य निषेवणम् ।
कल्पते मुक्तये नैव तस्मात् सोऽर्थोऽनुद्यते ॥२६२॥

स्थाणुपदम् "... स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुवेऽथ स्थूणा स्यात् सूर्म्यां स्तम्भे गृहस्य च" इति मेदिनी । किन्तु भवच्छेदरूप-प्रयोजनाय शङ्कुप्रभृतेः पर्युपासनं न कल्पते । अतो भवच्छेदनरूपं प्रयोजनमिह स्थाणुपदस्य शक्तिं शिवरूपेऽर्थे नियमयति । भवच्छेदः= पुनर्जन्मपरम्परावसानम् । 'तादर्थ्ये चतुर्थीति वाच्यम्' इत्यनुशासनम् । तस्मै कार्यायेदं=तदर्थं तस्य भावस्तादर्थ्यम् । ब्राह्मणादित्वात् ष्यञ् इति सिद्धान्तकौमुदीटीकायां श्रीज्ञानेन्द्रसरस्वतीमहोदयाः । तेन यूपाय दारु ब्राह्मणाय दधीत्यादि सिद्धम् ।

यथा वा—

भूत्यै जागरणम् अभूत्यै स्वपनम्० ॥ यजु० ३०।१७॥

'भूतिर्भस्मनि संपदि' इत्यमरः । जागरूकता संपत्तये प्रमादश्च विभवनाशाय भवतीत्याशयः । इह भूतिपदस्य शक्तिः प्रयोजनेन संपदि नियम्यते । भूतिप्रयोजनाय जागरणमित्यर्थः ।

अथ प्रकरणम्—

वक्तृबोद्धव्ययोर्बुद्धिस्थत्वं प्रकरणं मतम् ।
देवः प्रमाणमित्यत्र देवस्य युष्मदर्थता ॥२६३॥

एतदाकर्ण्य 'देवः प्रमाणम्', 'सर्वं जानाति देवः' इत्यादिषु वाक्येषु प्रकरणमेव देवपदस्य शक्तिं युष्मदर्थे नियमयति । "देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये" इति मेदिनी ।

यथा वा—

यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि ।
तवेत् तत् सत्यमङ्गिरः ॥ ऋ० १।१।६॥

देवता—अग्निः । ऋषिः—मधुच्छन्दा वैश्वामित्रः । छन्दः—गायत्री ।

इह प्रकरणवशाद् अङ्गपदं सम्बोधनाऽर्थे नियन्त्रितम् । 'अङ्ग-मन्तिकगात्रयोः' उपसर्जनभूते स्यादभ्युपायप्रतीकयोः । "अङ्ग सम्बोधनहर्षयोः" इत्युभयत्र श्रीहेमचन्द्राचार्याः । अङ्गेत्यभिमुखी-

करणार्थो निपातः इति श्रीसायणः । दाशुषे दत्तवते यजमानाय । 'दाश्वान् साह्वान् मीढ्वाँश्च' (पा० ६।२।१२) इति पाणिनिसूत्रेण दाशृ दाने धातोः क्वस्वन्तो निपात्यते । त्वं भद्रं कल्याणं करिष्यसि करोषि । एतत् तव इत् तवैव सत्यम् अविचाल्यं व्रतम् शीलमस्ति । तवेयं स्थिरा प्रकृतिर्यत् त्वं तेषां मङ्गलं करोष्येव ।

अथ लिङ्गं नाम अनेकार्थस्य शब्दस्य विशिष्टवाच्यार्थसूचकं किमपि चिह्नम् ।

नानार्थपदवाच्योऽर्थान्तराऽवृत्तिस्तु भेदकृत् ।
एकशक्यगतो धर्मविशेषो लिङ्गमुच्यते ।।२६४।।

प्रसङ्गेषु वसन्तादेः कुपितो मकरध्वजः ।
इत्यादौ कोपधर्मेण कामे शक्तिर्नियम्यते ।।२६५।।

अनेकार्थकस्य कस्यचित्पदस्य इतरार्थेषु अविद्यमानः, एकशक्यमात्रनिष्ठः अतएव तेभ्यस्तस्य भेदकृद् धर्मविशेषो लिङ्गम् ।

यथा—मकराकृतिर्ध्वजो यस्य स कामः समुद्रो वा । कुपितत्वधर्मस्तु काव्येषु कामस्यैव प्रसिद्धः । यथा—'कालो मधुः कुपित एष च पुष्पधन्वा० । इह कुपितत्वलिङ्गेन मकरध्वजपदस्य शक्तिः कामे नियम्यते ।

यथा वा—

ऋतं च यत्र श्रद्धा चापो ब्रह्म समाहिताः ।
स्कम्भं तं ब्रूहि कतमः स्विदेव सः ।।
अथर्व० १०।७।११।।

स्कम्भपदं स्तम्भब्रह्माद्यनेकार्थम्, किन्तु ऋतश्रद्धादिधर्माणां ब्रह्मण्येव संभवादिह स्कम्भपदस्य शक्तिर्ब्रह्मणि नियम्यते ।

अथ शब्दस्याऽन्यस्य सन्निधिः—

अनेकाऽर्थस्य शब्दस्यैकार्थमात्रानुबन्धिनः ।
अन्यार्थवाचिनः सत्ता वाक्येऽन्यशब्दसन्निधिः ।।२६६।।

वाक्ये करेण नागोऽयं राजतीत्यादिके यथा ।
शक्तिर्नियम्यते सन्निधानेन करनागयोः ।।२६७।।

सन्निधानेन नागस्य करः शुण्डार्थवाचकः ।
करस्य सन्निधानेन नागस्य च गजार्थता ॥२६८॥

'बलिहस्तांशवः कराः' इत्यमरप्रामाण्यात् अनेकार्थस्य करपदस्य अन्यतमोऽर्थो हस्त (शुण्डा) रूपः, तत्सम्बन्धी अन्यार्थवाची शब्दो नागस्तस्य सन्निधानेन करपदस्य शक्तिर्गजे यथा नियम्यते तथैव अनेकार्थकस्य नागपदस्य अन्यतमोऽर्थो गजः, तत्सम्बन्धी अन्यार्थवाचकः करः, तत्सन्निधानेन नागपदस्य शक्तिर्गजे नियम्यते । "नागो मतङ्गजे सर्पे पुंनागे नागकेसरे" इत्यनेकार्थसंग्रहे हेमचन्द्राः । न चात्रैकशब्द-शक्तिनियमनमपरशब्दशक्तिमपेक्षते, येनाऽन्योन्याश्रयदोषः स्यात्, कर-नागशब्दयोः 'अर्थान्तरस्वीकारेऽन्वयानुपपत्त्या युगपदे शक्तिनियमनात्' इति श्रीरसगङ्गाधरकाराणामाशयः । श्रीविश्वनाथास्तु 'देवः पुरारिः' इत्युदाजह्रुः । अत्र पुरारिः किं त्रिपुरासुरशत्रुः शिवः, शत्रुनगरनाशकः कश्चिन्नृपतिर्वेति सन्देहे देवतावाचकदेवपदसन्निधिः पुरारिशब्दस्य शक्तिं शिवे नियमयति ।

यथा वा—

निषसाद धृतव्रतो वरुणः पस्त्यास्वा ।
साम्राज्याय सुक्रतुः ॥ यजु० १०।२७॥

इह वरुणपदमनेकार्थकम् । 'वरुणोऽर्केऽप्पतौ वृक्षे वरणे वरुणद्रुमे' इति श्रीहेमचन्द्राचार्याः । किन्तु पस्त्यासु=प्रजासु, साम्राज्याय चेति पदयोः सान्निध्यात् तन्नृपार्थकम् ।

यथा वा—

वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥
यजु० ९।१८॥

देवता—बृहस्पतिः । ऋषिः—वसिष्ठः । छन्दः—निचृत् त्रिष्टुप् । मन्त्रेऽस्मिन् विप्राः अमृताः ऋतज्ञाः इत्येतेषां पदानां सन्निधानेन अनेकार्थस्य वाजिन इति पदस्य शक्तिर्ज्ञानिनि नियम्यते न त्वश्वे । वाजो निःस्वनपक्षयोः । 'वेगे पुमांस्तथा क्लीबे घृतयज्ञान्नवारिषु" इति मेदिनी ।

अथ सामर्थ्यम् । सामर्थ्यं कारणता—

**सामर्थ्यं कारणत्वं स्यान्मधुमत्तः पिको यथा ।**
**पिकस्य मदहेतुत्वाद् वसन्तोऽत्र मधुर्मतः ॥२६९॥**

**अस्ति यद्यपि मद्यस्य मदसामान्यहेतुता ।**
**विवक्षायां विशेषस्य सामान्यं नहि गृह्यते ॥२७०॥**

"मधुः पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति" इति प्रमाण्यादनेकार्थकस्य मधुपदस्य शक्तिः सामर्थ्येन वसन्ते नियम्यते । यद्यपि मद्ये सर्वेषां मादकत्वशक्तिरस्ति तथापि पिकस्य मत्ततानिमित्तत्वं विशेषतया वसन्त एव । सामान्यविशेषयोः सहोपस्थितौ विशेषस्यैव ग्रहणं समुचितम् ।

यथा वा—

**तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।**
**विश्वमाभासि रोचनम् ॥** ऋ० १।५०।४॥

हे ज्योतिष्कृत् सूर्य=हे सर्वप्रकाशक प्रेरक ! त्वमतिदीर्घस्य द्युलोकाऽध्वनस्तरिता उपासकानां विविधरोगेभ्यस्तारयिता चाऽसि । त्वं विश्वदर्शतः=विश्वैर्दर्शनीयः, विश्वं जगत् दर्शतं=दीप्तमन्तरिक्षमभिव्याप्य आभासि=भाससे भासयसि वा ।

अथवा—साधकानां सन्मार्गप्रेरक हे देव त्वं हि नः संसारसागरात् तरणिः=तारयिता दिव्यशक्तीनां प्रकाशकश्चासि । त्वं रोचनम् अध्यात्मप्रकाशेन दीप्तं नो हृदयम् आभासि=आभासय । "तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्" इति मेदिनी वचनादनेकार्थकमिदं पदमिह सूर्यपरकं तस्यैव ज्योतिष्कृत्त्वसामर्थ्यात्, विश्वदर्शनहेतुत्वाच्च । अध्यात्मपक्षे 'तरणि' पदस्य तारयितृरूपोऽर्थोऽपि निर्णायकः स्यात् ।

अथौचिती—

**औचितीं योग्यतामाहुः सामञ्जस्यमथापि वा ।**
**स्यादमङ्गलभङ्गाय मुखं तव महीपते ॥२७१॥**

कुपितेन उपेक्षावता वा स्वामिनो मुखेन सेवकस्य मनोरथसिद्धिर्न भवतीत्यौचित्यात् प्रसादाभिमुखे मुखे एव मुखपदस्याऽत्र शक्तिः ।

संयोगादिष्वेषु कार्यकारणभावे सामर्थ्यम् । चतुर्थ्यादिनिरूपितायां तदर्थतायामर्थः, अनयोर्द्वयोरभावेऽपि कस्यचिदनेकार्थकस्य पदस्य एकार्थमात्रवृत्तिरितरभेदसूचको धर्मविशेषो लिङ्गम्, कार्यकारणभावादिभिः संभवत्स्वप्यन्येष्वर्थेषु अन्यतमस्य तत्र सामञ्जस्यम् औचित्री; कार्यकारणभावतादर्थ्याऽन्यतमाऽर्थोपष्टम्भकभेदसूचकधर्मविशेषाऽभावेऽपि स्वोपस्थित्या अन्यतमार्थनिर्णायकत्वे अन्यशब्दसन्निधिरिति विवेकः ।

यथा वा—

सूर्याया: वहतुः प्रागात् सविता यमवासृजत् ।
मघासु हन्यन्ते गावः फल्गुनीषु व्युह्यते ॥
ऋ० १०।८५।१३।। अथर्व० १४।१।१३।।

वहतुः विवाहः, रथः, कन्यायै पित्रा दीयमानं धनादिकं वा । गावो धेनवः, सूर्यरश्मयश्च । 'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्षदृष्टया स्त्रियाम्, पुंसि गौर्लिङ्गचिह्नशेफसोः" इत्यमरः । हन् हिंसागत्योः इति धातोः हन्यन्ते प्रेर्यन्ते वा । मघानक्षत्रदिवसेषु गावः सूर्यरश्मयः, हन्यन्ते हततेजस्का भवन्ति, सूर्येण चन्द्रमसं पृथिवीं प्रति वा प्रेर्यन्ते । फल्गुनीनक्षत्रदिवसेषु च विवाहा विधीयन्ते । अनेकार्थकस्य गोपदस्य शक्तिरौचित्या सूर्यरश्मिषु, वधगमनार्थकस्य हन्धातोश्च गमनाऽर्थे नियम्यते । गोवधपरकस्याऽपरार्थस्य अनौचित्यात् ।

नैषधीयचरितेऽपि—

विवस्वताऽनायिषतेव मिश्राः स्वगोसहस्रेण समं जनानाम् ।
गावोऽपि नेत्राऽपरनामधेयास्तेनेदमान्ध्यं खलु नान्धकारैः ॥
नैष० २२।३४।।

यथा वा—

समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो युनज्मि ।
सम्यञ्चोऽग्निं सपर्यताऽऽरा नाभिमिवाऽभितः ॥ अथर्व० ३।३०।६

युष्माकं जलपानस्थानमेकं भवतु । अन्नं भज्यते विभज्यतेऽस्मिन्निति भोजनस्थानमप्येकं भवतु । सम्यञ्चः=सम्यक् सह वा अञ्चन्तो यूयं नाभिं परितः स्थिताः अरा इव अग्निं=यज्ञाग्निम्, भगवन्तं, स्वकुलाग्रगण्यं वा सपर्यत=पूजयत । अहं युष्मान् सर्वान् एकेन योक्त्रेण

प्रमसूत्रेण संयुक्तान् करोमि। यथा योक्त्रेण बद्धा वलीवर्दा विरुद्धासु दिक्ष न धावन्ति तथा यूयमपि ऐकमत्येन सह सञ्चारिणो भवतेति तात्पर्यम्। 'योक्त्रं रथ-युगे वृषभयोर्बन्धनसाधनरज्जुः'। अत्रापि औचित्येन योक्त्रपदस्य शक्तिः प्रेमसूत्रे नियम्यते। ननु योक्त्रपदस्य कोशेषु प्रेम-सूत्ररूपो द्वितीयोऽर्थो न दृश्यते तत्कथमिदमुदाहरणमनेकार्थकपदानां संयोगादिभिरेकार्थनियमप्रकरणे संगतं स्यात् इति चेत्—काव्यप्रकाशे, साहित्यदर्पणे रसगङ्गाधरेऽपि च 'पातु वो दयितामुखम्' इत्यत्र दयिता-मुखकर्तृकरक्षणकर्मत्वाक्षिप्तनां सम्बोध्य पुरुषाणां त्राणं हि तस्याः सांमुख्येन (आनुकूल्येन) एव भवति, न तु मुखमात्रेण। वैमुख्ये तेन त्राणायोगात्। अतः 'त्राणाऽर्हत्वं वदनसांमुख्योभयप्रत्यायकस्य मुख-शब्दस्य' इत्यादि प्राचां वचनमाद्रियमाणैरेवेदमिह प्रदर्शितम्। येषां त्विह न रुचिस्तैरुदाहणान्तरं द्रष्टव्यम्। यद्यपि पण्डितराजेनाऽत्र वदनसांमुख्योभय (उभयार्थ) प्रत्यायकस्येति लिखितम्, तथापि द्वितीयो-ऽर्थोऽत्र लाक्षणिको नतु क्वापि वाच्य इति स्वयं सुधीभिर्विभावनीयम्। "मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि। सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्" इति मेदिनी। मुखपदस्य नानार्थेष्वेषु सांमुख्यं न दृश्यते।

अथ देशः—

देशस्तु ग्रामनगराऽन्तरिक्षभूतलादिकः।
अनेकार्थकशब्दस्याऽन्यतमार्थनियन्त्रकः ॥२७२॥
अम्बरे चन्द्र आभाति क्षितौ क्षितिपतिर्यथा।
सम्बन्धादम्बरेणाऽत्र चन्द्रस्य विधुवाचिता ॥२७३॥

"चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु" इति मेदिनीवचनाद् अनेकार्थकस्य चन्द्रपदस्य शक्तिरिह अम्बरदेशसन्बन्धेन विधौ नियम्यते।

यथा वा—

अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुहचिद् दिवेयुः।
अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥
ऋ० १।२४।१०॥

'ऋक्षः पर्वतभेदे स्याद् भल्लूके शोणके पुमान्। कृतवेधनेऽन्यलिङ्गो

नक्षत्रे पुंनपुंसकम्" इति मेदिनीप्रामाण्याद् भल्लूकाद्यनेकार्थकमपि ऋक्षपदमिह "उच्चा निहितासः" द्युलोके स्थिताः इति देशनिर्देशेन, नक्तं ददृश्रे इति कालभेदेन च नक्षत्राऽर्थे नियम्यते। ददृश्रे - दृशेर्लिटि 'इरयोरे' (पाणि० ६।४।७६) इति सूत्रेण इरे आदेशः। ददृश्रे = सर्वैर्दृश्यन्ते। निहितासः—'आज्जसेरसुक्' (पाणि० ७।१।५०)। दिवा = दिवसे। ईयुर्गच्छन्ति कुहचिदिति न ज्ञायते। वरुणस्य व्रतानि अदब्धानि वरुणदेवस्य नियमा अदब्धाः=न केनापि खण्डचन्ते। अत्र अदब्धानि वरुणस्य व्रतानीति तृतीयचरणस्यार्थोऽत्रशिष्टैस्त्रिभिर्निष्पाद्यते। तैर्विना सोऽसङ्गत एव भवेदिति काव्यलिङ्गमलङ्कारः। तदुक्तं साहित्यदर्पणे—'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्'।

अथ कालः—

वर्षाऽहोरात्रमासादिरूपश्च काल उच्यते।
सोऽप्यनेकार्थशब्दानामेकत्राऽर्थे नियामकः ॥२७४॥

दिवसे द्योतते हंसो द्विजराजो निशागमे।
हंसो दिवससम्बन्धादिह सूर्यः प्रतीयते ॥२७५॥

निशया सह सम्बन्धेनाऽत्र द्विजराजश्चन्द्रः। "दन्तविप्राण्डजा द्विजाः" इति द्विजपदस्याऽप्यनेकार्थता। तदुक्तं नैषधीये—'का नाम बाला द्विजराजपाणिग्रहाऽभिलाषं कथयदलज्जा ?

यथा वा—

मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्।
मायामू तु यज्ञियानामेताम् अपो यत्तूर्णिश्चरति प्रजानन् ॥
ऋ० १०।८८।६॥

नक्तं रात्रौ अग्निरेव भौतिकोऽग्निरेव भुवो मूर्द्धा भवति=मूर्धेव प्रधानप्रकाशको भवति। ततः प्रातः स एवाग्निः उद्यन् सूर्यो जायते उदयमवाप्नुवन् सूर्यरूपेण प्रकाशते। अथ एतां मध्यस्थानामपि देवतां विद्युद्रूपां यज्ञियानाम्=मिथः संयोगार्हाणां पदार्थानाम् मायामेव कर्मपरिणामं वा प्रजानन्=विज्ञानविदो जानन्ति। अथवा प्रजानन्निव स्वकर्तव्यं कर्म जानन्निवेत्यर्थः। स एव मध्यस्थानो देवः। तूर्णिः=नितरां शीघ्रगामी। अपश्चरति=मेघात्मकेषु जलेषु संञ्चारं समाचरति। अपः कर्माणि वा वृत्रवधादीनि चरति विधत्ते। "माया स्याच्छाम्बरीबुद्धयोः"

इति मेदिनी। तूर्णिः=त्वरमाणः इति निरुक्ते यास्कः (७।२७) 'वहि श्रिश्रु···त्वरिभ्यो नित्'(उणा० ४।५२)। एकैव सा शक्तिः समयभेदेन त्रिधा प्रकाशते। रात्रिसम्बन्धेनाग्निः, दिवससंबन्धेन सूर्यः, स एव जल-सम्बन्धेन मध्यमः। तथाहि—"अयमेवाऽग्निर्वैश्वानरः इति शाकपूणिः। विश्वानरावेते उत्तरे ज्योतिषी (विद्युत्सूर्यौ) वैश्वानरोऽयं यत् ताभ्यां जायते। कथं न्वयमेताभ्यां जायते ? यत्र वैद्युतः शरणं (स्वाश्रयम् मेघम्) अभिहन्ति यावदनुपात्तो भवति। मध्यमधर्मैव तावद् भवति। उदकेन्धनः शरीरोपशमनः। (स हि मध्यमो जलमिन्धनं समुद्दीपकं यस्य। शरीरस्य प्राणिदेहस्य च उपशामको मृत्युहेतुः) उपादीयमान एवाऽयं सम्पद्यते उदकोपशमनः शरीरदीप्तिः (अर्थात् विपरीतधर्मा)। अथ आदित्यात्—उदीचि प्रथमसमावृत्ते आदित्ये (ग्रीष्मर्तौ) कंसं वा मणिं वा (अवनतोदरमित्यर्थः) परिमृज्य प्रतिस्वरे (रश्मिसंग्रहकेन्द्रे—FOCUS) यत्र शुष्कगोमयमसंस्पर्शयन् धारयति तत् प्रदीप्यते। सोऽपि (सूर्योऽपि) अयमेव भौतिकोऽग्निरेव तदा सम्पद्यते।" (निरुक्ते ७।२३)। यो दिवि सूर्यः स एवान्तरिक्षेऽशनिः पृथिव्यां चाग्निरिति तात्पर्यम्।

अथ व्यक्तिः—

पुंस्त्रीप्रभृतिलिङ्गानि ज्ञायन्ते व्यक्तिसंज्ञया।
क्लीबे नभो वियद्वाचि तत्पुंसि श्रावणाऽर्थकम् ॥२७६॥

मित्रो भातीति पुलिङ्गे सूर्यवाचि च यत्पदम्।
मित्रं भातीति तत्क्लीबे सुहृदर्थे नियन्त्रितम् ॥२७७॥

"·· ···नभः क्लीबं व्योम्नि पुमान् घने। श्रावणघ्राणवर्षासु बिसतन्तौ पतद्ग्रहे॥" इति मेदिनीप्रामाण्यात् क्लीबे यत् नभः पदं व्योमवाचकं तदेव पुंसि श्रावणमासाद्यर्थकम्। "नभाः श्रावणिकश्च सः" इत्यमरः। नभ आदित्यो भवति नेता रसानां नेता भासां ज्योतिषां प्रणयोऽपि वा भनः एवं स्याद् विपरीतः" इति निरुक्ते (२।१४) यास्कः।

अथापि—

अभयं मित्रादभयममित्राद् अभयं ज्ञातादभयं परोक्षात्।

**अभयं नक्तमभयं दिवा नः, सर्वा आशा मम मित्रं भवन्तु ॥**
**अथर्व० १९।१५।६॥**

सर्वा आशाः=सर्वा दिशः, लक्षणया तत्र निवासिनो जना मम मित्रं=मम सुहृदः सन्तु। इह मित्रमदं नपुंसकलिङ्गकं सुहृदर्थे। किन्तु –

**अयं मित्रो नमस्यः सुशेवो राजा सुक्षत्रो अजनिष्ट वेधाः।**
**वयं तस्य सुमतौ यज्ञियस्याऽपि भद्रे सौमनसे स्याम ॥**
**ऋ० ३।५९।४॥**

देवता मित्रः। ऋषिः—गाथिनो विश्वामित्रः। छन्दः=त्रिष्टुप्।

'मित्रः प्रमीतेस्त्रायते। सम्मिन्वानो द्रवतीति वा। मेदयतेर्वा'। (निरु० १०।२१)। प्रमीतेर्मरणात् त्रायते। इति मित्रः। अमिचिमिदिशसिभ्यः क्त्रः (उणादि ४।१६५)।

अयमिति—एषः नमस्यः=सर्वैर्नमस्करणीयः। सुक्षत्रः= शोभनक्षत्रबलोपेतः। मित्रः सूर्यः, सूर्यसदृशप्रतापो वा। सुशेवः= सुखप्रदाता। वेधाः=प्रजानां भाग्यविधातेव। नः राजा अजनिष्ट= प्रजाभिः कृतवरणः सिंहासनमधिरूढः। तस्य=तथाविधस्य, यज्ञियस्य =राजसूयादियज्ञार्हस्य संङ्गमनयोग्यस्य वा सुमतौ शोभनमतौ भद्रे सौमनस्ये च वयं भवेम। अत्र पुंल्लिङ्गकं मित्रपदं सूर्यं सूर्यसदृशं वा राजानमाह।

तथा—

**मित्रो जनान् यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम्० ॥**
**ऋ० ३।५९।१॥**

मित्रः सूर्यः पुरोवातो वा ब्रुवाण इव आलपन्निव कृषकान् जनान् यातयति=कृष्यर्थं प्रेरयति। स एव वृष्टिकर्मणा पृथिवीं द्युलोकं च धारयति। स मित्रः अनिमिषा=निमेषशून्यया दृष्टयेव कृष्टीः= कर्षकान् अभिचष्टे। तस्मै मित्राय घृतवत् हव्यं जुहोत। 'यज्ञाद् भवति पर्जन्यः पर्जन्यादन्नसंभवः' इति भगवद्गीतायाम्। वृष्टयर्थं यज्ञं समाचरतेत्याशयः।

अथ स्वरः—

उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ।
नियतास्ते श्रुतौ तस्मान्निश्चितार्थप्रकाशकाः ॥२७८॥

अत एव पाणिनीयशिक्षायामुक्तम्—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

तद् विवृणोति—

इन्द्रस्य शत्रुरित्यत्र षष्ठीतत्पुरुषे कृते ।
इन्द्रशत्रुपदस्याऽन्त्यपदोदात्तत्वमीप्सितम् ॥२७९॥
असुरैस्तु स्वराऽज्ञानादाद्युदात्ततयेरितम् ।
बहुव्रीहिसमासेन विरुद्धार्थं तु तत्कृतम् ॥२८०॥
तेनेन्द्रः शत्रुरस्येतीन्द्रे हि शातनकर्तृता ।
प्राप्ता, वृत्रासुरस्तेनानुष्ठानेन स्वयं हतः ॥२८१॥

इन्द्रस्य शत्रुः शातयिता वृत्रासुरो वर्धतामित्यभिप्रायवद्भिरसुरैर्यज्ञः समारब्धः । किन्तु स्वरशास्त्राऽनभिज्ञैस्तैः षष्ठीतत्पुरुषसमासानुसारमन्त्यपदोदात्तत्वे चिकीर्षिते प्रमादवशात् इन्द्रशत्रुर्वर्धताम् इति पदमाद्युदात्ततयोच्चारितम् । तेन बहुव्रीहिसमासानुसारम् इन्द्रः शत्रुः शातयिता यस्येत्यभिप्रायेण तत्पदं विरुद्धार्थकमभवत् परिणामे च तेनानुष्ठानेन वृत्रासुरः स्वयमेव विनाशमवापेति पौराणिकः प्रवादोऽत्राऽनुसन्धेयः ।

ननु काव्येऽपि स्वरो विशेषार्थप्रतीतिकृदस्ति । 'मथ्नामि कौरवशतं समरे न कोपाद्०' इत्यादौ काक्वा कण्ठध्वनिभेदेन मथ्नाम्येवेति रूपविरुद्धार्थप्रतीतिरपलपितुं न शक्या । किंच रसविशेषे स्वरस्य विशेषस्य प्रयोगो भरतमुन्यभिमत इति चेत् सत्यम्, तथापि अनेकार्थस्य पदस्य एकार्थनियमनरूपं प्रस्तुतं कार्यं काक्वादिभिर्न विधीयते । 'संयोगो विप्रयोगश्च' इत्यादिकारिकयोः—'कालो व्यक्तिः स्वरादयः' इत्यादिपदेनाऽभिनयादेर्ग्रहणम् । यथा—एतावानस्य महिमा अतो ज्यायांश्च पूरुषः० इत्यत्र उभयोर्हस्तयोः पूर्णविस्तारेण निर्दिश्यमानस्य वस्तुनो महत्त्वातिशयो बोध्यते । अनेकार्थकपदानां स्वरभेदेन एकस्मिन्नर्थे नियमनं यदुक्तं तद्वेदे एव, न तु लौकिकसंस्कृतकाव्ये । तथा सति बहुषु

स्थलेषु श्लेषानङ्गीकारप्रसङ्गात् । काव्ये च श्लेषस्य चमत्कारकारकतया त्यक्तुमशक्यत्वात् ।

उक्तरीत्या अनेकार्थकस्य कस्यचिच्छव्दस्य निर्दिष्टस्वरूपैः संयोगादिभिरितरार्थप्रतिबन्धादेकस्मिन्नर्थे निर्धारितेऽपि वा अर्थान्तरप्रतीतिः क्वचिद् भवति न साऽभिधयासकृदर्थं प्रकाश्य तस्या विरत्वात्, न वा लक्षणया मुख्यार्थबाधादिहेतुत्रयाऽभावात् किन्त्वभिधामूलव्यञ्जनयैवेति स्फुटम् । यथा—

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्याऽनुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥

भद्रात्मन इत्यादि—कस्यचिद्राज्ञः स्तुतिप्रसंगे पठितत्वात् यस्येतिपदेन प्रकरणप्राप्तस्य यस्य नृपतेः करः पाणिः सततं दानसंकल्पपठनाय गृहीतस्य अम्बुनः सेकेन सुभगः शोभनोऽभूत् । कीदृशस्य तस्य राज्ञ इत्याह—भद्रात्मनः—भद्रः प्रशस्त आत्मा स्वरूपं वा यस्य तथाविधस्य, विशाला वंशस्य कुलस्य उन्नतिरुत्कर्षो यस्य तथा, दुरधिरोहा परैरनभिभवनीया च तनुर्यस्य, कृतः शिलीमुखानां शराणां संग्रहः सञ्चयश्च येन तथाविधस्य । अनुपप्लुता सन्मार्गादपरिभ्रष्टा गतिराचरणं यस्य तथोक्तस्य । पुनः कीदृशस्य ? परान् शत्रून् वारयतीति तादृशस्येत्यन्वयः । एवं प्रकरणबलान्नृपसम्बन्धिनि मुख्यार्थे निर्धारितेऽपि गजपरको य इतरार्थः प्रतीयते सोऽभिधामूलव्यञ्जनाव्यापारगम्य एव । अत्युच्चतयादुरधिरोहा तनुर्यस्य तस्य, विशाला पृष्ठवंशस्योन्नतिर्यस्य, कपोलतलगलन्मदधारया कृतः शिलीमुखानां भ्रमराणां संग्रहश्च येन, अनुपप्लुता समा गम्भीरा वा गतिश्च यस्य, एतद्विधस्य यस्य परवारणस्य उत्कृष्टगजस्य करः शुण्डादण्डः सततं दानाम्बुनः मदजलस्य सेकेन सदासुभगोऽभवदिति । इह भद्रात्मनः, विशालवंशोन्नतेः, कृतशिलीमुखसंग्रहस्य, परवारणस्य दानाम्बुसेकसुभगः—इत्याद्यनेकपदानामपरिवृत्तिसहत्वात् अन्वयव्यतिरेकाभ्यां शब्दस्य प्रधानता । अर्थाऽपरिवृत्तौ तेषां पदानां परिवर्तने श्लिष्टपदानि अपसार्य तस्यैवार्थस्य विभिन्नपदैः प्रतिपादने अभीष्टव्यङ्ग्यार्थहानात् । परस्तात्

व्यञ्जनया प्रतीयमानस्य गजपरकस्याऽर्थस्याऽप्यन्यत्र वाच्यार्थतयाऽस्य अभिधामूलकता च ।

यथा वा—

अष्टाचक्रा नवद्वारा देवानां पूरयोध्या ।
तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषावृतः ।।
अथर्व० १०।२।३१।।

प्रकृतसूक्ते पुरिशयनकारिणः पुरुषस्य शरीररचनायाः तत्र "**केन पार्ष्णी आभृते पूरुषस्य०**" (अथर्व० १०।२।१) इत्यारभ्य "**मूर्धानमस्य संसीव्याऽथर्वा हृदयं च यत्०**" (अथर्व० १०।२।२६) इत्यादिपर्यन्तं पार्ष्ण्यादिमूर्धान्तानाम् अवयवानाम् देहे तेषां यथास्थानमवस्थानस्य च वर्णनीयतया देवपदस्य शक्तौ इन्द्रियार्थे, पूःपदस्य च शरीरार्थे नियन्त्रितायाम् अपि मन्त्रस्य नगरबिशेषपरको योऽर्थो वलादिव प्रतीयते सोऽभिधामूलो व्यङ्ग्य एवेति दर्शयति ।

अष्टाचक्रा[1] अष्टसंख्याकानि ब्रह्मचक्रस्वाधिष्ठानादीनि योगशास्त्रेषु

---

१. प्रथमं ब्रह्मचक्रं स्यात् त्रिरावर्तं भगाकृति ।
अपाने मूलकन्दाख्ये कामरूपं च तज्जगुः ।।५।।
स्वाधिष्ठानं द्वितीयं स्याच्चक्रं तन्मध्यगं विदुः ।
पश्चिमाभिमुखं लिङ्गं प्रवालाकृतिसन्निभम् ।।६।।
तृतीयं नाभिचक्रं स्यात्तन्मध्ये भुजगी स्थिता ।
पञ्चाऽऽवर्ता महाशक्तिाश्चिद्रूपा विद्युदाकृतिः ।।७।।
चतुर्थं हृदये चक्रं विज्ञेयं तदधोमुखम् ।
ज्योतीरूपं च तन्मध्ये हंसं ध्यायेत् प्रयत्नतः ।।८।।
पञ्चमं कण्ठचक्रं स्यात्तत्र वामे इडा भवेत् ।
दक्षिणे पिङ्गला ज्ञेया, सुषुम्णा मध्यतः स्थिताः ।।९।।
षष्ठं तु तालुकाचक्रं घण्टिकास्थानमुच्यते ।
दशमद्वारमार्गं तु राजदन्तं च तज्जगुः ।।१०।।
भ्रूचक्रं सप्तमं विद्यात् बिन्दुस्थानं च तद्विदुः ।
भ्रुवोर्मध्ये वर्तुलं च ध्यात्वा ज्योतिः प्रमुच्यते ।।११।।

प्रसिद्धानि चक्राणि यस्यामिति बहुव्रीहिः। नव द्वाराणि श्रोत्रनेत्रघ्राण-मुखपायूपस्थरूपाणि यस्यां तथाविधेति पूर्ववद् बहुव्रीहिसमासः। श्रोत्रादीनां त्रयाणां प्रत्येकं द्वे द्वे, मुखादीनां त्रयाणां च प्रत्येकम् एकमेकमिति मिलित्वा नवद्वाराणि। "देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये" इति मेदिनी। उक्तलक्षणा देवानामिन्द्रियाणामावासभूता। पिण्डे श्रोत्रादीनीन्द्रियाणि ब्रह्माण्डगताऽऽकाशसूर्यादिदेवानां प्रतिनिधिभूतानीति वेदेषु बहुत्र प्रतिपादितम्। पूः पूर्यते तनुः। सा हि प्रतिक्षणं विघटनसंघटनशीलैः शरीरघटकैः कोशैः पूर्यते। "पूः शरीरे नगर्यां च" इत्यनेकार्थसंग्रहे श्रीहेमचन्द्राचार्याः। देवानाम् आवासादेव पूरयम् अयोध्या रोगादिभिरसुरैरयोधनीयाऽधर्षणीया भवति। यावदेते देवा अप्रमादाः इमां पालयन्ति तावन्न जरा रोगो मृत्युर्वा इमामभिभवितुमलम्। तस्यां पुर्यां हिरण्ययः हिरण्मयः, हिरण्यवर्णो वा। ज्योतिषावृतः जीवनज्योतिषा ज्ञानज्योतिषा वावृतः परिवारितः। स्वर्गः स्वर्गोपमः स्वर्लोकं गच्छति, साधकं स्वर्लोकं प्रति गमयति वेति तथाविधः कश्चित्कोशो ज्ञानमय आनन्दमयस्तदुभयात्मको वा सदा सन्निहितः। तत्रैव चात्मपरमात्मनोर्निवासः[1]।

---

अष्टमं ब्रह्मरन्ध्रं स्यात् परनिर्वाणसूचकम्।
तद् ध्यात्वा सूचिकाग्राभं धूमाकारं विमुच्यते ॥१२॥

नवमं ब्रह्मचक्रं स्याद् दलैः षोडशभिर्युतम्।
संविद्रूपा च तन्मध्ये शक्तिरूर्ध्वा स्थिता परा ॥१३॥

शार्ङ्गधरपद्धतिस्थ-योगप्रकरणात् उद्धृतानि पद्यानीमानि ॥

एतानि चक्राण्येव क्रमशः मूलाधार, स्वाधिष्ठान, मणिपूरा, ऽनाहत, विशुद्धाऽऽज्ञासहस्राराऽऽख्यानि। ननु वेदे चक्राणामष्टत्वमिह तु नवत्वमिति मिथो विरोधे कतरो गरीयानिति चेत् श्रुतिस्मृत्योर्विरोधे श्रुतिरेव बलीयसीति शास्त्रविदो वदन्ति। किंच शास्त्रेषु यच्चक्रनिरूपणं दृश्यते तत्साधकानां श्रद्धानुरोधेन क्वचिद् विकल्पते—"सुषुम्णायां सदाशक्तिश्चित्रा स्यान्मम वल्लभे। तस्यां मम मते कार्या ब्रह्मरन्ध्रादिकल्पना"। इति शिवसंहितायाः पञ्चमपटलस्य १६५ तमे पद्ये प्रतिपादितम्।

१. तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते।

एवं चक्रद्वारदेवाऽदिपदानाम् इन्द्रियाधिष्ठानभूतदेहपरकेऽर्थेऽभिधया नियन्त्रितेऽपि नगरपरकोऽपरोऽर्थः प्रतीयते। तथाहि—अष्टभिश्चक्रैर्वृत्ताकारैश्चतुष्पथैः, नवभिश्च महाद्वारैः सुशोभिता। देवानां विद्यादानसदाचारादिभिर्गुणैर्द्योतमानानाम्। देवो दानाद्वा दीपनाद्वा। द्युस्थानो भवतीति वेति निरुक्ते (७।१५) श्रीयास्कः। पूर्नगरी, अयोध्येति नाम। तस्यां हिरण्ययः हिरण्यरत्नादिमयः। स्वर्गः=स्वर्गोपमः। ज्योतिषावृतः रत्नानां कान्त्या नक्तन्दिवं भासमानः कोशो राजकोशः सन्निहित इति शेषः।

रूढिर्योगापहारिणीति नयेन अयोध्यादिपदानाम् अयोऽत्रनाऽऽर्हाऽदिरूपा यौगिकार्था रूढैर्नगरविशेषादिरूपैरर्थैर्बाध्यन्ते तस्माद् रूढार्थानामेव मुख्यत्वम् इति तु न वाच्यम्। अस्तु लोके रूढ्या यौगिकस्य बाधः, वेदे तु यौगिकार्थस्यैव मुख्यत्वम् इति रूढिप्रकरणे प्राक् (पृष्ठ १०६, १०७; कारिका १३५-१४१) प्रतिपादितमिति तस्याऽत्र पिष्टपेषणमसाम्प्रतम्।

अस्यां शाब्द्यां व्यञ्जनायां शब्दस्य प्रधानता अर्थस्य च सहकारिता।

तदाह—

**व्यङ्ग्याऽर्थावगतावस्यां शब्दस्यैव प्रधानता।**
**व्यञ्जकोऽसावतोऽर्थस्य तत्र तु सहकारिता ।।२८२।।**

पूर्वोक्तायाम् अभिधामूलव्यञ्जनायां प्रधानतया यद्यपि तस्यैव

---

**तस्मिन् यद्यक्षमात्मन्वत् तद्वै ब्रह्मविदो विदुः ।। अथर्व० १०।२।३२।।**

अयोऽराः=रागद्वेषमोहाः। एतैरवष्टब्धे जीवनमरणचक्रे जीवः पुनः पुनरावर्तते। अथवा स्थूलसूक्ष्मकारणशरीराणि एव अराः। त्रिप्रतिष्ठिते=त्रिषु सत्त्वरजस्तमोगुणेषु प्रतिष्ठिते। यक्षम्=ब्रह्म--"स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमाम् हैमवतीम्। तां होवाच किमेतद् यक्षमिति। सा ब्रह्मेति होवाच"। केनोपनिषद् खण्ड० ४,३,४। २५,२६ इन्द्रः आत्मा। आत्मन्वत् यक्षमेव, ब्रह्मविदो ब्रह्मेति विदुः। आत्मन्वत्=आत्मसदृशम्, चेतनत्वात्। अत एव—द्वा सुपर्णा सयुजा सखाया इत्युक्तम्। अथवा आत्मना सह स्थितम् समाने वृक्षे परिषस्वजाते० इति वचनात्।

व्यञ्जकत्वं तथाऽप्यसौ व्यङ्ग्योऽर्थः स्वप्रतीतौ वाच्यमर्थमपेक्षते इति तस्याऽप्यत्र सहकारिता। किंच 'सहितावेव शब्दार्थौ काव्यम्' इत्युक्तेस्तयोरन्यतरस्य मुख्यत्वेऽपरस्य सहकारिता स्ववं प्राप्ता भवतीत्युच्यते—

**सहितावेव शब्दार्थौ काव्यं प्राक्[1] प्रतिपादितम्।**
**तयोरेकस्य मुख्यत्वेऽपरस्य सहकारिता ॥२८३॥**

एवं शाब्दीं व्यञ्जनां निरूप्य अथ आर्थीं व्यञ्जनां प्रदर्शयति—

**वाच्यो लक्ष्यस्तथा व्यङ्ग्य इत्यर्थस्त्रिविधो मतः।**
**व्यापारोऽन्यार्थधीहेतुस्तस्यार्थी व्यञ्जनेष्यते ॥२८४॥**

तस्य त्रिविधस्य अर्थस्य यो व्यापारो वक्तृसम्बोध्यादिवैशिष्ट्याद् अपरमर्थं व्यनक्ति स आर्थी व्यञ्जनेति नाम्नाऽभिधीयते।

**वक्तृ-सम्बोध्य-तद्भिन्नविशिष्टव्यक्तिसन्निधेः**
**काक्वाः वाक्यस्य वाच्यस्य वैशिष्ट्याद् देशकालयोः।**
**प्रसङ्गस्याऽथवा सोऽर्थव्यापारोऽन्यार्थबोधकृत्**
**अत्रार्थस्य प्रधानत्वादार्थीयं व्यञ्जना मता ॥२८५॥**

परप्रतिपत्तये शब्दप्रयोक्ता वक्ता। यमभिलक्ष्य शब्दः प्रयुज्यते स सम्बोध्यः, स च प्रायेण मध्यमपुरुषरूपः। वाग्व्यापारविषयीभूता तत्र सन्निहिता परोक्षेण बोधनीया काचिद् व्यक्तिस्तृतीया, सा तु तस्यैव शब्दस्याऽन्यमेवाऽर्थं गृह्णाति। काकुः शोकभीत्यादिभिः कण्ठध्वनिभेदः। वाक्यं योग्यताकाङ्क्षासन्निधियुक्तानां पदानां समूहः। प्रस्तावः प्रकरणम्। देशो वननदीतीरयुद्धक्षेत्रादिः। कालो वसन्तशरदादिः। अर्थः वाच्यलक्ष्यव्यङ्ग्यरूपः। एषां वैशिष्ट्याद् अर्थस्य यो व्यापारः प्रतिभावतां सहृदयानां चेतसि अन्यम् अर्थं प्रकाशयति स हि अर्थस्य प्राधान्याद व्यङ्ग्यार्थप्रतीतेः प्रधानहेतुत्वाद् आर्थी व्यञ्जनेति नाम्नाभिधीयते। यथा गतोऽस्तमर्कः इति वाक्यं केनचित् सेनानायकेन गुप्तप्रदेशनिगूढान् स्वसैनिकान् प्रति कथितम्, वक्तृबोद्धव्यदेशकालवैशिष्ट्यात्—समुचितोऽयमवसरः शत्रावाक्रमणस्येति, केनचिद् गोपालकेन वने गाश्चारयता स्वसहचरान् प्रत्युक्तम्—संह्रियन्तां गावः, कालोऽयं वनाद् ग्रामं प्रति गन्तुमिति, गुरुकुलाश्रमे

1. द्र०—पृष्ठ १४, कारिका २।

गुरुणा स्वशिष्यान् उद्दिश्य अभिहितम्—अलं क्रीडित्वा, प्रत्यासीदति सन्ध्योपासनवेलेति, सार्थवाहेन स्वजनान् प्रति उदीरितम्—अलमग्रे गत्वा, रात्रौ विश्रामयोग्यमन्विष्यतां किमपि सुरक्षितं स्थानमिति तं तमर्थं वक्त्रादिवैशिष्ट्यात् प्रत्याययति ।

यथा वा—

**क्षेत्रं स्वकीयमपरेण कदर्थ्यमान-**
**मालोक्य कस्य हृदि नाम भवेन्न रोषः ।**
**अन्वेषयंश्चपलकन्दुकमत्र लुप्तं**
**क्रीडाऽधुना पुनरपीह निवारितोऽपि ॥**

स्वक्रीडाक्षेत्राऽभ्याशे उद्यानद्रुमेषु पक्वफलान्यालोक्य लालाक्लिन्न-वदनाभ्यां द्वाभ्यां छात्राभ्यां दुरभिसन्धिर्व्यधायि । तदनुसारम् एकः फलाहरणाय लुप्तकन्दुकान्वेषणमिषेण उद्यानं प्रविष्टः । द्वितीयः कदाचिदुद्यानपालागमनं सूचयितुं सावधानो बहिरेवाऽवस्थितः । अथ अचिरेण दूरादायान्तं क्षेत्ररक्षकं दृष्ट्वा द्वितीयो वदति—**क्षेत्रं स्वकीय-**मित्यादि । क्षेत्रं स्वकीयं केनचित्कदर्थ्यमानमालोक्य कस्य खलु चेतसि क्रोधो न जायेत । त्वं तु मया मुहुर्मुहुर्विनिवारितोऽपि अत्रैव क्रीडन-प्रवृत्त उद्यानदिशि कन्दुकं बलादभिहतवान् । तृणगुल्मादौ विलीनः स सम्प्रति दुर्लभ एव इत्यस्य वाच्यार्थः । स चार्थं उद्यानपाल आगच्छति तन्निवर्त्तस्वेति सुहृदं प्रति व्यनक्ति । वक्तृबोद्धव्यव्यतिरिक्तः तत्र सन्निहितः उद्यानपालो यद्यभिनवस्तर्हि तदुक्तेर्वाच्यार्थमेव गृह्णाति । यदि तु प्रतिदिनमेव तथाविधैश्छात्रैराकुलीकृतस्तर्हि शठाविमौ फलानि चोरयितुमागतौ अकाण्ड एव मामुपस्थितं विलोक्य कन्दुकाऽन्वेषणमि-षेण स्वदुष्कृत्यमपह्नुवाते इत्यपरमेवाऽर्थं जानाति । अत्र वक्तृ-सम्बोध्या ऽन्यसन्निधिदेशवैशिष्ट्यादार्थी व्यञ्जना । इह मुख्यार्थ-बाधाऽभावात् वाच्यार्थ एव व्यञ्जनामुत्थापयति न लक्षणाद्वारा ।

यथा वा—

देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥ वेणिसंहारे

अत्र वक्ता अश्वत्थामा। सम्बोध्यः कर्णः। परशुरामनिकृत्तक्षत्र-कुलकण्ठगलद्रुधिरपूरितह्रदा कुरुक्षेत्रसमरभूमिर्देशः। तत्रैव सन्निहितौ अन्यौ पुरुषौ कृपदुर्योधनौ। अत्र पुरा परशुरामेण क्षत्रियान्निहत्य तेषां शोणितपूर्णंह्रदेषु पितृतर्पणेन यथा पितुर्वैरप्रतिशोधो व्यधायि तथा मयापि पाण्डवकुलमुन्मूल्य स कर्तुं शक्यते इत्यश्वत्थामोक्तिर्वाच्योऽर्थः। एषां वैशिष्ट्येन परशुरामशापाद् दिव्यास्त्रप्रयोगाऽक्षमस्त्वं न महा-राजदुर्योधनस्य मनोरथं पूरयितुं शक्त इति कर्णं प्रति, द्रोणो न ममैव तातः प्रत्युत भवतोऽपि प्रियबन्धुरतस्तदपमानप्रतीकारो भवदभिम-तश्चेत् पितुरनन्तरं मामेव कौरवसेनापतिपदेऽभिषेक्तुं भवान् महाराजं प्रेरयत्विति कृपं प्रति, युष्मदीयबले पाण्डववंशविनाशाय केवलमहमेव क्षमो न कर्णः कश्चिदपरो वा, तस्माद् भवता स्वहितमिष्येत चेन्नाऽह-मुपेक्षणीय इति दुर्योधनं प्रति व्यञ्जनया व्यज्यते।

यथा वा—

पृथिव्या अहमुदन्तरिक्षमारुहम् अन्तरिक्षाद् दिवमारुहम्।
दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम्॥
यजु० १७।६७।

देवता—अग्निः। ऋषिः—विधृतिः। छन्दः—पिपीलिकामध्या बृहती।

पृथिव्या अहमिति—पृथिव्याः पार्थिवस्थूलविषयेभ्यः समुत्थाय स्वमनोवृत्तिमाकृष्य क्रमेणाहम् अन्तरिक्षं स्थूलविषयाऽभावेऽपि तत्सम्बन्धि चिन्तनप्रसूतमानसवासनानां लोकमारुहम्। साधकपक्षे आरोहेयमित्याकाङ्क्षा। सिद्धसम्बन्धे आरुढोऽहमिति सन्तोषः। 'अन्तरिक्षं कस्मात्? अन्तरा क्षान्तं भवति' इति निरुक्ते(२।१०)श्री-यास्कः। एतेन तत्रत्यविषयाणामपि अन्तःशून्यत्वमवगम्यते। तस्मात् समुत्थितोऽहं दिवं योगसाधनलब्धदिव्यभोगानां लोकम् आरोहेयम् आरूढो वेति पूर्ववत् साधकस्य सिद्धस्य च पक्षे यथायथं योज्यम्। कं सुखम्, न कम् अकम् दुःखमित्यर्थः। न अकं नाकः सुखम्। दुःखेन सर्वथाऽस्पृष्टम् आत्मानन्दरूपमित्यर्थः। अथवा न अकमस्मिन्निति बहु-व्रीहिः। आनन्दभिन्नमप्यानन्दबहुलम्, न तु सर्वात्मना आनन्दमयम्। रजस्तमसोरभिभवात् समुद्रिक्तायाः सत्त्ववृत्तेः प्राधान्यात् सुखबहुलं

सिद्धसम्बन्धे सत्त्ववृत्तेरपि क्षयात् स्वात्मानन्दरूपमात्रम्। तदुक्तं योगवार्त्तिके—"सत्त्वेनान्यतमे हन्यात् सत्त्वं सत्त्वेन चैव हि"। "युञ्जीत योगी निर्जित्य त्रीन् गुणान् परमात्मनि। तन्मयश्चात्मतो भूत्वा चिद्वृत्तिमपि संत्यजेत्"। तदुच्यते—

प्रकाशनार्थं दीपस्य शलाकायाः प्रयोजनम्।
कोऽर्थः सत्त्वशलाकाया आत्मदीपे प्रकाशिते॥

मन्त्रेऽस्मिन् वक्ता चिन्तको वा अग्निः। स हि ज्ञानाग्निना प्रकाशितान्तःकरणः साधकः सिद्धो वा। अतितप्तलोहपिण्डवल्लक्षणया सोऽग्निरुक्तः इत्यतिशयोक्तिरलङ्कारः। देशः—पृथिव्यन्तरिक्षद्यु स्वर्लोकाः। इह सामान्यस्य मानवस्य शरीरद्वारा अन्तरिक्षादिगमनं बाधितं, तेन एषा वैशिष्ट्याल्लक्षणया दृढभावनाया ध्यानस्य च महिम्ना तस्य एतस्माद् वासनालोकात् समुत्थानं प्रकाशात्मकेषु लोकेषु उत्तरोत्तरमूर्ध्वंगमनं च लक्ष्यते। तेन च क्रमशो दैहिकव्यक्तित्वविगलनात् तस्य शश्वदानन्दरूपसमवाप्तिर्व्यज्यते। यत्तु यज्ञकर्मणि—'एषां लोकानाम् (पृथिव्यन्तरिक्षादीनाम्) रोहेण सवानाम् (प्रातःसवनमाध्यन्दिनतृतीयसवानाम्) आरोहः समाम्नातः (निरुक्ते ७।२३) सूक्तविशेषान् पठन्तो याज्ञिका यजमानस्य तं तं लोकं प्रति गमनं वर्णयन्ति तदभिनयमात्रम्। यच्च वैज्ञानिकाश्चन्द्रयानादिद्वारा ऊर्ध्वंलोकान् गच्छन्ति जिगमिषन्ति वा तत्र भौतिके जगति मुख्यार्थस्यैवोपपन्नत्वान्न लक्षणाया व्यञ्जनाया वाऽवकाशः। किंच अयमेवार्थः प्रकारान्तरेण ऋग्वेदेऽप्युक्तः—

उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम्।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥ ऋ० १।५०।१०॥

उत् अन्तरिक्षलोकः उत्तरो द्युलोकः, उत्तमः स्वर्लोकः। उतमं ज्योतिः—भौतिके जगति सूर्यः, आध्यात्मिके तु आत्मा।

यथा वा—

अयं मे हस्तो भगवानयं मे भगवत्तरः।
अयं मे विश्वभेषजोऽयं शिवाऽभिमर्शनः॥ऋ० १०।६०।१२

देवता—हस्तः। ऋषिः—बन्धुश्रुतबन्धुप्रभृतयः। छन्दः—पङ्क्तिः। मन्त्रोऽयमथर्ववेदेऽपि दृश्यते।

प्राण्यङ्गमात्रस्य अचेतनस्य हस्तस्य भगवत्त्वं ततोऽप्यधिकतर-त्वं बाधितम्। तेनाऽत्र लक्षणा। सा वक्त्रादिवैशिष्ट्याद् व्यञ्जना-मुत्त्थापयति। वक्ताऽत्र कश्चित्कुशलो वैद्यः। सम्बोध्यो मृतप्रायः कश्चिद् रोगी। वैद्यस्य असामान्यं चिकित्साप्रावीण्यमात्मविश्वासः, रोगिणः सम्बन्धिजनानाम् आश्वासश्च व्यज्यते।

**अथ काकुः**—शोकभीत्यादिभिः कण्ठध्वनिभेदेन वाच्यार्थव्यति-रिक्तस्य कस्यचिद् अर्थस्य व्यञ्जनम्। यथा—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः।
विराटस्याऽऽवासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाऽद्यापि कुरुषु ?॥

वेणिसंहारे

इह काक्वा कुरुषु युधिष्ठिरस्य क्रोधो युक्तो ननु मयीति व्यज्यते।

यथा वा—

अभीदमेकमेको अस्मि निःषाड्
अभि द्वा किमु त्रयः करन्ति ?
खले न पर्षान् प्रतिहन्मि भूरि
किं मा निन्दन्ति शत्रवोऽनिन्द्राः॥

ऋ० १०।४८।७॥

देवता—इन्द्रः। ऋषिः—वैकुण्ठ इन्द्रः। छन्दः—जगती।

अभीदमेकमिति—अहम् एकः अन्यसाहाय्यनिरपेक्ष एव एकं शत्रुम् अभि अस्मि अभिभवामि। निःषाट् शत्रवो यथा निःशेषाः स्युस्तथा तान् सहते प्रतिकरोतीति तादृग्विधोऽहम् अथवा शत्रून् नितरां सहते निरुणद्धीति सः। द्वावप्यसह्यौ प्रत्यर्थिनौ अभिभवामि, त्रयोऽपि सहा-गता वा ते मे किमु कुर्वन्ति ? न किमपि कर्तुं शक्नुवन्तीति काक्वा व्यज्यते। अहं खले अन्ननिष्पादनस्थाने कृषकः पर्षान् गोधूमादि-स्तम्बानिव खले संग्रामे पर्षान् निष्ठुरान् शत्रूनपि भूरि प्रतिहन्मि। अनिन्द्राः इन्द्रविरोधिनस्ते शत्रव इन्द्रं माम् अत्यन्तसमिद्धतेजसं किं निन्दन्ति। इन्द्र इन्दतेर्वा इन्धतेर्वा अत्यन्तैश्वर्यशाली समिद्धतेजा वा।

अत्र विरोधितार्थे नञ् । "तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता । अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः ।" अत्र खलपर्षपदयोः श्लेषः । अत्र खलः संग्रामः सस्यनिष्पादनस्थानं वा । 'खलः खलतेर्वा स्खलतेर्वा । अयमपीतरः खलः (अन्नपूलकनिष्पादनस्थानम्) एतस्मादेव समास्कन्नो भवतीति' (निरुक्ते अ० ३ । खं१०) श्रीयास्कः । पर्षः परुषो निष्ठुरः शत्रुः अन्नपूलको वा । इह श्लेषानुप्राणिता उपमा ।

यथा वा—

**इच्छन्ति देवाः सुन्वन्तं, न स्वप्नाय स्पृहयन्ति ।**
**यन्ति प्रमादमतन्द्राः ॥** ऋ० ८।२।१८॥

देवता—इन्द्रः । ऋषिः—मेधातिथिः काण्वः, आङ्गिरसः प्रियमेधश्च । तथा सामवेदे मन्त्रसंख्या ७२१ ।

इच्छन्ति देवा इति—देवाः ज्ञानज्योतिषा दीप्यमानाः, अन्येभ्योऽपि स्वसञ्चितज्ञानसंपदः प्रदातारो वा सत्पुरुषाः । सुन्वन्तम्—यज्ञादिसत्कर्मसु सततत्परम्, तपसा वाष्पीकृतं ध्यानप्रणाल्या परिस्रुतं भगवतः सोमस्य भक्तिरसं हृदयभाजने स्रावयन्तम् । अथवा आत्मसरिति स्नान्तं जनम् इच्छन्ति कामयन्ते तेन सहावस्थानमिच्छन्ति । तदुक्तम् —"आत्मा नदी संयमपुण्यतीर्था सत्योदका शीलतटा दयोर्मिः । तत्राऽभिषेकं कुरु पाण्डुपुत्र न वारिणा शुध्यति चान्तरात्मा ।" ते स्वप्नाय निद्रायै निद्रालवे जनाय वा न स्पृहयन्ति । इदं तथ्यं मनोगतं कुर्वाणाः अतन्द्राः निरलसाः साधकाः, अपि कदाचित् प्रमादं यन्ति ? प्रमादं प्राप्नुवन्ति ? नेति काक्वा व्यज्यते । षुञ् अभिषवे । अभिषवः स्नपनं पीडनं, स्नानं सुरासन्धानं वेति सिद्धान्तकौमुद्यां श्रीदीक्षिताः । पौराणिकास्तु—'आदित्या ऋभवोऽस्वप्ना अमृता अमृतान्धसः' इत्यमरः इत्यनुसारम् देवाः कदाचिन्न स्वपन्तीति मन्यन्ते ।

अथवा—

**ईशा वास्यमिदं सर्वं यत् किञ्च जगत्यां जगत् ।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद् धनम् ॥**

यजु० ४।१॥

देवता—आत्मा । ऋषिः—दीर्घतमाः । छन्दः—अनुष्टुप् ।

ईशा वास्येति—जगत्यां पृथिव्यां लोकत्रये वा यत् किञ्च जगत

यावन्मात्रं स्थावरजङ्गमात्मकं पदार्थजातं विद्यते । जगत्पदेनात्र स्थावरस्याप्युपलक्षणम् । तावन्मात्रं सर्वमपि ईशा अस्य स्वामिना परमात्मना वास्यम् आच्छादनीयं व्याप्तं तदीयमेव न तवेति भावः । ईष्टे इतीट्, तेन ईशेति तृतीयान्तं पदम् । ईश ऐश्वर्ये धातोः क्विपि रूपम् । तेन तस्मात् कारणात् । त्यक्तेन भुञ्जीथाः त्यागभावनया परित्यक्तस्वस्वामिभावसम्बन्धपूर्वकम् अस्य भोगं कुरु । मा गृधः लोभं मा कार्षीः । इदं ममैवास्त्विति गृधि त्यज । त्यक्तेनेति त्यज् धातो र्भावे क्तप्रत्ययः । कस्यस्विद् धनं धनं कस्य स्वित् ? न कस्याऽपीति काक्वा व्यज्यते । स्विदिति निपातोऽनर्थको वितर्कद्योतको वा । वस आच्छादने धातोर्ण्यत्प्रत्यये वास्यम् ।

अथ वाक्यवैशिष्टचे व्यञ्जना । वाक्यमाकाङ्क्षायोग्यतासत्तियुक्तं पदजातम् । यत्र व्यङ्ग्यार्थप्रतीतावनेकसाकाङ्क्षपदानां योग आवश्यकः । यथा—

यूय वयं वयं यूयमित्यासीन्मतिरावयोः ।
किं जातमधुना मित्र यूयं यूयं वयं वयम् ॥

उत्तरवाक्ये अधुना-प्रयोगसाकाङ्क्षत्वाय पूर्वपदे तदापुरादिपदानामन्यतमस्य प्रयोगोऽपरिहार्यः । तस्मिन्नध्याहृते (पुराअधुनापदयोः प्रयोगात्) अनयोर्वैशिष्टचेन यदाहं धनधान्यवान् आसं तदा तव मयि निरतिशया प्रीतिरासीत् अधुना संपत्तिनाशे तु त्वं सर्वथैव मां विस्मृतवानसि । तेन तव प्रीतिर्मम धने एव आसीदिति व्यज्यते ।

यथा वा—

**तथा तदस्तु सोमपाः सखे वज्रिन् तथा कृणु ।**
**यथा त उश्मसीष्टये ॥** ऋ० १।।३०।१२।।

तथा तदिति—हे सोमपाः सौम्यानां जनानां पालक, वज्रिन् वज्रहस्तत्वात् दुष्टानां नियामक देव ! तव भक्ता वयम् इष्टये अभिलषितसिद्धये त उश्मसि त्वामेव कामयामहे, नान्यम् । यतस्त्वमेव सर्वेभ्य उत्कृष्टः प्रदातासि । अतस्त्वं तथा कृणु कुरु अस्माकमपि च तत्तथैवास्तु यथा वयं कामयामहे । वाचा शक्तेः परिमितत्वात् भक्तः स्वहृदि वर्तमानाः सर्वाः कामनाः शब्दैः प्रकटयितुमक्षमः । अत्र यथा-तथापदयोर्वैशिष्टचात् 'त्वं सर्वान्तर्यामी सर्वज्ञः सर्वशक्तिमांश्चासि तस्माद् वाचामविषयानपि ममाभिलाषान् त्वं पूरय' इति व्यज्यते ।

यथा वा—

**यथेमां वाचं कल्याणीमावदानि जनेभ्यः ।**
**ब्रह्मराजन्याभ्यां शूद्राय चार्य्याय च ।**
**स्वाय चारणाय च० ।। यजु० २६।२।।**

देवता—ईश्वरः । ऋषिः—लौगाक्षिः । छन्दः—स्वराडत्यष्टिः[1] ।

यथा अहम् ईश्वरः इमां कल्याणीं सर्वजनमङ्गलविधायिनीं वेदवाचं जनेभ्यः सृष्टयादावुत्पन्नेभ्योऽग्निवायुप्रभृतिभ्यः आवदानि उपदिष्टवानस्मि तथा यूयमपि इमां ब्रह्मराजन्याभ्यां ब्राह्मणेभ्यः क्षत्रियेभ्यः, शूद्राय च अर्याय च अन्त्यजेभ्यो वैश्येभ्यश्च, स्वाय च अरणाय च स्वजनेभ्यः परेभ्यश्च उपदिशत । 'अर्यः स्वामिवैश्ययोः' (पाणि० ३।१।१०३), 'अरणः अपार्णो भवति' (निरुक्ते ३।१) इति यास्कः। अपगतजलसम्बन्धः परकीय इत्यर्थः । अर्णं उदकनाम ।'अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्' इत्यमरः । मन्त्रस्यास्य प्रथमचरणे प्रयुक्तं यथेति पदं तावत्साकाङ्क्षं पूर्णार्थं च न भवति यावदुत्तरवाक्ये तथेति पदं प्रयुज्य तदनुसारं वाक्यं न पूर्येत । अत्र भगवान् वक्ता, अन्ये वेदविदः सम्बोध्याः । यथातथेत्यनेकपदयोरत एव वाक्यस्य वैशिष्ट्यात् वेदे मानवमात्रस्याधिकारो व्यज्यते ।

इत्थमभिधा लक्षणा व्यञ्जनाख्यास्तिस्रो वृत्तयो निरूपिताः । किन्तु अभिधया पदानामर्थेषूपस्थापितेष्वपि वाक्ये तेषां पदार्थानां मिथः कर्तृत्वकर्मत्वादिरूपसम्बन्धविनिश्चयाय मीमांसकानामेकेऽभिहितान्वयवादिनो भाट्टास्तात्पर्याख्यामपरां वृत्तिम् उररी कुर्वन्ति । तेषामयमाशयः—देवदत्तो ग्रामं गच्छतीत्युक्ते देवदत्त इति पदस्य तन्निरूपितव्यक्तिविशेषरूपः, तत्रस्थस्य सु-प्रत्यस्य कर्तृत्वरूपः, ग्रामपदस्य तन्निर्दिष्टगृहसमवायरूपः, तदनन्तरवर्तिनोऽम्प्रत्ययस्य कर्मत्वरूपः, गच्छतीति पदस्य वर्तमानकालिकी गमनानुकूला कृतिरिति चार्थो यद्यपि प्रतिस्विकतया पृथक् पृथक् प्रतीयते, तथापि 'देवदत्तनिष्ठा ग्रामकर्मिका वर्तमाना गमनानुकूला कृतिः, इतिरूपमन्वितमर्थमभि-

---

१. अत्र मन्त्रस्य यावतो भागस्य विवक्षा तावान् एवोद्धृतः । एतच्च 'च०' पदात् परं प्रयुज्यमानेन बिन्दुना द्योत्यते । छन्दस्तु यदत्र निर्दिष्टं तत्सकलस्य मन्त्रस्य ज्ञेयः ।

धातुं नाभिधा क्षमते, तस्याः पदार्थोपस्थापनमात्रेण प्रक्षीणशक्तित्वात्। अतस्तत्कृते काचिदपरा वृत्तिरवश्यमभ्युपेया सा, च तात्पर्याख्या। दृश्यते हि कदाचित्प्रतिपदमर्थावबोधेऽपि न वाक्यतात्पर्यावगमः। तदुक्तं साहित्यदर्पणे श्रीविश्वनाथैः—

तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने।
तात्पर्यार्थं तदर्थं च वाक्यं तद्बोधकं परे॥ सा० द० २।२०

एतद्विपरीतं प्रभाकरानुवर्तिनोऽपरे मीमांसकास्तु—'अन्वितान्येव पदानि प्रथमतोऽभिधीयन्ते अतस्तेषामनन्तरमन्वययोजनं तदर्थमपरावृत्तिश्च नाऽपेक्ष्यते' इत्याहुः। वाक्यं हि भाषाया मूलघटकं तच्च अन्वितमेव। बालकोऽन्वितैर्वाक्यैः 'देवदत्त गामानय,' 'गां बधान' 'अश्वमानय' इत्यादिरूपैर्भाषां शिक्षते, न अनन्वितैः पदैरिति प्राक् (द्र०—पृष्ठ ५०, कारिका ११८, तद्व्याख्या च) प्रतिपादितम्।

इति व्यञ्जनाप्रकरणं समाप्तम्।

## इति चतुर्थ उन्मेषः

# पञ्चम उन्मेषः

## ध्वनि-विमर्शः

चतुर्थोन्मेषे साङ्गोपाङ्गा व्यञ्जना निरूपिता । **अथ व्यञ्जना-लभ्यस्य अर्थस्य वाच्याऽर्थातिशायित्वे तस्य ध्वनित्वम् उत्तमकाव्यत्वं च** प्राचीनाचार्यैः श्रीमदानन्दवर्धनप्रभृतिभिर्यत् प्रतिपादितं तत् तेषु बहुमानात् प्राप्तावसरं प्रस्तूयते—

**प्राचीनाः प्राहुराचार्या आनन्दवर्धनादयः ।**
**ध्वनिं नामोत्तमं काव्यं व्यङ्ग्ये वाच्यातिशायिनि ॥१॥**

**अतादृशे पुनर्व्यङ्ग्ये तुल्ये हीनाधिकेऽथवा ।**
**मध्यमं तु गुणीभूतव्यङ्ग्याख्यं संप्रचक्षते ॥२॥**

इह प्रथमं ध्वनेरेव प्रासङ्गिकत्वाद् गुणीभूतव्यङ्ग्याख्यं मध्यमं काव्यं केवलनामतो निर्दिश्य प्रकृतमनुसरामः । ध्वन्यतेऽस्मिन्निति ध्वनिनामकम् उत्तमं काव्यम् । ध्वन्यत इति ध्वनिर्यस्त्वलङ्काररसादि-रूपोऽर्थः । ध्वनतीति ध्वनिः शब्दोऽर्थो वा । ध्वननं ध्वनिः शब्दा-देर्व्यापारविशेषः । एवं ध्वनिपदं प्रकरणानुसारमनेकार्थकम् ।

**अभिधा-लक्षणा-मूलतयाऽऽदौ द्विविधो ध्वनिः ।**
**विवक्षितेऽपि वाच्येऽर्थेऽन्यनिष्ठे सोऽभिधोत्थितः ॥३॥**

अभिधामूलो लक्षणामूलश्चेति ध्वनिः प्रथमं द्विविधः । अभिधा-मूलध्वनौ वाच्यार्थो विवक्षितोऽप्यन्यपरको यतः स प्रधानप्रतिपाद्यस्य व्यङ्ग्यार्थस्य रसभावादेर्वा प्रतीतौ अङ्गतां गच्छति । ध्वनेर्द्वितीयो भेदो लक्षणामूलो यत्र लक्षणामूलत्वादेव बाधितस्य वाच्यार्थस्य न विवक्षा ताद्रूप्येण वोपयोगः । अतः स क्वचित् स्वकीय एव विशिष्टार्थ संक्रान्तो भवति, क्वचिन्मुख्यार्थस्य सर्वथा हाने तस्य अत्यन्ततिर-स्कृतता वा । एवं लक्षणामूलोऽयं ध्वनिर्द्विविधः । अभिधाया मुख्य-वृत्तित्वाद् यद्यपि तन्मूलो ध्वनिरेव प्रथमं स्थानमर्हति, तथापि लक्षणा-

मूलयोर्ध्वनिभेदयोः स्वल्पविषयत्वाद् सूचिकटाहन्यायेन तयोरेव प्रथमं प्रतिपादनमुचितम् ।

तत्र लक्षणामूलध्वनेर्द्वौ भेदौ—

ध्वनौ तु लक्षणामूले वाच्यार्थो न विवक्षितः ।
संक्रान्तः स्वविशिष्टाऽर्थेऽत्यन्तं वा स्यात् तिरस्कृतः ॥४॥

अर्थान्तरसंक्रान्तो ध्वनिर्यथा—

ग्रसमानमिवौजांसि सदसा गौरवेरितम् ।
नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान् ॥
किरातार्जु० ११।७३॥

अत्र प्रथमः पुमानिति शब्दः पुरुषमात्रार्थकः द्वितोयस्तु श्लाघ्यः पुमानिति तद्गुणविशिष्टपुरुषार्थकः, अन्यथा पुनरुक्तिदोषापत्तिः ।

एवम्—

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥
काव्यप्र० ४।२३॥

इह संबोध्यस्य पुंसः पुरतः स्थित्यैव लभ्यत्वेऽपि 'त्वाम्' इति पदमनुपयुक्तं सद् विशेषतो ममोपदेशपात्रं त्वामिति, वक्तरि विद्यमानेऽपि अहमर्थकम् अस्मीति पदं तवाऽहम् अत्यन्तहिताभिलाषीति । एवं वच्मीति पदं सामान्यतया कथनमात्रपरमपि उपदिशामीति स्वरूपं स्वं स्वं विशिष्टमर्थं प्रति संक्रान्तम् । अस्मीति पदम् अहमर्थे तिङन्तप्रतिरूपकम् अव्ययं प्रसिद्धम् ।

यथा वा—

हत्वाय देवा असुरान् यदाऽऽयन्
देवा देवत्वमभिरक्षमाणाः ॥ ऋ० १०।१५७।४॥

देवता—विश्वेदेवाः । ऋषिः—भुवन आप्त्यः साधनो वा भौवनः । छन्दः—द्विपदा त्रिष्टुप् ।

हत्वायेति–देवास्तेजसा प्रदीप्ताः सुक्षत्रियाः । देवत्वं रक्षमाणाः शत्रुं विजित्याऽपि तत्र निरपराधप्रजाजनेषु स्त्रीषु च अत्याचारमन् कुर्वाणाः । असुरान् दुष्टशत्रून् हत्वाय निहत्य 'क्त्वो यक्' (पाणि० ७।

१।४७) यदा स्वदेशमायन् आगच्छन्ति तदा ते यथार्था देवाः उच्यन्ते। अत्र द्वितीयं देवा इति पदं विशिष्टदेवपरकत्वात् अर्थान्तरसंक्रमितवाच्यम् ॥

तथा—

**परं मृत्यो अनुपरेहि पन्थां यस्ते अन्य इतरो देवयानात्।**
**चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥**

ऋ० १०।१८।१॥

देवता—मृत्युः। ऋषिः—संकसुको यामायनः। छन्दः—त्रिष्टुप्।

परं मृत्यो इति —— मन्त्रेऽस्मिन् मृत्योः कश्चित् कल्पितोऽधिष्ठातृदेवश्चेतनव्यक्तिवत्[1] सम्बोध्यते, सर्वदेवमयः परमेश्वरो वा। तदुक्तम्—'..............................एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' (ऋ० १।१६४।४६)। हे मृत्यो! देवयानात्[2] मार्गात् इतरो भिन्नो यस्ते अन्य एव मार्गोऽस्ति पितृयाणाख्यः। परा अस्मत्पराङ्मुखः सन् त्वं तं मार्गम् अन्विहि अनुसर। जितेन्द्रिया योगिनो विद्वांसो हि देवाः। ते येन यानेन जीवनसरण्या यान्ति व्यवहरन्ति तद् देवयानम्। तेन पथा गच्छतो मृत्युंजयान् मृत्युर्न निहन्ति। ते हि स्वेच्छया देहं जहति भीष्मादिवत्। इतरेण पितृयाणाख्येन पथा गच्छतो भोगिनो मृत्युर्हन्ति। ते हि पुनः पुनर्म्रियन्ते जायन्ते च। हे मृत्यो! यतो हि त्वं चक्षुष्मान् शृण्वंश्चासि तस्मात् चक्षुष्मते शृण्वते च ते ब्रवीमि। किं ब्रवीमि? यत् त्वं नः प्रजां संततिपरम्पराम्

---

१. अचेतनेष्वपि चेतनवदुपचारो दृश्यते। तद्यथा—स्रस्तान्यस्य बन्धनानि, स्रस्यन्तेऽस्य बन्धनानि। महाभाष्य ४।१।३७॥ यु० मी०

२. अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।
एकया यात्यनावृत्तिमन्यया वर्तते पुनः ॥

भग० गीता अ० ८। श्लो० २४-२६॥

त्रयस्त्रिंशत्त्वेव देवाः इति। कतमे ते त्रयस्त्रिंशदिति? अष्टौ वसवः

वीरान् पुत्रांश्च मा रीरिषः मा हिंसीः ।। मृत्यौ चेतनव्यक्तित्वारोपे कृते तस्य विलोकनश्रवणशक्तिमत्त्वं नाऽनुपपन्नम् । इह चक्षुष्मते शृण्वते इति पदे न केवलं नेत्रवत्त्वं श्रवणवत्त्वमात्रमेव वाऽर्थं प्रतिपादयतः किन्तु तयोः प्रकर्षम् । अन्यथा प्रायः सर्वेषामेव प्राणिनां चक्षुरादिमत्त्वादिह तयोः पृथगुपादानं व्यर्थं स्यात् । एवं ब्रवीमीति पदमपि कथनस्य प्रार्थनारूपे स्वविशिष्टार्थे संक्रान्तम् ।

तथैव—

**तनूनपादसुरो विश्ववेदा देवो देवेषु देवः ।**
**पथो अनक्तु मध्वा घृतेन ।।** यजु० २७।१२।।

देवता—विश्वेदेवाः । ऋषिः—अग्निः । छन्दः—उष्णिक् ।

तनूनपादसुर इति– तनूनपादग्निरिति शाकपूणिः । नपाद् इत्यनन्तरायाः प्रजाया नामधेयम् । आपोऽत्र तन्व उच्यन्ते, तता अन्तरिक्षे । ताभ्य ओषधिवनस्पतयो जायन्ते । ओषधिवनस्पतिभ्य एषः (अग्निः) जायते' ।(निरु०८।५)। ओषधयः कस्मात्? ओषम् ऊष्माणं दधतीति । देहसम्बन्धादिह देहे स्थितस्य तापस्य नियतमात्रा जठराग्निर्वा तनूनपात् । स हि तनूं न पातयति पतनाद् रक्षतीत्यर्थः । अथवा—तनू+ऊन+पात् तन्वा ऊनं प्रतिक्षणं क्षीयमाणम् अंशं पाति पूरणात् पालयतीति । भुक्तैरोषधिवनस्पतिभिरेवाऽयमग्निर्देहे जन्यते धार्यते च । सोऽयं तनूनपात् असून् प्राणशक्तिं ददातीत्यसुरः । शक्तिदानाद् द्योतनात् क्षुधादेर्दीपनाद्वाऽयमग्निर्देवः । न केवलं देवः प्रत्युत देवेषु देवपदवाच्येषु सर्वेषु प्राणेन्द्रियादिष्वपि देवः विशिष्टो देवः । अस्यैव माहात्म्येन प्राणा बलवन्तः, इन्द्रियाणि च स्वव्यापारक्षमाणि । अयमेव चक्षुषो दीप्तेः मुखस्य च कान्तेः कारणम् । जठराग्निमान्द्ये सर्वं गात्रं मन्दायते ।

---

+एकादश रुद्राः+द्वादशादित्यास्ते एकत्रिंशत्+इन्द्रश्च+प्रजापतिश्चेति त्रयस्त्रिंशदिति । अष्टौ वसवः—अग्निः+पृथिवी+वायुः+अन्तरिक्षम्+आदित्यः+द्यौः+चन्द्रमाः+नक्षत्राणि चेति=८। रुद्राः—पुरुषे १० प्राणाः+एकादश आत्मा=११ । आदित्याः=द्वादश मासाः इन्द्रः+प्रजापतिश्च द्वौ=३३ ।
बृहदारण्यकोपनि०, अध्याय ३ । ब्राह्मण २,३,४।।

अयमेव विश्वं विविधमन्नपानादिकं[1] विन्दति आत्मसात्करोतीति विश्ववेदाः। उक्तविधोऽयं देवः, नः पथो मध्वा घृतेन च अनक्तु जीवनपथं माधुर्येण स्नेहेन च सिञ्चतु। स्वस्थो जठराग्निरेव मानवस्य देहमनसोरारोग्यहेतुः। अजीर्णग्रस्तो जनोऽकारणक्रोधी उग्रस्वभावश्च भवति। देवो देवेषु देवः इत्यत्र प्रथमं देवपदं द्युतिदानाद् दीपनाद्वा देहाऽग्निपरकम्। द्वितीयं सामान्यतया आत्माग्निप्राणेन्द्रियादिपरम्। 'देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये' इति मेदिनी। तृतीयं च तन्निरतिशयशक्तिकान्त्यादिप्रदानसमर्थस्य विशिष्टस्य देहाग्नेर्बोधकम्। तनूनपात्पदस्य व्युत्पत्तिः तन्वां देहे देहिभावमास्थाय न पततीति कर्तुमुचिता। इह देवो देवेषु देव इत्यत्र एकाधिकवर्णयोर्दकारवकारयोस्तेनैव क्रमेण असकृदावृत्त्या **वृत्त्यनुप्रासः**। किं च यज्ञमयं त्यागभावनया जीव्यमानं सुखिजीवनरूपं विषयं निगीर्य तस्य विषयिणा मधुना घृतेन च अभेदाऽध्यवसानादतिशयोक्तिरिति। ततश्चोभयोः शब्दार्थाऽलङ्कारयोः परस्परनैरपेक्ष्येण स्थितयोः **संसृष्टिः**।

तथा—

**ये देवा देवेष्वधि देवत्वमायन्**
**ये ब्रह्मणः पुर एतारो अस्य।**
**येभ्यो न ऋते पवते धाम किंचन**
**न ते दिवो न पृथिव्या अधि स्नुषु॥**

यजु० १७।१४।

देवता—प्राणः। ऋषिः—लोपामुद्रा। छन्दः—आर्षी जगती।

ये देवा देवेष्वधि०—मन्त्रस्यास्य देवता प्राणः। प्राणपदमिह देहात्मरहितप्राणानामसंभवाद् धर्मधर्मिभावसम्बन्धेन प्राणायामयोगाभ्यासादिभिः सम्यङ्नियन्त्रित-प्राणशक्तिं जनं लक्षयति। ये नियन्त्रितप्राणशक्तयो महात्मानः, देवेषु देवोचितविद्यादिसद्गुणसंपन्नेषु जनेष्वपि देवत्वं विशिष्टम् असामान्यं देवत्वमध्यायन् अधिगच्छन्ति अधिकुर्वन्ति वा। ये चास्य ब्रह्मणो ब्रह्मविदां समाजस्य जगतो वा पुर एतारः अग्रगामिनो भवन्ति, येभ्यो विना किमपि धाम स्थानं न पवते

---

१. अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणाऽपानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥
भगवद्गीता १५।१४।

पवित्रं न जायते। तथाविधा असाधारणप्रभावा महानुभावा न दिवः न द्युलोकादवतरन्ति, न पृथिव्याः न पृथिवीतलमुद्भिद्य निर्गच्छन्ति, न अधि स्नुषु पर्वतानां सानुषु सानुभ्यः प्रादुर्भवन्ति, प्रत्युत सामान्यजन-वत् मातुरेव गर्भाद् जन्म गृह्णन्ति। परस्तात् साधनया उद्योगेन च स्वसमुपार्जितगुणैस्तादृशं सर्वजनपूजनीयं महोच्चैः पदमवाप्नुवन्ति। 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः' इति मेदिनी। अत्रापि देव-पदं पूर्वमन्त्रवत् स्वीय एवाऽर्थान्तरे संक्रान्तम्। "स्नुः प्रस्थः सानुर-स्त्रियाम्" इत्यमरः। उव्वटमहीधरौ तु मन्त्रमिमं प्राणपक्षे योजयन्तौ —"ये देवाः प्राणाऽपानादयः पञ्च प्राणाः देवेषु इन्द्रादिषु अधिष्ठातृत्वेन देवत्वम् आयन् प्राप्ताः। इन्द्रादीनामपि प्राणा देवाः। ये अस्य ब्रह्मणः जीवस्य पुर एतारः। प्राणा हि प्राणिनां पुरःसुराः। किं च येभ्य ऋते यान् प्राणान् विना किंचन धाम किमपि शरीरं न पवते न चेष्टते इत्थं-भूता ये प्राणा देवास्ते पुनः क्वाऽऽसते ? तत्राह—ते प्राणरूपा देवा न दिवः दिवि स्वर्गे न सन्ति। पृथिव्याः पृथिव्यां भूमावपि च न। सप्त-म्यर्थे षष्ठ्यौ। किं तर्हि स्नुषु अधि 'स्नु प्रक्षरणे' स्नुवन्ति क्षरन्ति स्नूनि स्रोतांसि। चक्षुरादीनि प्राणायतनानि तेषूपलभ्यन्ते। तेषां स विशिष्टः प्रदेशः" इत्याहतुः। धातुपाठे 'स्नु प्रक्षरणे' रूपः कश्चिद् धातुर्नास्ति, स्नु प्रस्रवणे त्वस्ति। किन्तु मन्त्रे स्नु इति पाठदर्शनात् व्याख्येयं नातिरुचिरा प्रतिभातीति विपश्चितः स्वयं प्रमाणम्।

अथ यत्र प्रकृते सर्वथाऽनुपपन्नत्वाद् वाच्यार्थोऽत्यन्ततिरस्कृतो भवति तं **लक्षणमूलध्वनेर्द्वितीयं भेदं प्रस्तौति**—

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सखे सदा सुखितमास्स्व ततः शरदां शतम्॥
काव्यप्रका० ४।२४॥

अपकारिणं प्रत्युक्तानि उपकृत-सुजनता-सुखितादीनि पदानि मुख्यार्थबाधात् स्वमर्थं सर्वथा परित्यज्य **विपरीतलक्षणया** अपकृत-दुर्जनता-दुःखिताद्यर्थान् लक्षयन्ति।

यथा वा—

सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति नरास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥ ध्वन्यालोके०

पृथिव्यां सुवर्णमयपुष्पाणाम्, केनचिज्जनेन तेषां चयनस्य चाऽनुपपत्तेः, शूर-कृतविद्य-सेवाविचक्षणैरनायासेनैव प्रचुरधनोपार्जनं लक्ष्यते, तत्प्रकर्षव्यञ्जनं च गूढं फलम्। "सुवर्णपुष्पिताम्" इति पदम् अत्र काञ्चनकुसुमवतीति रूपं स्वमुख्यमर्थं सर्वथा तिरस्कृत्य विपुलैश्वर्यरूपे अर्थान्तरे संक्रान्तं भवति।

एवम्—

पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलेग्रहिः।
शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताः॥

ऐतरेयब्राह्मणे ७।१५॥

जङ्घयोः पुष्पित्वमनुपपन्नम्। तेन भ्रमणशीलस्य श्रमरतस्य अप्रमादिनः पुंसः सर्वत्र कृतकृत्यत्वं व्यज्यते। तथा पाप्मनां शयनक्रियाकर्तृत्वं न संभवति। उक्तं तु तत् पाप्मनां निष्क्रियत्वं व्यनक्ति। पाप्मपदमपि पापरूपं स्वमुख्यमर्थं परित्यज्य पापफलं दुःखभोगं लक्षयति।

यथा वा—

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्॥

ऋ० १०।७१।५॥

देवता—ज्ञानम्। ऋषिः—बृहस्पतिराङ्गिरसः। छन्दः—त्रिष्टुप्।

उत त्वमिति—उत त्वम् अप्येकं विद्वांसम्। सख्ये विदुषां समाजे। अथवा निमित्तार्थे सप्तमी। तेन सख्यार्थमित्याशयः। वाक्सम्बन्धादेव विदुषां सख्यं भवति। स्थिरपीतं गुरुरूपाद् ह्रदाद् आकण्ठं स्थिरं पीतं ज्ञानजलं ज्ञानाऽमृतं वा येन तथाविधम् आहुः। एनं च वाजिनेषु वाचामिना ईश्वरा वाग्मिन इत्यर्थः तेषु। 'इनः पत्यौ नृपाऽर्कयोः' इति मेदिनी। अथवा, अर्था एव वाचामीश्वरा मुख्या इत्यर्थस्तेषां कृते वाचां प्रयोगात्। तेषु वाजिनेषु सूक्ष्मार्थतत्त्वनिरूपणेषु। अन्ये अतादृशा अव्युत्पन्नाः। एनं न हिन्वन्ति नानुगच्छन्ति। विमर्शनीयेषु गढार्थेषु स यावद् दूरं गच्छति, न ते तावद् दूरं गन्तुं शक्नुवन्ति इति व्यतिरेकालङ्कारः। यः पुनरिमां वाचम् अफलाम् अपुष्पां शुश्रुवान् तदर्थज्ञानं विना फलपुष्पविवर्जिताम् इव श्रुतवान्, स मायया बहु वाचा-

लतया श्रोतृषु पाण्डित्यभ्रमोत्पादिकया अधेन्वा गोसदृश्याऽपि अगवा निष्फलयेत्यर्थः। अतएव छलमय्या सह इतस्ततश्चरति। धेनुर्धयते-र्धिनोतेर्वेति निरुक्ते (११।४२) श्रीयास्कः। सा न भवतीति अधेनुः[1]। अदोग्ध्री कामानाम्। उक्तं हि निरुक्ते—'अफला अस्मै अपुष्पा च वाग् भवति वा, किंचित्पुष्पफलेति वा। अर्थं वाचः पुष्पफलमाह। याज्ञदैवते पुष्पफले, देवताऽध्यात्मे वा' (निरु० १।२०)। अधेन्वा इत्यत्र सादृश्यार्थे नञ्। सादृश्यं हि तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्। वाचि पुष्पफलयोर्बाधात् तज्जन्यं ज्ञानं विदुषां समाजे तस्य शोभार्थं धनादिलाभार्थं च न भवतीति पुष्पफलपदाभ्यां व्यज्यते। मन्त्रस्यो-त्तरार्धे अर्थज्ञानविहीना वाग् अधेनुरिति कथनेन अर्थज्ञानयुक्ता वाग् विपुलदोहा धेनुरिवेत्युपमालङ्कारध्वनिः। इह पुष्पफलशब्दौ वाक्-सम्बन्धे स्वमुख्यमर्थं सर्वथा तिरस्कृत्य कीर्तिशोभाधनलाभादिरूप-मर्थान्तरं लक्षयतः। किंच स्थिरपीतम् इत्यत्र ज्ञानसम्बन्धे पीतमिति पदमपि स्वमर्थं मुखद्वारा जलादेस्तरलपदार्थस्य उदरस्थीकरणरूपं व्यापारं परित्यज्य बुद्धौ सम्यक् प्रतिष्ठापनरूपेऽर्थान्तरे परिणतम्। पीतपदप्रयोगादिह ज्ञानस्य अनुक्तेन जलादिना उपमानोपमेयमानो-ऽवगम्यते।

अपि च—

**यो जागार तमृचः कामयन्ते, यो जागार तमु सामानि यन्ति।**
**यो जागार तमयं सोम आह, तवाऽहमस्मि सख्ये न्योकाः॥**
ऋ० ५।४४।१४॥

देवता—विश्वेदेवाः। ऋषिः—काश्यपोऽवत्सारः। छन्दः—त्रिष्टुप्।

---

१. कामान् दुग्धे विप्रकर्षत्यलक्ष्मीं, कीर्ति सूते, दुष्कृतं या हिनस्ति।
शुद्धां शान्तां मातरं मङ्गलानां धेनुं धीराः सूनृतां वाचमाहुः॥
भवभूतिकृतोत्तररामचरिते॥

तथा—

गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः।
दुष्प्रयुक्ता पुनर्गोत्वं, प्रयोक्तुः सैव शंसति॥ श्रीदण्डिनः काव्यादर्शे।

यो जागारेति—यः खलु जनो जागार स्वाध्यायादिषु स्वकर्तव्यकर्मसु सर्वदा सावधानः, तम् ऋचः ऋग्वेदप्रतिपादिता विषयाः कामयन्ते अनायासेनैव तच्चेतसि प्रकाशन्ते। यो जागार तम् उ तमेव सामानि यन्ति प्राप्नुवन्ति। यो जागार तमेव अयं सोमः प्रभुराह यत् सर्वेषु कार्येषु सकटेषु वा अहं तव सख्ये मित्रभावे वर्तमानः न्योकाः निश्चितम् ओको गृहम् आश्रयो वा यस्य तथाविधोऽस्मि। सदा त्वयि तव समीपे एव वर्ते। न त्वां कदाचिदप्यहं निराश्रयं मुञ्चामि। "ओक आश्रयमात्रे च मन्दिरे च नपुसकम्" इति मेदिनी। इह जागारपदं निद्राक्षयरूपं स्ववाच्यार्थं सर्वथा तिरस्कृत्य सावधानरूपेऽर्थान्तरे संक्रान्तम्। ऋचां कामनाक्रियाकर्तृत्वं न संभवति तेन 'कामयन्ते' इति पदमपि बुद्धौ स्थिरतां प्राप्नुवन्तीति रूपे ऽर्थान्तरे संक्रान्तम्।

यथा वा—

**कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः।**
**गोजिद् भूयासमश्वजिद् धनञ्जयो हिरण्यजित्॥**

अथर्व० ७।५०।८॥

देवता—इन्द्रः। ऋषिः—अङ्गिराः। छन्दः—अनुष्टुप्।

कृतं मे इति—मम दक्षिणे वामेतरे क्रियाकुशले वा हस्ते कृतं कर्मसामर्थ्यं पुरूषार्थो वा तिष्ठति। मम सव्ये दक्षिणेतरे हस्ते जयः सर्वत्र साफल्यरूपः फललाभ आहितो धृतः। स्वयं मम करप्रणयीव अल्पश्रम-इत्यर्थः। इह कृतं जयश्चेति शब्दावपि पूर्ववत् स्वमुख्यमर्थं तिरस्कृत्य अर्थान्तरं लक्षयतः। "कृतं युगेऽलमर्थे स्याद् विहिते हिंसिते त्रिषु।" "—(जयः) अग्निमन्थे ना जयन्ते, विजये च युधिष्ठिरे।" इत्युभयत्र मेदिनी।

यथा वा—

**यदग्ने स्यामहं त्वम्, त्वं वा घा स्या अहम्।**
**स्युष्टे सत्या इहाऽऽशिषः॥** ऋ० ८।४४।२३॥

देवता—अग्निः। ऋषिः—विरूप आङ्गिरसः। छन्दः—गायत्री।

यदग्ने—हे अग्ने! 'अङ्गं नयति सन्नममानः' (निरुक्ते ७।१४) आत्माङ्गतां नयति निविशमान इति भौतिकाग्निः परमात्मा वा। पर-

मात्मा यस्याऽऽत्मनि प्रवेशं करोति तमात्मसात्करोति । तथाविध हे भगवन् ! तव कृपया यदि कदाचिदहं त्वं स्याम्, त्वदभिन्नस्त्वदीयभूयोधर्मविशिष्टः सच्चिदानन्दस्वरूपः स्याम्, त्वं च अहम् मदभिन्नो भूयसा मदीयधर्मा अल्पज्ञसुखदुःखभोक्ता संसारी जीवः स्याः—संसारी जीव इव स्या इति लुप्तोपमा । तर्हि तव भक्तस्य मम विषये तवाशिषः शुभकामनाः सत्याः स्युः । भक्तानां पीडां त्वं भक्तो भूत्वैव अनुभवितुं क्षमः तदैव च तेषां पीडा प्रतीकाराय समुद्यतः स्याः। स्फुटितविपादिकः पुमानेव विपादिकावतः पुंसः पीडां वेत्ति नेतरः ।

अत्र प्रथमपादगतं त्वमिति पदं मध्यमपुरुषैकवचनरूपं स्वमर्थं सर्वथा परित्यज्य सच्चिदानन्दपरमात्मरूपमन्यमर्थम्, तथा द्वितीयपादगतम् अहम् इति पदम् उत्तमपुरुषैकवचनरूपं स्वमुख्यमर्थं सुखदुःखभोक्तृ–संसारि–जीवरूपम् अन्यमेवाऽर्थं लक्षयति । तयोरतिशयश्च व्यज्यते, तस्मादिदं **लक्षणामूलस्य अत्यन्ततिरस्कृतवाच्यस्य ध्वनेरुदाहरणम्** ।

एवं लक्षणामूलस्य अविवक्षितवाच्यध्वनेर्द्वौ भेदौ निरूप्य, विवक्षितेऽपि वाच्येऽर्थे तस्मिन्नन्यनिष्ठे व्यङ्ग्याऽर्थपरके सति अभिधोद्भवो ध्वनिर्भवतीति (पञ्चमोन्मेषस्य तृतीयकारिकायाम्) यदुक्तं प्राक् तदधुना प्रपञ्च्यते—

**अभिधामूलो ध्वनिः—**

**लक्ष्याऽलक्ष्यक्रमव्यङ्ग्यत्वाद् द्विभेदोऽभिधोत्थितः ।**
**लक्ष्यव्यङ्ग्यक्रमः पूर्वोऽलक्ष्यव्यङ्ग्यक्रमः परः ॥५॥**

**प्रतीयमानः क्रमशो व्यङ्ग्याऽर्थो यत्र लक्ष्यते ।**
**घण्टाटङ्कृत्यनुस्वानवत् स लक्ष्यक्रमो मतः ॥६॥**

घण्टायां वाद्यमानायां तदीयटङ्कारात्मकप्रधानशब्दश्रवणाऽनन्तरं यथा क्रमशो मन्दमन्दतरमन्दतमा अनुस्वानझङ्कारादिपदाऽभिधा काचिदनुरणनपरम्परा सुचिरं श्रुतिगोचरी भवति तथा यस्मिन् काव्ये वाच्यार्थप्रतीत्यनन्तरं कश्चिदन्योऽपि सूक्ष्मसूक्ष्मतरसूक्ष्मतमोऽर्थः प्रतीयते स हि **संलक्ष्यक्रमव्यङ्ग्याऽऽख्योऽपरो ध्वनिभेदः** ।

'व्यङ्ग्याऽर्थो यत्र लक्ष्यते॰' इत्यत्र लक्ष्यत इति पदं केवलप्रतीत्यर्थकं न तु लक्षणावृत्त्या प्रतीयत इत्यभिप्रायकम् । स हि तस्य

द्वितीयोऽसंलक्ष्यक्रमव्यङ्ग्यनामा भेद इत्युच्यते—

**असंलक्ष्यक्रमव्यङ्ग्ये त्वाशुभावितया क्रमः ।**
**छेदवत्पद्मपत्राणां लाघवान्नैव लक्ष्यते ॥७॥**

न संलक्ष्योऽनुभवगोचरो व्यङ्ग्यार्थस्य प्रतीतेः क्रमो यत्र तस्मिन् रसभावादिप्रधाने काव्यभेदे कार्यस्य रसादिप्रतीतेर्हेतुः विभावाऽनुभावादिप्रतीतिरेव । कार्यप्रतीतिश्च कारणप्रतीतेरव्यवहितोत्तरकालभाविनीति तत्र केनचित् क्रमेण अवश्यं भवितव्यम् । तथापि शताधिकानां पद्मपत्राणां सूच्या छेदे यथा लाघवात् सच्छेदक्रमो न लक्ष्यते तथाऽत्र रसादिप्रतीतौ विद्यमानोऽपि क्रमः प्रतीतेरविषयः । अतएवाऽयं ध्वनिभेदोऽसंलक्ष्यक्रमव्यङ्ग्य इत्युच्यते ।

अथ कोऽसौ इति जिज्ञासायाम्—

**रसभावादिकः सर्वोऽप्यसंलक्ष्यक्रमो ध्वनिः ।**
**अगण्योऽवान्तरैर्भेदैरेकभेदोऽभिधीयते ॥८॥**

अनयोर्हि संलक्ष्यक्रमाऽसंलक्ष्यक्रमव्यङ्ग्यसंज्ञयोरभिधामूलध्वनिभेदयोः द्वितीयोऽसंलक्ष्यक्रमव्यङ्ग्यो ध्वनिः रसभावादिरूपः । तत्र रसः शृङ्गारहास्यकरुणादिभेदैरनेकविधः । शृङ्गाररसस्थायिभावस्य रतेः कदाचिद् देवादिविषयत्वे तु भावः । सोऽपि देवगुरुमातृभूम्यादिगतत्वाद् भावोदयभावप्रशमभावसन्धिभावशबलत्वाच्च बहुतरविधः । एषां चैकैकोऽपि रसादिः स्वीयाऽवान्तरैर्भेदैरनन्तप्रकारकः । एवं तेषां प्रकाराणामगण्यत्वाद् यद्यपि विपश्चिद्भिः स एक भेद एवोक्तस्तथापि स बहुप्रपञ्चः । अतोऽल्पतरप्रपञ्चतया संलक्ष्यक्रमव्यङ्ग्य एव प्राङ्निरूपयितुमुचितः ।

अथ संलक्ष्यक्रमव्यङ्ग्यो ध्वनिस्तस्य त्रयो भेदाश्च उच्यन्ते—

**[[1]संलक्ष्यक्रमः शब्द]स्य शक्त्याऽर्थस्याऽथवा द्वयोः ।**
**उत्थितस्तत्प्रधानत्वात् त्रिविधो भवति ध्वनिः ॥९॥**

अयं संलक्ष्यक्रमव्यङ्ग्यो ध्वनिः क्वचिच्छब्दस्य, क्वचिदर्थस्य, क्वचित् तयोरुभयोः संयुक्तशक्त्या समुत्थित इति त्रैविध्यं भजते । यद्यपि शब्दशक्तिसमुत्थिते तस्मिन् अर्थो न सर्वथोदासीनो, न च अर्थशक्तिकृतात्मलाभे तस्मिन् शब्दः सर्वथा निर्व्यापारस्तथापि 'प्राधा-

१. कोष्ठान्तर्गतः पाठः पूर्वमुद्रणे त्रुटित उपलभ्यते । यु० मी०

न्येन हि व्यपदेशा भवन्ति' इति न्यायेन यत्र अपरिवृत्तिसहत्वाच्छब्दस्य प्राधान्यं तस्य ध्वनेः शब्दशक्तिमूलता, यत्र शब्दस्य परिवृत्तिसहत्वाद् ध्वनेरर्थमुखप्रेक्षिता तत्र तस्य अर्थशक्तिमूलता, यत्र तु केचन शब्दा अपरिवृत्तिसहा इतरे तु न, तत्र द्वयोः शक्त्योर्योगात् तस्य उभयशक्तिमूलता । अस्मिन् शब्दशक्त्युत्थिते ध्वनौ व्यङ्ग्योऽर्थः क्वचिदलङ्काररूपः, परत्र स वस्तुमात्ररूप इति द्विविधः । तदुच्यते—

**अलङ्कारोऽथवा वस्तु शब्दशक्त्योद्भवेद् यदि ।**
**वस्त्वलङ्काररूपत्वाद् द्विविधः शब्दशक्तिजः ॥१०॥**

शब्दशक्ति-जातः पूर्वोक्तोऽभिधामूलो ध्वनिः व्यङ्ग्यार्थस्य क्वचित् सामान्यवस्तुमात्ररूपत्वात्, परत्र तस्य अलङ्काररूपत्वाद् द्विविधः ।

ननु अलङ्कारस्याऽपि वस्तुत्वाऽनपायात् कथमिदं द्वैविध्यमिति चेत् ? सत्यम् । तथापि काव्ये अलङ्कारो यादृशं चमत्कारमादधाति न तादृशं वस्तु । काव्योद्याने हि यद्यलङ्काराः कुसुमवत् तर्हि वस्तु किसलयवदिति सहृदयजनसंवेद्यम् । अनुप्रासोपमादयोऽलङ्काराः परिमिताः परिगणिताश्च, तद्व्यतिरिक्तं वर्ण्यं वस्तुमात्रम् । अलङ्कारव्यतिरिक्तस्य वस्तुनो विशदबोधोऽलङ्कारज्ञानाऽनन्तरमेव संभवतीति प्रागलङ्कारध्वनिः प्रदर्श्यते—

निरुपादानसंभारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥
काव्यप्र० ४।५७॥

निर्गत उपादानानां चित्रपटवर्णकतूलिकादीनां संभारो यस्मात् । अथवा निर्गतश्चित्रकर्मणे आवश्यकानाम् उपादानानां संभारो यथा स्यात् तथा, जगदेव चित्रम् आलेख्यकर्म, चित्रम् अद्भुतं जगत् । "आलेख्याश्चर्ययोश्चित्रम्" इत्यमरः । अभित्तावेव कुड्यादिरूपचित्राधाराद्यभावेऽपि तन्वते विरचयते, कलाश्लाघ्याय चन्द्रस्य कलया प्रशंसनीयस्वरूपाय तस्मै शूलिने शिवाय नमः । प्रासङ्गिकत्वाच्छिवपरके वाच्यार्थे कला चन्द्रस्य षोडशो भागः । चित्रकारपरके व्यङ्ग्यार्थे तु कला चित्रकर्मकौशलम् । शिवपरके वाच्यार्थे चित्रम् अद्भुतम् । चित्रकारपरके व्यङ्ग्यार्थे तु चित्रम् आलेख्यम् । लौकिका हि चित्रकारा

उपादानसाहाय्येनैव भित्त्यादौ चित्रं रचयन्ति, शूली तु तं विनेति, तेभ्यस्तस्य महिमोत्कर्षव्यञ्जनाद् व्यतिरेकाऽलङ्कारोऽत्र व्यङ्ग्यः। इह चित्रमिति कलेति च पदयोरपरिवृत्तिसहतया ध्वनेः शब्दशक्ति-मूलता।

यथा वा—

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो।
अहितः सहितः साधु यशोभिरसतामसि॥

काव्यप्र० ४।५६॥

शत्रुमित्रयोर्हर्षं क्रमेण द्यसि खण्डयसि ददासि चेति हर्षद प्रभो त्वं समितः संग्रामात् प्राप्तैरुत्कर्षैर्विजयादिजन्यैः, अमितः अपरिमित-प्रभावः सन् असतां दुर्जनानां दमनात् तेषाम् अहितो नाशकोऽसि। समिदिति युद्धनाम। "समित्याजिसमिद्युधः" इत्यमरः। साधु यशोभिः सत्कर्मप्रभवैः श्रेष्ठैर्वा यशोभिः सहितश्चाऽसि। तथा त्वम् अमितः न मितः परिमाणरहितः, समितः मितेन परिमाणेन सहितोऽसीति विरोधः। माङ् माने धातोर्भवि क्तः। एवम् अहितो हितेन रहितः, सहितः हितेन युक्तोऽसीति विरोधः। आपाततः प्रतीयमानोऽयं विरोधश्च प्रथमव्याख्यया परिह्रियते। पद्येऽस्मिन् विरोधसूचकस्य 'अपि' प्रभृतिपदस्याऽभावाद् इह विरोधो व्यङ्ग्यः।

अपि च—

**स संनयः, स विनयः, पुरोहितः स सुष्टुतः स युधि ब्रह्मणस्पतिः।**
**चाक्ष्मो यद् वाजं भरते मती धनाऽऽदित् सूर्यस्तपति तप्यतुर्वृथा।**

ऋ० २।२४।९॥

देवता—ब्रह्मणस्पतिः। ऋषिः—गृत्समदः। छन्दः—निचृज्जगती।

स संनय इति—स हि संनयः शोभनो नयो नीतिर्यस्य तथाविधोऽस्ति। स विनयः मूर्तो विनय इव। इह विनय-विनयवतोरभेदप्रतिपादनात् तस्मिन् विनयाऽतिशयो व्यज्यते। स कर्मठत्वात् सर्वमङ्गल-कर्मसु जनैः पुरःस्थापित इति पुरोहितः। स सुष्टुतः सुशीलता-सदाचारविद्यादिभिर्गुणैः सर्वैः सम्यक् स्तुतः। युधि संग्रामे च शौर्याति-शयाद् ब्रह्मणस्पतिः लोकनायकः। स चाक्ष्मः चष्टेः क्षमतेर्वा सर्व-द्रष्टा, सर्वसह स्पष्टवक्ता वा। यत् यस्मात् कारणात् यदा वा स मती

मत्या विवेकपूर्वकं कृतेन सुशासनेन वाजं ज्ञानम् अन्नपानादिकं वा सकलसंभारम्। धना धनानि च प्रजासु भरते बिभर्ति तस्मात् कारणात् आद् इत् तदनन्तरं वा तस्य राज्ये तप्यतुः सूर्यो वृथा तपति तपनशीलो भानुर्वृथैव तपति। सूर्येण संपादनीयेषु अन्धकारनिवारण-सुभिक्षादिकार्येषु तेनैव कृतेषु सूर्यस्याऽपि प्रयोजनं नास्ति, तस्मात् स वृथैव तपति। राजनि दीप्यमाने सूर्यस्य वैयर्थ्यप्रतिपादनाद् इह **प्रतीपालङ्कारः**। 'प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्, निष्फलत्वाऽभिधानं वा प्रतीपमिति कथ्यते ॥' (साहि० द०, परि० २०, कारि० ८७)॥ किं च स हि संनयः शोभनो नयो यस्येति तथा विगतो नयो यस्मादिति विनयश्चेति विरोधः। परिहारस्तु समयानुसारं विविध-प्रकारको विशिष्टो वा नयो यस्येति। अत्र विरोधसूचकस्य अपि प्रभृतिपदस्याऽभावात् विरोधालङ्कारो व्यज्यते इत्य**लङ्कारध्वनिः**।

यथा वा—

**वसोः पवित्रमसि शतधारं,**
**वसोः पवित्रमसि सहस्रधारम्।**
**देवस्त्वा सविता पुनातु**
**वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः।**
यजु० १।३॥

देवता—सविता। ऋषिः—परमेष्ठी प्रजापतिः। छन्दः—भुरिग्-जगती।

वसोः पवित्रमिति—दर्शयागप्रसंगे पयसः शोधनसाधनीभूतेन दर्भ-मयेन पवित्रेण तच्छोधनकर्मणि मन्त्रस्यास्य विनियोगात् तत्परक आधिभौतिकोऽर्थो याज्ञिकानां धियं प्रथममधिरोहति। तथाहि—वास-यति स्थापयति वृष्ट्यादिभिर्विश्वमिति वसुर्यज्ञः। तदुक्तम्—'यज्ञो वै वसुः'। इह वसुपदेन यज्ञस्य हविर्द्रव्यं क्षीरं लक्ष्यते इति श्रीमहीधरः। हे दर्भमय पवित्र! त्वं वसोः इन्द्रदेवतानिवासभूतस्य यज्ञसाधनस्य पयसः शोधनोपकरणमसि। द्वौ कुशौ कुशत्रयं पवित्रमुच्यते इति मही-धरः। "......पवित्रं वर्षणे कुशे। ताम्रे पयसि च क्लीबम्, मेध्ये स्यादभिधेयवत्" इति मेदिनी। तद्द्वारा शोध्यमानं पयः शतधारं सहस्रधारं वा भूत्वा पात्र्यां पतति, तेन सम्बन्धेन पवित्रमपि शतधारं सहस्रधारं चोक्तम्। तत ऋत्विक् पवित्रमभिलक्ष्य ब्रूते—सविता

सर्वप्रेरकः सर्वस्य प्रसविता वा देवः, सुप्वा सम्यक् पुनातीति तेन सम्यक् शोधयित्रा, वसोः शतधारेण पवित्रेण यज्ञस्य साधनीभूतेन, त्वा त्वया क्षीरमिदं पुनातु। अथ स यजमानं दोग्धारं वा ब्रवीति—इह वर्तमानानां बह्वीनां होमधेनूनां मध्ये अद्य त्वं कां कतमा गाम् अधुक्षः दुग्धवानसि ?

वसुपवित्रादीनि पदानि संस्कृतसाहित्ये अनेकार्थकानि। तथा हि—'वसून् वदन्ति तु पितॄन्, रुद्रांश्चैव पितामहान्। प्रपितामहाँश्चादित्यान् श्रुतिरेषा सनातनी' (मनुस्मृ० ३।२८४)। 'पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनम्। तदस्य वसवोऽन्वायत्ताः। प्राणा वाव वसवः। एते हीदं वसयन्ति' (छान्दोग्योप० प्रपा० ३, ख० १६)। वसुभिरधिष्ठितानां प्राणानां सम्बन्धेन आयुषः प्रथमभागे वर्तमानो मानवोऽपि वसुः। पवित्रमिति पदं च मेदिनीकोशप्रामाण्यादनेकार्थकम्। निरुक्तेऽपि पवित्रपदस्य अनेकेऽर्थाः[1] प्रदर्शिताः। तथापि यज्ञप्रकरणगतत्वाद् वसुप्रभृतिपदानां यज्ञतत्क्षीरशोधकोपकरणविशेषादिष्वर्थेषु अभिधया निर्धारितेष्वपि मन्त्रस्याऽस्य अध्यात्मसम्बन्धी परोऽप्यर्थः प्रतीयते। तथाहि—वसुः साधकः, पवित्रं तदीयमभ्यासवैराग्यनिगृहीतं मनः, सविता सत्कर्मसु प्रेरकः सद्गुरुः परमात्मा वा। हे मनः त्वं वसोः साधकस्य, शतधारं सहस्रधारं वा पवित्रमसि। शतसहस्रपदे बहुत्वार्थके। मेघस्येव नद्या इव वा अतिभूयस्यो धाराः प्रवहणमार्गा यस्य तच्छतधारं सहस्रधारं वा। अथवा, अपरिमितं धारणसामर्थ्यं यस्य तत्। तदुक्तं शिवसंकल्पसूक्ते—'यस्मिन् ऋचः साम यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः। यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु' (यजु० अ० ३४। मन्त्र ५)। सविता देवः शतधारेण सहस्रधारेण बहुधारणशक्तिमता सर्वतोमुखेन वा सुप्वा सम्यक्शोधनसाधनेन त्वया पवित्रेण, वसोः साधकस्य वाचं कर्म च पुनातु। यतः कश्चित् सुमना एव किं युक्तं किमयुक्तम्, किं वक्तव्यं किमवक्तव्यम्, किं करणीयं किम-

---

१. पवित्रं पुनातेः। मन्त्रः पवित्रमुच्यते। येन देवाः पवित्रेणात्मानं पुनते सदा० (सामवेद ५।२।८५)। रश्मयः पवित्रमुच्यन्ते (गभस्तिपूतः० यजु० ७।१ इत्यादि)। द्र० निरु० अध्या० ५। खं० ६॥

करणीयं वेति पवित्रेण मनसा संशोध्य तत्र प्रवर्तते नेतरः। तदुक्तम्—'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधि वाचि' (ऋ० १०।७१।२)। 'सहस्रधारपवित्रपदस्य मानवमनस्परकत्वसमर्थकं मन्त्रान्तरमपि कोविदानां विनोदाय स्यादिति तद् उद्ध्रियते—'सहस्रधारे वितते पवित्र आ वाचं पुनन्ति कवयो मनीषिणः। रुद्रास एषामिषिरासो अद्रुहः स्पशः स्वञ्चः सुदृशो नृचक्षसः'[1] (ऋ० ९।७३।७)। हे वसो ! त्वं काम् (गाम् इत्यध्याहार्यम्) यस्य गुरोर्गां गिरम् अधुक्षः दुग्धवानसि ? कस्माद् गुरोस्त्वया ज्ञानमयं पयः पीतम् ? अत्राऽपि आधिभौतिकाऽऽध्यात्मिकाऽर्थयोरुपमानोपमेयभावव्यञ्जनाद् **उपमालङ्कारो ध्वन्यते**। वसुपवित्रशतधारसवित्रादीनि पदान्यपरिवृत्तिसहानि तेनाऽयं ध्वनिः शब्दशक्तिमूलः।

'यथा पिण्डे तथा ब्रह्माण्डे' इति न्यायानुसारं ब्रह्माण्डमण्डले मनसः प्रतिनिधिश्चन्द्रः स हि वसोः सर्वस्य आवासयितुर्भगवतोऽम्बरतलेऽवलम्बमानं धवलं पवित्रं येन स क्षीरसागरपरिपूरणायेव सूर्यस्य प्रखरान् मयूखान् परिपूय ज्योत्स्नाव्याजेन शतशः क्षरन्तीभिः सुशीतलाभिः क्षीरधाराभिरिव विश्वमाप्लावयति। शरदः शुक्लपक्षक्षपासु हृदय-

---

१. ये कवयः क्रान्तदर्शिनः, मनीषिणः मनसः स्वामिनो जनाः, वितते विस्तृते बहुज्ञे उदारे वा सहस्रधारे विपुलधारणाशक्तिमति, पवित्र सत्याऽसत्यविवेचनक्षमे मनोमये पवित्रे स्वां वाचम् आपुनन्ति शोधयन्ति परिष्कुर्वन्ति वा, एषाम् एतादृशानां सुमनसां कृते रुद्रासः प्रकृत्या रौद्रा अपि जनाः। इषिरासः कामयमानाः तान् प्रति स्नेहशीलाः सख्याभिलाषिण इत्यर्थः। अद्रुहः द्रोहरहिताः, स्पश, वशवर्तिनः (इति श्रीसायणः) स्पश ग्रहणसंश्लेषणयोः इति धातो रूपम्। स्वञ्चः शोभनव्यवहारा वा, सुदृशः सौम्यदर्शनाः, नृचक्षसः पुरुषगुण परीक्षकाश्च भवन्ति। ये जना मनसा संशोध्य वाचं प्रयुञ्जते तान् प्रति रौद्रप्रकृतयोऽपि पुरुषाः निजक्रूरतां विहाय स्नेहशीला भवन्तीति भावः। इषिरा इषिरेण ईषणेन एषणेन वा अर्षणेन वेति निरुक्ते (अध्या० ४। खं० ७) श्रीयास्कः। इषु इच्छायां धातोः 'इषि-मदि-मुदि-खिदि-छिदिभिदिमन्दिचन्दितिपिमिह-मुहि-मुचि-रुचि-रुधि-बन्धि-शुषिभ्यः किरच्' (उणा० १।५१) इत्यौणादिकसूत्रेण किरच्प्रत्यये साधुः।

हारि दृश्यमिदं पश्यतः प्रथमोपस्थितं पूर्ववर्णितम् एकम् उभावपि वाऽर्थौ च स्मरतो वैदिकर्षेश्चित्रं कश्चित्तृतीयोऽप्यर्थश्चुम्बति । तथाहि —हे चन्द्र ! त्वं वसोः सूर्यमयूखानां शतधारं क्षरदनन्तधारं पवित्रं तन्नामकं शोधनोपकरणमसि । त्वं वसोः सूर्यस्य सहस्र-धारं पवित्रमसि । वसुः सूर्यस्त्वया स्वरश्मीन् संशोध्य ज्योत्स्नारूपेण च तान् परिणमय्य धरण्यां विकिरति । स सविता देवः सूर्यः परमात्मा वा सुप्वा त्वया जगत्पुनातु । हे चन्द्र त्वं सूर्यस्य अनन्तरश्मीनां मध्ये कां गां कतमं रश्मिराशिम् अधुक्षः स्वमण्डले गृहीतवानसि ? "वसु-र्मयूखाऽग्निधनाधिपेषु" इति विश्वः । इह वसुपदे जातावेकवचनम् । मन्त्रस्याऽस्य यथाप्रसङ्गं प्रथमप्रतीतोऽर्थोऽभिधया, इतरावर्थौ तयो-स्तेषां वोपमेयोपमानभावश्च शब्दशक्तिमूलव्यंजनयाऽवगम्यते ।

यथा वा—

**विधु दद्राणं समने बहूनां युवानं सन्तं पलितो जगार ।**
**देवस्य पश्य काव्यं महित्वाऽद्या ममार स ह्यः समान ॥**
ऋ० १०।५५।५॥

देवता—इन्द्रः । ऋषिः—बृहदुक्थो वामदेव्यः । छन्दः—त्रिष्टुप् ।

विधुं दद्राणमिति—श्रीयास्को मन्त्रमिमम् (निरुक्ते अध्या० १४। खं० १८)[1] अधिदैवताऽध्यात्मपक्षयोर्द्विधा व्याचष्ट[2] । तथाहि—"विधुं विधमनशीलशीलम्, दद्राणं दमनशीलम् । युवानं चन्द्रमसं पलित आदित्यो गिरति । सद्यो म्रियते (चन्द्रः) । सः (सूर्यः) दिवा (समु-दिता ?) समुदेतेत्यधिदैवतम्" । "अथाऽध्यात्मम्—विधुं विधमन-शीलम्, युवानं महान्तम् (महत्तत्वस्य विकारम् अन्तःकरणं मनो वेति

---

१. सूर्यस्य प्रकाशे चन्द्रः सद्यो म्रियते निलीयते । स सूर्यो दिवा दिवसे समुदिता समुदयकर्ता भवति, निरुक्तपाठस्य अध्यात्मपक्षे योजना—रात्रौ शयन-दशायां मतो म्रियते । सुषुप्तौ आत्मनि निलीनं तन्निर्व्यापारं तिष्ठति । आत्मा तु रात्रिसमुदेता रात्रावपि सुषुप्तिदशायामपि जीवनोपयुक्ताः श्वासोच्छ्वा-सादिकाः क्रियाः प्रवर्तयन् जागर्त्येव ।

२. अस्मन्मते तु निरुक्तकारोक्तः प्रथमोऽर्थ आधिदैविकः, अपरोऽध्यात्म-परः । यु० मी०

कर्मपदम् )। पलित आत्मा। गिरति रात्रौ म्रियते (रात्रिः समुदिता ?) रात्रौ समुदेतेत्यात्मगतिमाचष्टे"।

संस्कृतसाहित्ये कोशेषु च विधुपदस्य चन्द्रार्थे प्रसिद्धत्वात् प्राक् चन्द्रपरक एवाऽर्थः पाठकस्य चेतसि समुन्मिषति। 'विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे' इति विश्वः। समने संग्रामे तमःप्रकाशयोः संघर्षे बहूनां तपसां नक्षत्राणां वा दद्राणं विद्रावणम्। युवानमपि सन्तम्, कृष्णपक्षोत्तरार्धे रात्र्याः परभागे अचिरोदितम् अत एव युवानम्। अथवा शुक्लपक्षक्षपासु प्रत्यहं प्रवर्धमानतेजसम् अन्ते च षोडशकलाभिः पूर्णं तस्मात्तरुणं विधुं चन्द्रम्। विध्यति तमांसीति व्युत्पत्या। "पृभिदिव्यधिगृधिधृषिहृषिभ्यः (कुः) इत्यौणादिकेन (उणा० १।२३) सूत्रेण व्यध-धातोः कुप्रत्यये साधुः। पलितः वृष्ट्यादिभिर्जगत्पालक आदित्यः स्वतेजसा जगार निगिरति। अथवा, अमावास्यायां स तं निगिरति। अमा सह वसतः सूर्याचन्द्रमसावस्यामित्यमावास्या। तदा नभसि सन्नपि चन्द्रमाः सूर्यतेजसाऽभिभूतो न प्रकाशते। देवाः सूर्यरश्मयस्तदा तं तद्रूपं पिबन्ति आत्मनि विलयं नयन्ति। हे मानव देवस्य जगत्स्रष्टुर्भगवतः काव्यं काव्यवच्चमत्कारकारकं दृश्यमिदं पश्य। तस्य भगवतो महित्वा महिम्ना यश्चन्द्रो ह्यः गतदिवसे कृष्णचतुर्दश्यां समान जिजीव, अद्य दर्शदिवसे ममार मृतो न प्रकाशते इत्यर्थः। समान संपूर्वकस्य अन प्राणने धातोर्लिटिरूपम्। ह्यो हीनः कालः श्वः उपाशंसनीयः कालः इति निरुक्ते (अध्या० १। खं० ६) श्रीयास्कः। गतो दिवसो मानवस्य हस्तान्निर्गत इत्येव तस्य हीनत्वम्। आगामिदिवसस्य सदुपयोगो मानवेन कर्तुं शक्यत इत्येव तस्य उपाशंसनीयत्वम्।

एवमभिधावृत्त्या चन्द्रपरके वाच्यार्थे प्रथममुपस्थापितेऽपि अध्यात्मपरको परोऽर्थो विपश्चितां चित्तं चुम्बति। देहे हि चन्द्रस्य प्रतिनिधिर्मनः, तदेवाऽत्र विधुनाम्ना निर्दिष्टम्। 'चन्द्रमा मनसो जात०' (ऋ० १०।९०।१३) 'चन्द्रमा मनो भूत्वा हृदयं प्राविशत्' (ऐतरेयोपनिष० खं० २-३)। दद्राणं नितरां द्रवणशीलम् अतिचञ्चलमित्यर्थः। समने जीवने। सम्यग् अननमस्मिन्निति व्युत्पत्तेः। बहूनामिन्द्रियाणां परिचालकम्। येनेन्द्रियेण यदा मनसो योगस्तदा तस्यैव विषयं द्रष्टा गृह्णाति। युवानं यौति मिश्रीभावमुपगच्छति इन्द्रियै-

विषयैश्चेति तथाविधम् । प्रबलमपि मनः, पलितो वृद्धः स्वजीवन-यात्रायाम् अनेकयोनिभिः संचरमाणः देहेषु मृतेष्वपि स्वयममृत अत-एव पुराणः । अथवा ज्ञानेन साधनया च पलितः शुक्लः परिशुद्धः । "पलितं जरसा शौक्ल्यम्" इत्यमरः । आत्मा तत् जगार निगिरति स्ववशे स्थापयति । एवं च यन्मनः ह्यः समान पूर्वमतिचञ्चलं प्रबलं चासीत् साधनानन्तरं तदेवाद्य आत्मनो महिम्ना ममार मृतवन्निष्क्रियं जातम् ।

यथा वा—

**अनेजदेकं मनसो जवीयो नैनद् देवा आप्नुवन् पूर्वमर्शत् ।**
**तद् धावतोऽन्यानत्येति तिष्ठत् तस्मिन्नपो मातरिश्वा दधाति ।**
यजु० ४०।४॥

मन्त्रेऽस्मिन् परमात्मसत्त्वं निरूप्यते । एकम् अद्वितीयं स्वसदृश-द्वितीयरहितं केवलमित्यर्थः । 'एके संख्यान्तरे श्रेष्ठे केवलेतरयोरपि' इति मेदिनी । अनेजद् अचलम् । एजृ गतौ कंपने चेति धातोः शतरि रूपम् । मनो हि जवनं तत्तु ततोऽपि जवनतरम् इति जवीयः । जव-शब्दादियसुनि साधु । देवा मनश्चक्षुःप्रभृतयः, पूर्वं प्रागेव अर्षत् गतं तत् न आप्नुवन् प्राप्तुं ज्ञातुं न शक्नुवन्ति । अतिसूक्ष्मत्वात् तस्य । तिष्ठदपि तद् अन्यान् मनःप्रभृतीन् देवान् धावतोऽपि अत्येति अति-क्रम्य गच्छति । प्रलयानन्तरं निरुपाधिकं ब्रह्मरूपम् अपहाय जगत्-सिसृक्षया सगुणत्वमापन्ने सति तस्मिन् जायमानेषु च जीवेषु मात-रिश्वा प्राणवायुः जीवेषु अपः कर्मशक्ति दधाति । अथवा पूर्वकल्प-कृतमदृष्टरूपेण अवस्थितं जीवानां शुभाशुभकर्मजातं सक्रियं करोति ।

यदेव अनेजत् तदेव जवीय इति परस्परविरुद्धयोर्गुणयोर्धर्मयोर्वा ऐकाधिकरण्याऽसंभवाद् **विरोधः** । धावनक्रियाऽभावेऽपि धावतोऽन्यान् अत्येतीति कथनाद् हेतुं विनाऽपि कार्योत्पत्तिरूपा **विभावना** । जव-वत्सु सर्वेषु तस्य जविष्ठत्वाद् **व्यतिरेकः** । एभिः स्वतः संभविभिर-लङ्कारैर्भगवतो **महिमातिशयरूपं वस्तु व्यज्यते** । ननु "अनेजदेकं मनसो जवीयः" इत्यत्रापि "**अमितः समितः प्राप्तै**" रित्यत्रेव[1] कुतो न विरोधाऽऽभासध्वनिः, विरोधसूचकानाम् अपि प्रभृतिपदानामप्रयो-

---

१. द्र० पूर्वं पृष्ठ १८८ ।

गादिति चेत्, अङ्ग उभयथाऽपि लक्ष्येऽलङ्काराद् वस्तुध्वनित्वमक्षतम्। अलङ्कारस्य (विरोधस्य) व्यङ्ग्यतायामपि तस्य तत्राऽनपायात् (विरोधताऽनपायात्)।

अपि च—

निर्वै क्षत्रं नयति, हन्ति वर्चो
ऽग्निरिवाऽऽरब्धो वि दुनोति सर्वम्।
यो ब्राह्मण मन्यते अन्नमेव
स विषस्य पिबति तैमातस्य ॥ अथर्व० ५।१८।४

अत्याचरितस्तपस्वी ब्राह्मणः क्षत्रम् अपकारिणं शासकं निर्णयति निःशेषतां नयति। अस्य पुत्रपौत्रराज्यादिकं विदुनोति उपतापयति भस्मसात् करोति। अस्य वर्चो हन्ति। आरब्धोऽग्निरिव अत्याचारिणः शासकस्य सर्वमेव नाशयतीत्याशयः। यो हि ब्राह्मणं ब्रह्मविदं तपस्विनं तस्य धनादिकं वा अन्नमेव स्वोपभोग्यमेव मन्यते स तैमातस्य विषस्य पिबति स सर्पविषमेव पिबति। कर्मणि षष्ठी। इह ब्राह्मणस्य अन्नेन अभेदाध्यवसानाद् अतिशयोक्तिः। सा च ब्राह्मणसर्वस्वहरणं सर्पविषपानमिवेति बिम्बप्रतिबिम्बभावाऽवबोधनरूपां निदर्शनामुत्थापयति। 'संभवन् वस्तुसंबन्धोऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना'॥ (सा०द० १० कारि०५१) साम्ये हि प्रणिधानगम्ये सप्रयत्नचिन्तनवेद्ये सति बिम्बप्रतिबिम्बभावः। अत्र निदर्शनाऽलङ्कारेण अत्याचारिणः शासकस्याऽवसानं घोरयातनाभिर्भवतीति वस्तु व्यज्यते। ननु 'मन्यते' इत्यत्र कुतो नोत्प्रेक्षा? 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः। उत्प्रेक्षावाचकाः शब्दा इव शब्दोऽपि तादृशः'। इति च स्थितिः इति चेत्? नन्विह 'मन्यते' पदमवधारणाऽर्थकम्, न तु प्रकृतस्य उपमेयस्य परात्मना उपमानात्मना संभावनार्थकम्। 'नाऽहं त्वां तृणं तृणाय वा मन्ये' इत्यादौ अनादरार्थस्यैव प्राधान्यम्, न संभावनार्थस्येति स्फुटम्। यः शासकः शक्तिमदेन ब्राह्मणं तद्धनं वा स्वभोग्यम् अवधारयति निश्चिनोति स एव तद्धरणाय प्रवर्तते न तु क्षीणसंभावनामात्रेण।

अथ अर्थशक्त्युद्भवध्वनेस्तुरीयो भेदः स्वतः संभविनाऽलङ्कारेणाऽलङ्कारध्वनिरूपो यथा—

**यो दूरतो मृदुमनोरमरोमराजि-**
**रादित्सितो मम सुखाय भविष्यतीति ।**
**मुक्तोऽपि मुञ्चति न हन्त निरन्तरं मां**
**गृह्णन् गले, न खलु कम्बल एष कालः ।।१७।।**
(इदं पद्यं मम)

द्वौ सुहृदौ नद्यास्तटे परिभ्रमन्तौ जलप्रवाहेणोह्यमानं, दूरतोऽस्फुटाकृतिं कृष्णभल्लूकमेकमपश्यताम् । तयोरन्यतरस्तं कम्बलधिया ग्रहीतुकामो जले निपत्य तत्समीपे गतस्तेन जन्तुना कण्ठे दृढं जगृहे । तटे स्थितेन सुहृदा 'कम्बलमादाय विहाय वा द्रुतमेहि' इत्युक्तः स प्राह,—सखे कम्बलोऽयमिति लोभाऽभिभूतेन मयाऽऽदातुमीहितोऽयं न कम्बलः प्रत्युत मम काल एव, यो मया मुक्तोऽपि मां न मुञ्चति ।

पद्येऽस्मिन् दूरतो भ्रमवशाल्लोके कदाचित् स्वतः संभविना "साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितः" (साहित्यद०, परि० १०, कारि० ३६) इत्युक्तलक्षणेन भ्रान्तिमदलङ्कारेण "तद्वारब्धस्य वैफल्यमनर्थस्य च संभवः०" (साहित्यद०, परि० १०, कारि०) इत्युक्तस्वरूपस्य विषयालङ्कारस्य ध्वनिः । अथ प्रतिभोत्थिता भ्रान्तिरेव अलङ्कारस्य विषयश्चमत्कारात्, न तु दृष्टिदोषादिजाऽपीति चेत् ? युक्तम् । वस्तुतः पानदुर्जनसंसर्गादिदुर्व्यसनसक्तम् अपरिपक्वप्रज्ञं कमपि सुहृदं कश्चित् सज्जनोऽप्रस्तुतेन स्वतः संभाविनाऽपि सताऽत्र लोकप्रवादमात्रेण भल्लूकवृत्तान्तेनाऽनेन सकृदास्वादितानां विषयाणां दुस्त्यजत्वं बोधयतीत्यप्रस्तुतप्रशंसा । सा च तवाऽपि तस्य कम्बलाभिलाषिण इव दुर्दशा मा भूदिति दृष्टान्तालङ्कारध्वनिमुत्थापयति । "कृष्णे नीलाऽसितश्यामकालश्यामलमेचकाः" इत्यमरः । तथा "कालो मृतौ महाकाले समये यमकृष्णयोः" इति मेदिनी । अथवा अन्यत् कम्बलत्वं प्रतिषिध्यकालत्वस्थापनादपह्नुतिरेव । कोऽप्येष न कालः कम्बल इत्यन्वये तु अन्यस्थापनाऽभावान्नाऽपह्नुतिः ।

यथा वा—

**समावव‍र्त्ति पृथिवी, समुषाः, समु सूर्यः । समु विश्वमिदं जगत् । वैश्वानरज्योतिर्भूयासम्० ।। यजु० २०।२३।।**

देवता—समित् । ऋषिः—प्रजापतिः । छन्दः—स्वराडतिशक्वरी[1] ।

इयं पृथिवी समाववर्त्ति सम्यग् आसमन्तात् वर्तते वेति । समाङ्पूर्वस्य वृतेः शपः श्लुविकरणे रूपम् । इयम् उषा अपि समाववर्त्ति असौ सूर्यं समाववर्त्ति द्युलोके स्वात्मानं परितस्तथा स्वमपेक्ष्य महीयः किमप्यन्यत्सौरमण्डलं परितः समाववर्त्ति भ्रमति । इदं सर्वं जगदेव समाववर्त्ति अन्तरिक्षे निरन्तरं परिभ्रमति । अथवैषां पुनः पुनरुत्पत्तिविनाशावेव समावर्तनम् । ब्रह्माण्डे आकाशगङ्गायामनेकानि नक्षत्राणि विनश्यन्ति नवानि चोत्पद्यन्ते । स्तोता कामयते प्रार्थयते च यदहं तद्विपरीतं वैश्वानरस्य परमात्मनो ज्योतिरिव ज्योतिर्यस्य तथाविधो नित्यज्योतिर्भूयासम् । अथवा वैश्वानर एव ज्योतिर्यस्य तथाविधो भूयासम् । इह पृथिव्युषःसूर्यजगतामप्रस्तुतानां समावर्तनरूपैकधर्मसम्बन्धवर्णनात् तुल्ययोगिता । ततोऽहं पदाऽभिधेयस्य स्तोतुर्वैश्वानरं ज्योतिर्भावात् पृथिव्यादिभ्यो व्यतिरेकव्यञ्जनात् **व्यतिरेकालङ्कारध्वनिः** ।

अथाऽर्थशक्त्युद्भवध्वने **पञ्चमो** भेदः कविप्रौढोक्तिसिद्धाद् वस्तुनो वस्तुध्वनिरूपः—

यथा—

**सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् ।**
**यात्रायै प्रेरयामास तं शक्तेः प्रथमं शरत् ॥**

रघुवं०, सर्ग० ४, प० २४

वर्षाऽपगमे प्रकृत्यैव नद्यः क्षीणसलिलाः पन्थानश्च शुष्ककर्दमास्तेन च यातायातक्षमाः सम्पद्यन्ते । तत्र शरत्कर्तृत्ववर्णनं कविप्रौढोक्तिमात्रम् । वस्तुरूपेण तेन रघोरभियानेषु कालस्याऽनुकूलता भाविसमरेषु विजयलाभरूपं च वस्तु व्यज्यते । किन्तु—

**तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ ।**
**प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥**

रघु०, सर्ग० ४, प० २५

अत्र विजयलाभः साक्षादुक्तस्तेन तस्य न ध्वनिगम्यता । अर्चिषः प्रतिषेधेन तत्र हस्तत्वारोपादपह्नुतिः ।

---

१. अतिशक्वरीछन्दस्तु सम्पूर्णस्य मन्त्रस्य; नोद्धृतमात्रस्य । यु० मी०

काव्यप्रकाशे तु—

कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां त्वदीयाम् ।
त्रस्तापाङ्गाः सरसबिसिनी काण्डसञ्जातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥

काव्यप्रका० ४ उल्लासे ।

अत्र येषां पशूनां संगीतार्थाऽवगमयोग्यता नास्ति तेषामपि मनसि किंचिद् धवलं श्रवणयोः प्रविशतीति मतिजननेन व्यञ्जकेन वस्तुना (कविप्रौढोक्तिमात्रसिद्धेन) तव कीर्तिश्चमत्कारिणीति वस्तु व्यज्यते[1] । सूक्ष्मेक्षिकया तु कविप्रौढोक्तिसिद्धेन व्यञ्जकवस्तुना वस्तुध्वनेः शुद्धमुदाहरणं यद्यपि सर्वथा नाऽलभ्यं तथापि तद् दुर्लभमवश्यमेव, तत्राऽतिशयोक्तितद्गुणसामान्यमीलितादीनामन्यतमस्य प्रायो विद्यमानत्वात्[2] तथापि तत्र कविप्रौढोक्तेरेव मुख्यतया चमत्कारहेतुत्वात् तन्नाम्नैव व्यपदेशो ज्यायान् ।

यथा वा मदीय एव श्लोकः—

निमीलयन् पश्यति चक्षुरेकं क्रमेण सूर्येन्दुविलोचनो यः ।
द्यावापृथिव्यात्मकचित्रचक्रद्वन्द्वस्य संयोगवियोगलीलाम् ॥

॥१८॥

---

१. यद्यपि "बिसिनी काण्डसंजातशङ्काः" इति वचनेन भ्रान्तिमान् ससन्देहो वाऽलङ्कारो व्यञ्जक इति वस्तुमात्रव्यञ्जकत्वोदाहरणमयुक्तं तथापि "किंचिच्छुक्लं कर्णे प्रविशति" इत्येतावज्ज्ञानमात्रेणाऽपि श्रवणे हस्तावर्तनलक्षणेन वस्तुमात्रेण ·······श्वैत्यमूर्तत्वादिबुद्धिजननेन त्वत्कीर्तिश्चमत्करोतीति व्यञ्जना संभवाद् वस्तुमात्रोदाहरणत्वमुक्तम्" इति काव्यप्रकाशटीकायां श्रीवामनाचार्याः ।

२. रसगङ्गाधरेऽपि 'देवाः के पूर्वदेवा०' इत्याद्युदाहृतपद्ये—'अन्तकत्रासिमूर्ते' इत्यत्रोपमायाः, 'मुग्धारिप्राणदुग्धाशनमसृणरुचिस्त्वत्कृपाणोभुजङ्गः' इत्यत्र रूपकस्य, 'साहङ्कारसुराऽसुरावलीकराकृष्ट भ्रमन्सन्दरेत्यत्र क्षुभ्यत्क्षीरधिवल्गुवीचिवलय श्रीगर्वसर्वंकषा' इत्यस्मिन् अतिशयोक्तेर्व्यतिरेकस्य चोपस्थितिः कथमप्यपलपितुं न शक्या । रसगङ्गाधरस्य ध्वनिप्रकरणे ।

यो हि विराड्रूपो भगवान् कदाचित् स्वं सूर्यात्मकं दक्षिणलोचनं निमीलयन् रात्र्यन्धकारे द्यावापृथिवीरूपयोरद्भुतयोश्चक्रयोर्मण्डलाऽऽकारयोरेव चक्रयोश्चक्रवाकयोः संयोगलीलां परस्परसम्मिलनं पश्यति। कदाचित्पुनश्चन्द्ररूपं वामलोचनं मीलयन् सूर्योदये तयोर्वियोगलीलां पृथग्भावं पश्यति। अत्र सूर्येन्दू एव विलोचने यस्येति द्यावापृथिवीरूपम् अद्भुतं मण्डलद्वयमेव चक्रवाकयुगलमिति च रूपकम्। तथापि कविप्रौढोक्तिसिद्धं पौराणिककल्पनाप्रसूतं वा सूर्यचन्द्रयोर्भगवतो नेत्ररूपेण वर्णनात्मकं वस्तुमुख्यं चमत्कारकारणम्। तेन च पर्यायेण गच्छतोरागच्छतोश्च रात्रिंदिवसरूपयोर्वस्तुनोर्व्यञ्जनाद् वस्तुध्वनिः।

तथा—

सुविज्ञानं चिकितुषे जनाय सच्चाऽसच्च वचसी पस्पृधाते।
तयोर्यत् सत्यं यतरद् ऋजीयस्तदित् सोमोऽवति हन्त्यासत्॥
ऋ० ७।१०।१२॥

देवता—सोमः। ऋषिः—मैत्रावरुणिर्वसिष्ठः। छन्दः—त्रिष्टुप्।

सुविज्ञानं चिकितुषे—सम्यग् ज्ञानं जिज्ञासमानाय जनाय। जनमनुकूलयितुमित्यर्थः सद् असच्च वचसी तथ्यमिथ्यावचने पस्पृधाते तस्य बुद्धौ संघर्षमिव समाचरतः। अयं जिज्ञासुर्मामेव सत्यत्वेन स्वीकरोत्विति प्रयतेते। तयोर्मध्ये यत् सत्यं यथार्थं तदित् तदेव सोमोऽवति सद्वृत्तिर्जनो गृह्णाति। किं लक्षणं सत्यस्य? ऋजुत्वमेव। तयोर्यद् ऋजीयः सरलतरं तदेव सत्यम्। द्वयोर्बिन्दोर्मध्ये सरला रेखा एकैव कुटिलास्तु बह्व्यः। अथवा सोमः उमया सह वर्तमानः। उमा[1] यथार्थज्ञानम्। लोके हि द्विविधाः पुरुषाः दृश्यन्ते। एके येषां सत्यं प्रति स्वाभाविकी प्रवृत्तिः। अपरे च निसर्गेण असत्योन्मुखाः। सत्यं जानन्तोऽपि ते प्रकृतिवशंवदा असत्यं स्वीकुर्वन्ति च्यवन्ते च श्रेयसः। सत्याऽसत्ययोर्वचसोश्चेतनमानवयोरिव संभवति, तेन मुख्यार्थबाधेऽपि तद्वर्णनं कविप्रौढोक्तिमात्र सिद्धं वस्तु। तेन चान्ते सत्यं त एव कल्याणं भवतीति वस्तु व्यज्यते।

---

१. विद्या उमारूपिणी प्रादुरभूत् स्त्रीरूपा। स इन्द्रस्तामुमां बहुशोभमानां सर्वेषां हि शोभमानानां शोभनतया विद्या। इति केनोपनिषद्भाष्ये श्रीशङ्कराचार्याः।

अथाऽर्थशक्त्युद्भवध्वनेः षष्ठो भेदः कविप्रौढोक्तिसिद्धाद् वस्तुनोऽलङ्कारध्वनिस्वरूपः—

यथा—

रजनीषु विमलभानो करजालेन प्रकाशितं वीर ।
धवलयति भुवनमण्डलमखिलं तव कीर्तिसंततिः सततम् ॥
साहित्यद०, परि० ४॥

अत्र कविप्रौढोक्तिमात्रसिद्धेन कीर्तिसंतत्या भुवनमण्डलधवलीकरणरूपेण वस्तुना तस्याश्चन्द्रकरजालाद् उत्कर्षव्यञ्जनाद् व्यतिरेकालङ्कारस्यध्वनिः ।

यथा वा—

किं पुण्यमाचरितमेभिरहो महीयः
स्वप्राग्भवेषु कृतिभिर्नु महानुभावैः ।
आचामतीह गुरुसूनु-हकीकतादेर्य-
च्छीतलोज्ज्वलयशोऽमलचित्तमेषाम् ॥१६॥
(इदं पद्यं मदीयम्)

धर्मरक्षार्थं स्वजीवनं समर्पितवतां जनानां सुचरितश्रवणव्यसनिभिर्महानुभावैः स्वपूर्वजन्मसु किं नाम पुण्यमाचरितं यत् फलभूतमेषां चित्तैरिह जन्मनि सुगृहीतनामधेयानां श्रीगुरुगोविन्दसिंहतनयद्वयवालकहकीकतरायप्रभृतीनां शीतलं धवलं च यशः कर्णेहत्य निपीयते ? इह यशसः शीतलत्वं धवलत्वं च कविप्रौढोक्तिमात्रसिद्धम्, तेन च श्रोतॄणां चेतसश्चकोरत्वव्यञ्जनादुपमाया रूपकस्य वालङ्कारस्य ध्वनिः ।

वेदेऽपि—

वि मे कर्णा पतयतो वि चक्षु-
र्वीदं ज्योतिर्हृदय आहितं यत् ।
वि मे मनश्चरति दूरआधीः
किं स्विद् वक्ष्यामि, किमु नू मनिष्ये॥ऋ० ६।६।६।

देवता—वैश्वानरोऽग्निः । ऋषिः—बार्हस्पत्यो भरद्वाजः । छन्दः—त्रिष्टुप् ।

हे वैश्वानर देव ! तत्र महिमानम् आकर्णयितुं मम कर्णा=कर्णौ

विपतयतः विविधा दिशो धावतः। तव महिमानं दिदृक्षमाणस्य मम चक्षुर्विपतयति विविधान् पदार्थान् प्रति धावति। हृदये आहितं स्थापितं यदिदं बुद्धिरूपं ज्योतिस्तदपि विपतयति। कीदृक् तव स्वरूपमिति निरूपयितुं विविधं चेष्टते—दूरे आधीः सुदूरवर्तिषु अतीन्द्रियेष्वपि पदार्थेषु आधानं यस्य, तन्मदीयमिदं मनोऽपि विचरति विरुद्धासु दिक्षु संचारमाचरति। एवं बुद्धिमनःसहितेषु सर्वेन्द्रियेषु प्रयतमानेष्वपि तव याथार्थ्यमहं नावगच्छामि इति। सति हेतौ फलाऽभावरूपा **विशेषोक्तिः**। एवं विमूढमतिरहं किं स्विद् वक्ष्यामि ? दूरे तावद् वचनम् किं मनिष्ये किं चिन्तयेयम् इत्येव न निश्चिनोमि। कर्णचक्षुरादीनां चेतनवत् स्वत इतस्ततो धावनमनुपपन्नं कविप्रौढोक्तिमात्रसिद्धं वस्तु। तेन च सति हेतौ फलाऽभावरूपाया विशेषोक्तेर्व्यञ्जनाद् इह **वस्तुनोऽलङ्कारध्वनिः**। चुरादिगणस्थः पत गतौ धातुः 'वाणिजन्तः'। इति गणसूत्रेण[1] विकल्पात् पातयति पतयतीति चेति रूपद्वयम्। मन्त्रे विषयं बुद्धिं निगीर्य तस्य विषयिणा ज्योतिषाऽभेदाऽध्यवसानादतिशयोक्तिः। सूर्यचन्द्रादिबाह्यज्योतिषां निरासाय उक्तं हृदय आहितमिति।

अथ अर्थशक्त्युद्भवध्वनेः **सप्तमो भेदः कविप्रौढोक्तिसिद्धादलङ्काराद् वस्तुध्वनिरूपः**—

यथा—

**दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः।**
**मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः॥**

रघु०, स० १०, श्लो० ७५॥

अत्र कविप्रौढोक्तिसिद्धेन अयोध्यायां श्रीरामजन्मक्षणे लङ्कायां रावणमुकुटस्य न मणयः प्रत्युत तद्व्याजेन राक्षसश्रियोऽश्रुबिन्दवः

---

१. 'वाणिजन्तः' इति न गणसूत्रम्'। अपि चोत्तरत्र 'पातयति पतयति' रूपद्वयस्य निर्देशादत्र पाठोभ्रष्टः प्रतीयते। अत्र 'वा णिच्यदन्तः' इति शुद्धः पाठो ज्ञेयः। "पत गतौ वा' इति धातुसूत्रे यत् 'वा' पदं तस्य व्याख्यातृभिर्द्विविधं व्याख्यानं क्रियते। तत्रैके—'पत धातुः गत्यर्थे वा णिचमुत्पादयति, पतयति पतति'। अपरे पुनः 'पतति' प्रयोगस्य भ्वादिस्थधातुना सिद्धत्वात् 'पत धातुर्वा अदन्तः—पतयति पातयति' इत्येवं व्याचक्षते। तत्र द्वितीय एवार्थो युक्तः।

पृथिव्यां पतिताः। इत्यपह्नुत्यलङ्कारेण भविष्यद् राक्षसलक्ष्मीविनाश-रूपं वस्तु व्यज्यते (सा०द०, परि० ४)। अमूर्ताया राक्षसश्रियोऽश्रुपतनाऽसंभवात् तद्वर्णनं कविप्रौढोक्तिमात्रसिद्धम्। लोके देवतानामश्रुपात.दिकममङ्गलसूचकं मन्यते।

तथा—

एकाऽऽनने सुचतुरस्य विलोक्य यस्य
साङ्गान्मुखे निवसतश्चतुरोऽपि वेदान्।
गर्वं व्यमुञ्चदचिराच्चतुराननः स
तानुद्वहन् कथमपि स्वमुखैश्चतुर्भिः ॥२०॥

चतुर्भिर्मुखैरेकैकशश्चतुरो वेदान्, कथमपि न तु सुखेनेत्यर्थः, वहन् ब्रह्मा महर्षेर्दयानन्दस्य एकस्मिन् मुखे साङ्गान् चतुरो वेदान् सुखपूर्वकं निवसतः पश्यन् पाण्डित्यगर्वं व्यमुञ्चदिति कविप्रौढोक्तिमात्रसिद्धेन व्यतिरेकालङ्कारेण महर्षेः पुरस्ताद् इतरेषां विदुषां तु कथैव केति वस्तु व्यज्यते।

यथा वा—

राजन् पर्वतमूषिकः स कियती मात्राऽग्रतो मे तमा-
ऽऽनेष्याम्यत्र नियम्य राजसदसीत्थं कत्थमाना भटाः।
दिल्लीशस्य निदेशतः परवशा यान्तो दिशं दक्षिणाम्,
तूष्णीमेव निवेदयन्त्यभिजनायाऽन्त्यं प्रणामाञ्जलिम् ॥
इदं पद्यं मम ॥२१॥

दिल्लीपतेः समक्षं राजसभासु 'शिवाजी तु पर्वतमूषिकमात्रः' इति कथनेन विकत्थमाना अपि तस्य सेनापतयो भयातिशयात् तां दक्षिणां दिशं सिंहाक्रान्तां विभावयन्तो युद्धाय तत्र गन्तुं नेच्छन्ति, तथाऽपि राजाज्ञया गच्छन्तस्ते तत्रैव स्वावसानं निश्चितं मन्यन्ते इति तथ्यम् अभिजनाय अन्तिमप्रणामाञ्जलिनिवेदनद्वारा भङ्ग्यन्तरेण वर्णितमिति पर्यायोक्तालङ्कारः। तेन च तेषामनिष्टाऽऽशङ्कया तत्परिवारजनानां करुणक्रन्दनादयोऽनुभावा वस्तुरूपा व्यज्यन्ते। पर्यायोक्तं यदाभङ्ग्या-गम्यमेवाऽभिधीयते। (साह०द०, परि० १०,)।

अथ वेदे—

श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे,
नक्षत्राणि रूपम् अश्विनौ व्यात्तम्।
इष्णन्निषाणाऽमुं म इषाण
सर्वलोकं म इषाण ॥ यजु० ३१।२२॥

देवता—आदित्यः। ऋषिः—उत्तरनारायणः। छन्दः—निचृदार्षी त्रिष्टुप्।

आदित्यवद्भासमान हे प्रभो श्रीलंक्ष्मीश्च तव पत्न्यौ भार्ये इव सदाऽनुगते। यया सर्वेषामाश्रयणीयो भवति सेव्यो वा सा श्रीः। संपत्तिवैभवं वा। 'श्रीर्वेशरचना शोभा भारती सरलद्रुमे। लक्ष्म्यां त्रिवर्गसंपत्तिविधोपकरणेषु च। विभूतौ च मतौ च स्त्री' इति मेदिनी। यया अन्येभ्यः पृथग्लक्ष्यते सा लक्ष्मीः। रूपशोभा सौन्दर्यादिकम्। लक्ष्मीः 'सम्पत्तिशोभयोः' इति मेदिनी। अहोरात्रे तव देहस्य दक्षिणवामभागाविव। नक्षत्राणि द्युलोके विद्योतमानास्तारकास्तव रूपम्। स्वात्मनो महीयः सौरमण्डलं परितः परिभ्रमन्ति अनन्तसौरमण्डलानि अनन्तस्य तवाऽऽकारस्य लेशतः सूचनामाचरन्ति। अश्विनौ द्यावापृथिव्यौ तव विवृतं वदनविवरमिव। ईदृग्विधाऽनन्तसामर्थ्योपेतस्त्वम् इष्णन् मामनुग्रहीतुमिच्छन्। इषाण पूर्णकामोऽहं भवेयमिति कामयस्व। परलोकविषयका मम मनोरथाः सिध्यन्तु इति कामयस्व। अत्रोपमया साङ्गरूपकालङ्कारेण वा तादृगैश्वर्यशालिनां सर्वशक्तिमतश्च कामनामात्रेण भक्तस्य सर्वे मनोरथाः पूर्णा भवन्तीति रूपं वस्तु व्यज्यते। श्रीप्रभृतिषु भगवतः पत्नीत्वाद्यारोपो भगवति च पुरुषत्वारोपस्याङ्गम्। तेन तयोरङ्गाङ्गिभावरूपः रूपकालङ्कारः। 'तद् रूपकमभेदो य उपमानोपमेययोः' (काव्य प्र० दशम परि०)।

अपि च—

एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम्।
तेन देवा व्यसहन्त शत्रून् हन्ता दस्यूनामभवच्छचीपतिः ॥
अथर्व० ३।१०।१२॥

देवता—इन्द्रो देवाश्च। ऋषिः—अथर्वा। छन्दः—त्रिष्टुप्।

अष्टौ परिमाणं यस्याः सा अष्टका। 'अष्टका पितृदैवत्ये, अष्टिका-

ऽन्या' इति सिद्धान्तकौमुद्यां श्रीदीक्षिताः। एकमष्टकं यस्या यस्यां वेत्येकाष्टका। यामाऽष्टकपरिच्छिन्ना अहोरात्ररूपा वेला। उत्तम-सन्तानलाभाय क्षुत्पिपासाशीतोष्णवातवर्षादिविविधक्लेशान् न गणयन्ती कठिनव्रतोपवासपरायणा योषिदिव सा सूर्यचन्द्ररूपतनयप्राप्तये तपसा तप्यमाना तपश्चरन्ती महिमानं महिमवन्तं गर्भं गर्भे धृतं पुत्रं शीतोष्णादिद्वन्द्वसहनद्वारा इन्द्रं-सूर्यं जजान अजनयत्। "इन्द्रः शक्राऽऽदित्यभेदे योगभेदाऽन्तरात्मनि" इति मेदिनी। उत्पन्नेन तेन इन्द्रेण देवाः सदाचारिणो विद्वांसः, जलाऽनिलाऽनलादिरूपाः[1] प्रकृतेः शक्तयो वा शत्रून् दस्युनिशाचरादीन् असहन्त ममृषिरे रोद्धुं समर्था अभवन् वा। कुतः? दस्यूनां हन्ता शचीपतिरयं व्यभवत् समुत्पन्न इति तत्र हेतुः। शचीपतिः सत्कर्मकलापस्य पालकः। शचीपदं निघण्टौ कर्मप्रज्ञा-वाङ्नामसु पठितम्। "दस्यूनां हन्ता शचीपतिरभवदिति" वाक्यस्याऽर्थेन सेतुना "देवाः शत्रून् असहन्त" इति पूर्ववाक्योक्ता सहनक्रिया सोपपत्तिका क्रियते। तदभावे सा अनुपपन्नैव प्रतीयेत। तस्मादिह "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इत्युक्तलक्षणः **काव्यलिङ्गाऽलङ्कारः**। सहनेन दस्युभ्यो देवानां बलीयस्त्वव्यञ्जनाद् **व्यतिरेकः**। बलवन्नरो हि नितरां तुच्छं प्रतिपक्षिणमवेक्ष्य सहते नातिक्रुध्यति। इह अमूर्तायां प्रस्तुतायामेकाऽष्टकायां लिङ्गसाम्यात् कार्यसाम्याच्च अप्रस्तुताया नार्या व्यवहारसमारोपात् **समासोक्तिरलङ्कारः**। "समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यवस्तुनः॥" (साहित्यद०, परि० १०, कारि० ५६)। सा समासोक्तिः तपसा इतरनार्योऽपि सूर्यसदृशं तेजस्विनं सुतं जनयितुं शक्नुवन्तीति **वस्तु व्यनक्ति**। प्रलयावसाने नूतनसर्गाऽऽरम्भे देवमाता एकाष्टका तपस्तप्त्वा संवत्सरेण पत्या सूर्याचन्द्रमसौ सुतावजनयदिति तथ्यम् अथर्ववेदस्य तृतीयकाण्ड-

---

१. यथा रघुवंशेऽपि—

दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे।
बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाऽभ्युदया तादृशाम्॥
रघु० स० ३ श्लोक १४॥

स्य दशमसूक्तमन्त्रेषु कमनीयकाव्यशैल्या वर्णितम्[1]।

अथाऽर्थशक्त्युद्भव ध्वनेरष्टमो भेदः कविप्रौढोक्तिसिद्धाद् अलङ्कारादलङ्कारध्वनिरूपः। यथा—

बाला वृद्धं कविमुखशशाङ्काऽऽसनाब्जाऽऽसनस्थम्,
प्रायोऽपूर्वप्रणयनपटुः प्राक्तनाऽऽवृत्तिसक्तम्।
या ब्रह्माणं विहसति रजोमूर्तिमानन्दमूर्तिः
सा वाग्देवी जयति भुवनं दर्शयन्त्यन्यदेव ॥२२॥

बाला भारती वृद्धं ब्रह्माणम्, स हि पितामहत्वाद् वृद्धः। "ब्रह्माऽऽत्मभूः सुरज्येष्ठः परमेष्ठी पितामहः" इत्यमरः। कवीनां मुखशशाङ्क एवासनं यस्याः। अब्जं कमलमेव यदाऽऽसनं तत्र तिष्ठतीति वा तम्। शशाङ्कोदये कमलनिमीलनमिव कविवाक्प्रसारे ब्रह्मणोऽपि मुखं मुद्रितं भवतीति व्यज्यते। कविवाक् प्रायोऽपूर्वं नूतनमेव किंचिदुद्भावयति, ब्रह्मा "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्।" (ऋ० १०। १९०।३) इति वेदवचनानुसारं भूयोभूयः प्राक्कृतामेव सृष्टिमावर्तयति। सृष्टिरचनार्थं ब्रह्मा रजोमूर्तिः "..... रजोमूर्तिः सत्यको हंसवाहनः" इति ब्रह्मपर्यायेष्वमरः। कादम्बर्यामपि—"रजोजुषे जन्मनि०" इत्युक्तम्। सरस्वत्यभिन्ना कविवाक् सत्त्वप्रधानतया आनन्दमूर्तिः सुखमयी। सा ब्रह्मनिर्मितं सुखदुःखमोहात्मकं भुवनं काव्येष्वन्यदेव केवलं सुखमयमेव दर्शयन्ती जयति सर्वोत्कर्षेण वर्तते।[2]

---

१. आयमगन्त्संवत्सरः पतिरेकाष्टके तव।
सा न आयुष्मतीं प्रजां रायस्पोषेण संसृज ॥८॥
एकाष्टका तपसा तप्यमाना०..................॥१२॥
इन्द्रपुत्रे सोमपुत्रे दुहिताऽसि प्रजापतेः।
कामानस्माकं पूरय प्रतिगृह्णाहि नो हविः ॥१३॥

इन्द्रः सूर्यः सुतो यस्याः। सोमश्चन्द्रः सुतो यस्याः। सा त्वम् (एकाष्टका) प्रजापतेर्दुहिताऽसि। त्वमस्माकं मनोरथान् पूरय। उपयुक्तेऽवसरे तदुपयुक्तस्य कार्यस्य करणमेव समयाय हविर्दानम्। तस्याः पूजा इत्यर्थः। इदमाचरतः पुंसः सर्वे कामाः पूर्णा भवन्तीति मन्त्रस्याऽऽशयः।

२. काव्यप्रकाशस्थ (उल्लास० ४।६७) प्राकृतपद्यस्य परिवर्तितं पल्लवितं

इह कविवाक्सरस्वत्योर्भिन्नयोरप्यभिन्नतया वर्णनाद् भेदेऽप्यभेदरूपातिशयोक्तिः। सा व्यतिरेकं, हसति चेत्युत्प्रेक्षां चोत्थापयति। संभाव्यमानं यत्किंचित्साम्यस्य ब्रह्मणो निराकरणात् कविवाक् स्वसदृशी स्वयमेवेत्यनन्वयालङ्कारस्य ध्वनिः। उपमानोपमेयत्वमेकस्यैवेत्यनन्वयः' (साहित्य, परि० १०, कारि० २६)।

वेदेऽपि यथा—

**आ यद् रुहाव वरुणश्च नावं प्र यत् समुद्रमीरयाव मध्यम्।**
**अधि यदपां स्नुभिश्चराव प्र प्रेङ्ख ईङ्खयावहै शुभे कम्॥**

ऋ० ७।८८।३॥

देवता—वरुणः। ऋषिः—मैत्रावरुणिर्वसिष्ठः। छन्दः—त्रिष्टुप्।

आयद्रुहावेति—यद् यदा देवो वरुणः अहं च सत्यभावरूपां नावम् आरुहाव। यद् यदा तां नावं समुद्रं मध्यं समुद्रस्य मध्यभागं प्रति प्रेरयाव। भगवता सह सख्यभावजन्यानामानन्दानां पराकाष्ठा हि समुद्रस्य मध्यभागः। तामारुह्य यदा आवाम् अपां तेषामानन्दरूपजलानाम् अधि उपरि+स्नुभिः तत्रत्यतरङ्गाणां शिखरैः सह पर्यायेण उपरि अधश्च अचराव तदा शुभे शोभने प्रेङ्खे प्रेङ्खोलिवायाम्-(लोके झूला हिंडोला इति) प्रेङ्खयावहै दोलायाम् आन्दोलनानन्दम् अविन्दावहि। "स्नुः प्रस्थः सानुरस्त्रियाम्" इत्यमरः। स्नुपदमिह आनन्दतरङ्गशिखराभिप्रायकम्।

मन्त्रेऽस्मिन् प्रस्तुतं भक्तभगवतोः सख्यभावं विषयं निगीर्य तस्य अप्रस्तुतेन विषयिणा नावा, तथा जीवन्मुक्तिदशायाम् अनुभूयमानस्य सख्यभावजन्यस्य परमानन्दस्य च समुद्रेण अभेदाऽध्यवसानादतिशयोक्तिः। तया च ब्रह्मानन्दात्मकैस्तरङ्गशिखरैः सह नावः= सख्यभावनासिक्तचित्तवृत्तेः ऊर्ध्वाऽधोगमनम् प्रेङ्खायां प्रेङ्खोलनम् इति तयोः बिम्बप्रतिबिम्बभावबोधनात् निदर्शनाऽलङ्कारो व्यज्यते— "संभवन् वस्तुसम्बन्धोऽसंभवन् वापि कुत्रचित्। यत्रबिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना"॥ इति तल्लक्षणात्। अस्य सख्यभावस्य स्पष्ट-

च रूपान्तरम्—या स्थविरमिव हसन्ती कविवदनाम्बुरूहबद्धविनिवेशा। दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी॥ परिष्कर्ता सौदामिनीकृदेव॥

निर्देशः पञ्चममन्त्रे "क्व त्यानि नौ सख्या बभूवुः सचावहै यदवृकं पुराचित्० ॥ (ऋ० ७।८८।५) मन्त्रे द्रष्टव्यः।

अपि च—

**यदिमा वाजयन्नहमोषधीर्हस्त आददे ।**
**आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥**

यजु० १२।८५॥

देवता—वैद्यः। ऋषिः—भिषक्। छन्दः—अनुष्टुप्।

यदिमेति—वाजयन् रोगिणः, रोगस्य च प्रकृतिम्, तन्निदानम्, चिकित्साम् ओषधीनां गुणधर्मादिकं च सम्यग् जानन् अहं वैद्यः यद् यदैव इमा ओषधीः रोगिणे दातुं हस्त आददे गृह्णामि तदैव तद्ग्रहण-समकालमेवेत्यर्थः। यक्ष्मस्य रोगस्य आत्मा तथा नश्यति यथा जीव-गृभः वधस्थानं प्रति नीयमानस्य पशोर्मानवस्य वा आत्मा जीवनं वधात् प्रागेव नश्यति। "क्षेत्रज्ञ आत्मा पुरुषः" इत्यमरः। स हि भया-तिशयाद् आत्मानं मृतमेव मनुते। "जीवन्नेव यो हिंसार्थं गृह्यते आघातस्थानं नीयते स जीवगृप्। तस्य" इति यजुर्वेदभाष्ये श्रीमही-धरः। 'हृग्रहोर्भश्छन्दसि' इत्यनेन हस्य भत्वम्। ओषधिप्रयोगात् प्रागेव रोगनाशवर्णनात् कारणात् प्राक् कार्योत्पत्तिरूपाऽतिशयोक्तिः। 'भेदे-ऽप्यभेदः, सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ। पौर्वापर्यात्ययः कार्यहेत्वोः सा पञ्चधा ततः'। साहित्यद० परि० १०, कारि० ४७। सा च ओषधिं विनाऽपि रोगनाशवर्णनाद् हेतुं विना कार्योत्पत्तिरूपां विभा-**वनां** व्यनक्ति इति कविप्रौढोक्तिसिद्धाद् व्यञ्जकाद् **अतिशयोक्त्य-ऽलङ्काराद् अलङ्कारध्वनिः**। नाशो देहस्यैव न नित्यस्याऽऽत्मनः आत्मा च देहदेहिभावसम्बन्धेन भौतिके देहे निवसति, न तु वातपित्ता-दिधातुवैषम्यरूपे रोगे। तथापि यक्ष्मस्य आत्मनो विनाश इति वचनेन रोगस्य मूलतो विनाशो व्यज्यते। ओषधिप्रदानात् प्रागेव रोगोपशम-कथनेन वैद्यस्य कुशलता रोगिण आश्वासः स्वजनानां विश्वासाति-शयश्च व्यङ्ग्यः। एवमत्र **'वस्तुव्यञ्जना'** अपि दृश्यते।

अस्मिन् अर्थशक्त्युद्भवध्वनिप्रसङ्गे श्रीरसगङ्गाधरकाराः—"प्रति-

भानिर्वर्तितत्वाऽविशेषाच्च कवितदुम्भितवक्तृप्रौढोक्तिनिष्पन्नयोः (कवि कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नयोः) अर्थयोर्न पृथग्भावेन गणनोचिता । उम्भितोम्भितादेरपि भेदान्तरप्रयोजकतापत्तेः" । इति प्रतिपादयन्तो यत् कविनिबद्धवक्तृप्रौढोक्तिसिद्धस्य ध्वनेश्चतुरो भेदान् नाऽभिनन्दन्ति तन्न रुचिरम् । कविप्रौढोक्तिसिद्धभेदेभ्यः कविनिबद्धवक्तृप्रौढोक्ति-सिद्धभेदेषु स्पष्टमेव पृथग्विधसौन्दर्यदर्शनात् ।

तथा हि—

**हल्दीघाटी हृदयनिहितां धूलिमद्यापि यत्नाद्**
**रक्तां रक्तैरवति समरे दत्तदेहाहुतीनाम् ।**
**यत् पौलोमी तिलककरणायाऽङ्गरागाय चाऽन्ये**
**पुण्यामेनां दिविदिविषदो दुर्लभां कामयन्ते ॥२३॥**

पद्यमिदं मदीयम् ॥

दिल्लीपतिसम्राट्सैन्यैः सह समरे समर्पितजीवनानां राजपुत्राणां शोणितेन शोणवर्णां धूलिं हल्दीघाटी स्वहृदये निगूह्य अद्यापि यत्नाद् रक्षति । तत्र हेतुमाह—यतः स्वभाले तिलकरचनार्थं शची, निजदेहे-ऽङ्गरागाय चेतरे देवराजादयः पावनीमिमां स्वर्गे दुलभां मन्यमाना जिहीर्षन्ति ।

तथा-ममैव द्वितीयं पद्यम्—

**रक्तं रक्तैरिह विजहतां देशधर्मप्रतिष्ठा-**
**रक्षायज्ञे वपुरपि, रजो दुर्लभं रक्षतेदम् ।**
**यस्मादस्मै स्पृहयति शची त्यक्तकस्तूरिकेति**
**हल्दीघाटी कथयति जनान् पक्षिणां कूजितेन ॥२४॥**

भो भारतीयाः ! धर्मस्य देशस्य च प्रतिष्ठारक्षार्थं युद्धयज्ञे निज-देहमपि हुतवतां वीराणां रक्तं रक्तमिदं रजो यत्नेन रक्षत । यतो देव-राजस्येन्द्रस्य भार्या शची कस्तूरीकुङ्कुमादिकमपि तिरस्कृत्य पावन-मिति धिया स्वमस्तके तिलकरचनार्थम् इदं रजो जिहीर्षति—इति रहस्यं हल्दीघाटी पक्षिणां कूजितव्याजेन कथयतीव । नेदं पक्षिणां कूजितं किन्तु हल्दीघाट्याः हितवचनमित्यपह्नुतिरलङ्कारः । शच्या-स्तादृशव्यवहाराऽसम्बन्धेऽपि सम्बन्धावर्णनादसम्बन्धे सम्बन्धरूपा-

ऽतिशयोक्तिः। तथा च कस्तूरिकायाः अपेक्षया रजस उत्कर्षव्यञ्जनाद् व्यतिरेकः।

पद्ययोरनयोर्विवक्षितविषयसाम्येऽपि वर्णनशैलीभेदात् सौन्दर्यसम्बन्धे तयोरौत्तराधर्मं सर्वसहृदयसंवेद्यम्। तत्र हेतुश्च अवक्तॄणां वक्तृभावकल्पनया तदुक्तौ सजीवतावतारो नाटकीयतायाः प्रभावतीव्रता अमूर्तेषु मूर्तत्वोपधानात् तेषां प्रत्यक्षायमाणता चेति।

यथा वा—

राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाऽद्यापि किं भुज्यते?
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभामेकैकमाभाषते॥

साहित्यदर्पणे[1] परि० १०। कारि० ६०॥

इह शुकं वक्तारं प्रकल्प्य तन्मुखवर्णितया अप्रस्तुतया शत्रुभवनदशया स्तूयमानस्य प्रस्तुतस्य राज्ञः प्रतापवर्णनं कामप्यपूर्वां विच्छित्तिमावहति।

यथा च प्रबोधचन्द्रोदये अमूर्तं क्रोधं वक्तारं प्रकल्प्य—

अन्धीकरोमि भुवनं बधिरीकरोमि,
धीरं सचेतनमचेतनतां नयामि।
कृत्यं न पश्यति, न येन हितं शृणोति,
धीमानधीतमपि न प्रतिसन्दधाति॥ अं० २॥

इत्यनेन तदीयवाक्येन क्रुद्धस्य पुंसो व्यवहारनिरूपणद्वारा अमूर्तोऽपि भावः क्रोधो मूर्तिमान् कृतः।

इयं कविनिबद्धवक्तृप्रौढोक्तिः क्वचित् प्रश्नोत्तरशैल्योपस्थापिताऽधिकतरं चमत्कारमाविष्करोति।

---

१. अत्र प्रस्थानोद्यतं भवन्तं श्रुत्वा सहसैव अरयः पलायिता इति कारणं प्रस्तुतम्। कार्यमपि वर्णनार्हत्वेन प्रस्तुतमिति केचित्। अन्ये तु (काव्यप्रकाशकृतस्तु) राज-शुकवृत्तान्तेन कोऽपि प्रस्तुतप्रभावो बोध्यत इत्यप्रस्तुतप्रशंसैवेत्याहुः॥ इति साहित्यदर्पणस्य दशमपरिच्छेदे पर्यायोक्तालङ्कारप्रसङ्गे कारि० ६०॥

कालिन्दि, ब्रूहि कुम्भोद्भव, जलधिरहं,
नाम गृह्णासि कस्माच्छत्रोर्मे ?
नर्मदाऽहं त्वमपि वदसि मे नाम कस्मात् सपत्न्याः ?
मालिन्यं तर्हि कस्मादनुभवसि ?
मिलत्कज्जलैर्मालवीनां नेत्राम्भोभिः किमासां समजनि ?
कुपितः कुन्तलक्षोणिपालः ।। कुवलयानन्दे० ।।

पद्येऽस्मिन् स्वश्यामतानिमित्तं प्रति समुद्रेण पृष्टा नर्मदा मालवीनां रोदनं तस्याऽपि निमित्तं तासां वैधव्यहेतुं कुन्तलेश्वरस्य क्रोधमकथयत् । एतेन कल्पितयोर्वक्त्रोरप्रस्तुतेन संवादेन प्रस्तुतं कुन्तलेश्वरप्रतापवर्णनं नितरां मनोहारि ।

इह कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन भ्रान्तिमताऽलङ्कारेण निश्चयात् तस्य सन्देहस्य अथवा श्रीविश्वनाथेन निरूपित तस्य निश्चयालङ्कारस्य ध्वनिः । नर्मदायाः श्यामत्वहेतोर्मालवीनां सकज्जलदृग्जलमिलनस्य कथनेन कालिन्दीत्वरूपभ्रमनिरासे नर्मदैवेयमिति स्थापनात् ।

"अन्यान्निषिध्य प्रकृतस्थापनं निश्चयः पुनः" इति तल्लक्षणं साहित्यदर्पणस्य १० मपरिच्छेदे ३९ तमकारिकायाम् । अत्र नर्मदैवेयं न कालिन्दीत्यनुक्तेऽपि तत्प्रतीतेर्निश्चयस्य व्यञ्जनैव । किं च—यदि प्रस्तुतेन कुन्तलेश्वरस्य कोपेन कारणेन प्रस्तुतस्य मालवेन्द्रवधस्य कार्यस्य व्यञ्जना तदा अप्रस्तुतप्रशंसा । अथ कुन्तलेश्वरकोपोऽपि मालवेन्द्रवधवत् प्रस्तुत एव तदा उभयोः कारणकार्ययोः प्रस्तुतत्वात् पर्यायोक्तालङ्कारः । "पर्यायोक्तं यदा भङ्ग्या गम्यमेवाऽभिधीयते" इति साहित्यद०, १० मपरि०, कारि० ६० ।

यथा वा—

ग्रासाऽर्जनाय शुक यज्जनरञ्जनेन
त्यक्त्वाऽऽत्मनः परगिरं त्वमुरीकरोषि ।
किं भुज्यते तदपराधफलं त्वयेदमा-
जीवनं कठिनपञ्जरसंस्थितेन ? ।।२५।।

शुकस्योत्तरम्—

वाचा वदामि विवशोऽन्यगिरं हृदा न
नैवाऽस्मि यूयमिव तेन च गर्वितो वा ।

स्यां दण्डितो यदि तथापि दशाऽस्तु का वः
स्वेच्छानिरस्तनिजसंस्कृतिवेशवाचाम् ॥२६॥
एते पद्ये मामकीने ।।

हे शुक त्वं यज्जनरञ्जनेन ग्रासार्जनाय निजगिरं परित्यज्य परभाषामङ्गीकरोषि, किं तवाऽयं पञ्जरेऽवरोधस्तस्यैवाऽपराधस्य फलम् ? शुकः प्रतिवदति—भो मानव अहं तु प्राक्कृतस्य कस्यचित् पाप्मनो दुर्विपाकवशात् पञ्जरबद्धो विवशः सन् परगिरमुद्गिरामि, तामपि कण्ठमात्रेण न तु हृदा । यदि तथापि दण्डनीयोऽस्मि संवृत्तस्तर्हि ये मानवाः स्ववेशभाषासंस्कृत्यादिकं स्वेच्छया तिरस्कृत्य हीनमपि परकीयमेव सर्वमङ्गीकुर्वन्ति तेन च गर्वमनुभवन्ति तेषां का दशा भविष्यति ? अत्र नैवाऽस्मि यूयमिव तेन च गर्वितो वा । इति शुकोत्तरे स्ववेशभाषादितिरस्कर्तारस्तिर्यग्भ्योऽपि हीनतरा इति व्यतिरेकः । "उपमानाद् यदन्यस्य व्यतिरेकः स एव सः" इति तल्लक्षणं काव्यप्रकाशे दशमोल्लासे । अत्र कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेन व्यतिरेकालङ्कारेण स्ववेशभाषादितिरस्कारस्य हीनभावनयाऽन्येषामन्धानुकरणस्य च **गर्हारूपं वस्तु व्यज्यते ।**

विषयप्रतिपादनस्य शैलीयं वैदिककवये (परमात्मने) नितरां रोचते । अतो भावनाप्रधानेषु प्रसङ्गेषु प्रभावातिशयजननाय स कदाचिदिमामेवाऽनुसरति ।

अस्य कविनिबद्धवक्तृप्रौढोक्तिसिद्धस्य ध्वनेरपि १. व्यञ्जकेन वस्तुना व्यङ्ग्यस्य वस्तुनः, २. वस्तुना अलङ्कारस्य, ३. अलङ्कारेण वस्तुनः, ४. अलङ्कारेण अलङ्कारस्य च व्यञ्जनात् पूर्ववदेव चत्वारो भेदाः संभवन्ति ।

तेषु अर्थशक्त्युद्भवध्वनेः कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिरूपो नवमो भेदः

रमध्वं मे वचसे सोम्याय ऋतावरीरुपमुहूर्तमेवैः ।
प्रसिन्धुमच्छा बृहती मनीषाऽवस्युरह्वे कुशिकस्य सूनुः ।।
ऋक्० ३।३३।५।।

इन्द्रो अस्मानरदद् वज्रबाहुरपाहन् वृत्रं परिधिं नदीनाम् ।

**देवोऽनयत् सविता सुपाणिस्तस्य वयं प्रसवे याम् उर्वीः ।।**

ऋग्० ३।३३।६।।

नदीः प्रति ऋषेर्विश्वामित्रस्येयमुक्तिः। ऋतमुदकं तद्वत्यः ऋतावर्यो नद्यः। हे ऋतावर्यः वर्षासु प्रभूतजला यूयम्। सोम्याय मधुराय मे वचसे मम वचनं श्रोतुम्। मुहूर्तम् क्षणं यावत् एवैः गमनैः उपरमध्वं विरमत 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इत्यनेन एवेभ्य इति पञ्चम्याः स्थाने तृतीयाप्रयोगश्छान्दसः। एवैरिति एवैर् गतिः। कुतो नु वयमुपरमेमहीति चेत्? कुशिकस्य प्रार्थभाकर्तुः जलप्लावनकष्टेन क्रन्दितुः जनसमूहस्य सूनुः सुतः पुत्रवत् प्रतिनिधिरहम्। अवस्युः युष्माकं जलैराप्लावितप्रदेशस्य पीडितजनानां रक्षणमिच्छन्। अव रक्षणे धातोः अवनम् अवस् तेन 'सुप आत्मनः क्यच्' (पाणि० ३।१। ८) इति क्यचि, 'वयाच्छन्दसि' (पाणि० ३।२।१७०) इत्यु-प्रत्यये रूपम्। अथवा—अवनम् अवः। ततः 'सर्व—प्रातिपदिकानां क्यचि लालसायां सुगसुकौ' इत्यनेन अवस्यतीत्यवस्युः। क्याच्छन्दसीत्यु प्रत्यये अवस्युः। सिन्धुम्—सिन्धुः स्रवणादिति निरुक्ते श्रीयास्कः। अथवा सीमानं स्वकूलयोः कूलवर्तिनां प्रदेशानां वा धुनोति उल्लङ्घ्य गच्छतीति सिन्धुः। त्वाम् अच्छा—अभिलक्ष्य आभिमुख्येन वा। बृहती मनीषा बृहत्या मनीषया महता मनोयोगेन। स्तुत्या प्रज्ञया वेति श्रीयास्कः। प्राऽह्वे आह्वयामि प्रार्थये। कोऽसौ कुशिकः? 'कुशिकः क्रोशतेः शब्दकर्मणः क्रंशतेर्वा स्यात् प्रकाशयतिकर्मणः। साधुविक्रोशयितार्थानाम्' इति निरुक्ते यास्कः (अध्या० २। खं० २५) स्वमनोभावानां सम्यक् प्रकाशने कुशलः। तस्य सूनुः पुत्रवत् प्रतिनिधिः सोऽपि तद्गुणविशिष्टः। स च विश्वामित्रः सर्वेषां मित्रत्वमुपगतो न कश्चिद् व्यक्तिविशेषः। उपरमध्वम् इत्यत्र वर्षासु प्रवृद्धोदकाः सर्वाः सरित उपलक्ष्य बहुवचनेन निर्देशः। उत्तरार्धे सिन्धु त्वामित्यत्र प्रत्येकमभिलक्ष्य पृथक् प्राथनायामेकवचनम्।

द्वितीयमन्त्रे नदीनामुत्तरम्—वज्रबाहुरिन्द्रः सूर्यः, मध्यस्थानः (विद्युदात्मा) परमेश्वरो वा। नदीनाम् नभसि नदन्तीनां मेघस्थानाम् अपाम्। परिधिं परितो धीयते इति, सर्वतो व्याप्य भूमौ पतनात् प्रतिरोद्धारम् वृत्रं मेघम् जघान। तेनाघातेन मेघे भिन्ने सति अवरुद्धानि जलानि धारारूपेण पतितानि "वृत्रो मेघे रिपौ ध्वान्ते दानवे

वासवे गिरौ"। इत्यनेकार्थसंग्रहे श्रीहेमचन्द्राः। सविता सर्वप्रेरकः। सुपाणिः शोभनाः किरणरूपाः पाणयो यस्य सः। देवो दानाद्वा, दीपनाद्वा विद्युदात्मा प्रवहन्तीभिर्जलधाराभिर्नो गमनमार्गान् अरदत् अखनत्। रद विलेखने। तस्यैव देवस्य प्रसवे आदेशे प्रेरणायां वा विद्यमाना वयम् उर्वीर्महत्यो नद्यो यामः सततं गच्छामः। अनेन कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना तव प्रार्थनाश्रवणाय **नाऽस्त्यस्माकमवकाश इति वस्तु व्यज्यते**।

अथ अर्थशक्त्युद्भवध्वनेः कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुनाऽलङ्कारध्वनिरूपो **दशमो भेदः**—

**ओषधयः समवदन्त सोमेन सह राज्ञा।**
**यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि॥**
यजु० १२।९६॥

ओषधय इति—सोमश्चन्द्र ओषधिविशेषो वा। स हि ओषधीनां राजा। चन्द्रस्तासु रसानाधत्ते। सोमलता च सर्वौषधीनां प्रमुखत्वात् राजवत्। तेन स्वस्वामिना सह ताः समवदन्त संवादं चक्रुः। तं संवादं वर्णयति—हे राजन् ब्राह्मणः ब्राह्मणवृत्तिः न तु धनलोलुपो भिषक्पाशः। भेषजानां सम्यक् प्रयोगकुशलो वैद्यः यस्मै रोगिणे कृणोति अस्मान् दातुं मनः कृणोति निश्चिनोति तं वयं पारयामसि रोगस्य पारं नयामः, 'इदन्तो मसि' (पाणि० ७।१।४६)। यथा अनुशासने वर्तमानानां शस्त्रास्त्रैः सम्यक्संनद्धानां कुशलसेनानां विजयः संग्रामे निःसन्दिग्धस्तथा परस्परमविरुद्धानां निपुणेन भिषजा सुविचार्य प्रयुक्तानामोषधीनां प्रयोगेण रोगिणो रोगनिवारणमपि सुनिश्चितमित्युपमालङ्कारो **व्यज्यते**।

अथाऽर्थशक्त्युद्भवध्वनेः कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनाऽलङ्कारेण वस्तुध्वनिरूपः एकादशो भेदः—

**आ षु स्वसारः कारवे शृणोत ययौ वो दूरादनसा रथेन।**
**नि षू नमध्वं, भवता सुपारा अधो अक्षाः सिन्धवः स्रोत्याभिः॥**
ऋ० ३।३३।९

**आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन।**

नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते ॥
ऋ० ३।३३।१०॥

ओ षु स्वसार इति—ओ इति सम्बोधनार्थको निपातः। "ओ औ शब्दौ तु हो हौ व सम्बुद्ध्याह्वानयोर्मतौ" इत्यनेकार्थसंग्रहे श्रीहेमचन्द्राः। स्वसारः भगिन्य इव हे सरितः इत्यत्र वाचकलुप्तोपमा। कारवे स्तुतिकर्तुः शिल्पिनो वेति श्लेषः। षष्ठ्यर्थे चतुर्थी। 'कारुः कर्ता स्तोमानाम्' इति निरुक्ते (अध्या० ६। खं० ५) श्रीयास्कः। "कारुस्तु कारके शिल्पे विश्वकर्मणि शिल्पिनि"। इत्यनेकार्थ-संग्रहः। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' (उणा० १।१) इत्यनेन कृधातोरुण्प्रत्यये। कारोर्मम वचनं शृणोत शृणुत। अहम् अनसा शकटेन, रथेन स्यन्दनेन च। दूरात् ययौ अतिदूरप्रदेशादागतः। भारवहनाय अनः आरोहणाय च रथः प्रयुज्यते, तस्मादिह पुनरुक्तिदोषो न शङ्क्यः। रममाणोऽस्मिन् तिष्ठतीति रथः। ममागमनक्लेशं विमृश्य यूयं षु सु सम्यक् निनमध्वं निम्नोदका भवत। न केवलं निम्नाः प्रत्युत सुपाराः सुखेन पारगमनार्हा अपि। तत्कृते किमस्मभिः कर्तव्यम् इत्याह—हे सिन्धवो! यूयं स्रोत्याभिः प्रवलवेगेन स्रवन्तीभिरद्भिः अधो अक्षा भवत मदीयरथस्य अक्षात् अधःप्रदेशपरिमाणोदका भवत। युष्माकं जलं रथस्याऽक्षान्नीचैरेव वहतु। षू—सुनिपाते सकारस्य मूर्धन्यत्वम् उकारस्य दीर्घत्वं च छान्दसम्।

कारुं प्रति नदीनामुत्तरम्—हे कारो स्तोतः शिल्पिन् वा! कारुः कर्ता स्तुतीनाम्। "कारुः शिल्पी" इत्यमरः। वयं ते तव वचांसि आशृणवाम शृणुमः। प्रतिजानीमहे च। किं कारणम्? यतस्त्वं दूरादतिविप्रकृष्टात् प्रदेशाद् अनसा रथेन च ययाथ प्राप्तोऽसि। या प्रापणे धातोर्भूतमात्रे लिटि थलि 'एकाच उपदेशे ऽनुदात्तात्' (पाणि० ७।२।१०) इतीट्प्रतिषेधे[1] रूपम्। तवागमनक्लेशं सुदृढमध्यवसायं च विलोक्य दयार्द्रमनुकूलं च नो हृदयम्। अतो वयं ते त्वदर्थे निनंसै

---

१- यद्यप्यत्र 'एकाच उपदेशे अनुदात्तात्' (अष्टा०७।२।१०) इत्यनेन इट्प्रतिषेधः सिद्धस्तथापीह 'अचस्तास्वत्थल्यनिटो नित्यम्' (अष्टा० ७।२।६१) इत्यनेन थलि इट्प्रतिषेधो वक्तव्यः। सिद्धे सति थलीट्प्रतिषेधो नियमार्थः। तेन ययिव ययिम इत्यत्रेट्प्रतिषेधो न भवति। यु०मी०

नीचैर्भवाम निम्नोदका इत्यर्थः। णम प्रह्वत्वे इति धातोः लेटि उत्तम-पुरुषे 'सिब्बहुलं लेटि' (पाणि० ३।१।३४) इत्यनेन सिपि, 'वैतोऽन्यत्र' (पाणि० ३।४।९६) इत्यैत्वे रूपम्। 'ते' इत्यत्र प्रत्येकमभिलक्ष्य पृथक् व थनादेकवचनम्। कथं वयं नीचैर्भवेम—इत्याकाङ्क्षायाम्-यथा पीप्याना शिशुं पयः पाययन्ती योषा यथा वा मर्याय पुरुषाय "पित्रे मात्रे वेति" तद्भाष्ये श्रीसायणः। तमनुकूलयितुं कन्या शश्वचै परिष्वजनाय नम्रा भवति। मर्येत्यत्र "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" (पाणि० २।३।१४) इति सूत्रेण अप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी। यथा पितरं भ्रातरं वा अनुकूलयितुं परिष्वजनाय कन्या नमति तथा वयमपि ते—तव अनुकूलमाचरितुं निनंसै नम्रा भवामः। 'मर्यो मनुष्यो मरणधर्मा' इति श्रीयास्कः (निरु० अध्या० ३। खं० १५) शश्वचै स्वञ्ज परिष्वङ्गे इति धातोर्भावे संपदादिलक्षणे क्विपि पृषोदरादित्वादिष्टरूपसिद्धिरिति सायणभाष्ये। अथवा श्वच गतौ इति धातुः स्यात्।

"शिशुं पयः पाययन्ती मातेव, पितरं भ्रातरं वाऽनुकूलयितुं कन्येव वयं तव समीहितं संपादयितुं प्रह्वीभवामः" इति कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन नदीवचनस्थितेनोपमालङ्कारद्वयेन समुचितेऽवसरे शरदादौ, समुचिते च प्रदेशे—यत्र नदीनां विस्तारो नात्यधिकः प्रवाहश्च न तीव्रः—तत्र सेतुबन्धादिभिर्याताऽऽयातव्यवस्थां सुसम्पाद्येति वस्तु व्यज्यते।

अथवा—कस्यचित् प्रार्थनामात्रेण नदीनां गाधता सुपारता वा न स्वतः संभवी अर्थः सोऽत्र कविनिबद्धवक्तृप्रौढोक्त्या वर्णितः—वयं तव कृते शिशुं पयः पाययन्ती मातेव पितरं भ्रातरं वाऽनुकूलयितुं नमन्ती कुलमर्यादायां स्थिता कन्येव वा तव समीहितसंपादनाय प्रह्वीभवाम इत्युपमालङ्कारद्वयेन व्यञ्जकेन सेतुबन्धकुल्यानिर्माणविद्युदुत्पादनादिभिरुपायैः सम्युगपचरिताः सरितः कूलमर्यादायां स्थापितास्तथैव राष्ट्रस्य श्रीवृद्धयेऽन्यथा विनाशाय भवन्तीत्युपमाव्यञ्जनाद् अलङ्कारेण अलङ्कारध्वनिरूपो द्वादशो भेदोऽत्र संभवति।

अथार्थशक्त्युद्भवध्वनेः कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन अलङ्कारेण अलङ्कारध्वनिरूपो द्वादशो भेदः—

**वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।**
**अप ध्वान्तमूर्णु हि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान् ॥**

ऋक्० १०।७३।११॥

देवता— इन्द्रः । ऋषिः—गौरिवीतिः शाक्त्यः । छन्दः—त्रिष्टुप् ।

वयः सुपर्णा इति–सुपर्णाः सुपतनाः सुखपतनाः सुखकरं भूमौ पतनमागममनं येषाम्, शोभनगतयो वा । प्रियमेधाः प्रियसङ्गमाः । मेधृ सङ्गमे चेति धातोः । सूर्यस्य सप्तवर्णा रश्मयो निसर्गत एव सङ्गमनप्रकृतयस्ते स्वभावतो विभिन्नवर्णा अपि संभूय श्वेतवर्णं प्रकाशं जनयन्ति । ऋषयो द्रष्टारो दर्शयितारो वा सूर्यकिरणाः । "ऋषिर्वेदे, वसिष्ठादौ दीधितौ च पुमानयम्" इति मेदिनी । ऋषी गतौ धातोः ज्ञानं गमनं प्राप्तिश्चेति गत्यर्थाः । सुपर्णः 'सप्त ऋषयः' चेति पदं निघण्टौ (१।५) रश्मिवाचकपदेषु पठितम् । वयः गन्तारः । रश्मयोऽपि हंसादिकाः खगा इव गगनगतयः । तदुक्तं मन्त्रान्तरे—**ईर्मान्तासः**··· ·········**हंसा इव श्रेणिशो यतन्ते०** (ऋक्० १।१६३।१०) । वा गतिगन्धनयोः इति धातोः "वातेर्डिच्च" (उणा०४।१३५) इति सूत्रेण डित्प्रत्यये विः, तस्य बहुवचने वयः । 'विः विष्किरपतत्रयः' इत्यमरः । अथवा वयः खगा इवेत्युपमा । नाधमानाः इन्द्रम् उपसेदुः याचमाना इव आदित्यं प्राप्ता इत्युत्प्रेक्षा । "इन्द्रः शक्राऽऽदित्यभेदे योगभेदाऽऽन्तरात्मनि" इति मेदिनी । किं याचमानाः ? हे इन्द्र त्वं ध्वान्तं तिमिरम् अपोर्णु हि अपसारय । चक्षुः प्राणिनां नेत्रं च पूर्धि पूरय प्रकाशेनेति शेषः । तन्मया कथं कर्तव्यमित्यपेक्षायां ते प्रोचुः—हे आदित्य सकलां रात्रिं तव मण्डले निधया पाशसमूहेन बद्धानिव निगडितानिव । 'निधा पाश्या भवति, यन्निधीयते । पाश्या पाशसमूहः' इति निरुक्ते (अध्या० ४, खं०२) श्रीयास्कः । अस्मान् मुमुग्धीति पूर्वेणान्वयः । विमुक्तान् नः कुरु ।

**पक्षिपक्षे** - सुपर्णाः शोभनपक्षाः । वयः पक्षिणः । प्रियमेधाः प्रियो मेधः संङ्गमनं येषामिति । ते हि संगत्य समूहे सञ्चरन्ति । ऋषयः गन्तारो गगनगतयः । ऋषी गतौ धातोः "इगुपधात् कित्०" (उणा० ४ । १३५) इति सूत्रेण साधुः । तेऽपि रात्र्यन्धकारे स्वनीडेषु बद्धा इव ब्राह्ममुहूर्ते शिशूनां कृते आहाराऽऽहरणोत्सुकाः प्रकाशं याचमाना इव सूर्यं प्रतीक्षन्त इत्युत्प्रेक्षालङ्कारः ।

एवमभिधावृत्त्या मन्त्रस्यास्य रविरश्मिपरके प्रथमेऽर्थे निर्धारितेऽपि उभयत्र तुल्याभ्याम् ऋषिप्रियमेधविशेषणाभ्याम् नाधमाना इन्द्रमुपसेदुः इति तुल्येन कार्येण प्रस्तुतेषु रविरश्मिषु अप्रस्तुतानां गुरुकुले ब्रह्मचर्यव्रतग्रहणपूर्वकं विधिवदधीतनिगमागमानां प्रत्यासन्नसमावर्तनसंस्काराणां प्रियमेधानां[1] प्रियबुद्धीनाम् ऋषीणां[2] ऋषिकल्पानां दृष्टशास्त्रार्थानां मेधा आशुग्रहणे। आशुग्राहिणी मतिर्मेधा सा प्रिया येषाम्। तेषां विद्याव्रतस्नातकानाम्, इन्द्र च[3] सूर्ये च आचार्यस्य व्यवहारसमारोपात् **समासोक्तिरलङ्कारः**। 'समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः'। इति तल्लक्षणात् (साहित्यदर्पणे दशमपरिच्छेदे षट्पञ्चाशत्तमा कारिका)। सा समासोक्तिश्च समारोपिताऽप्रस्तुतव्यवहारैः सुपर्णैः रविरश्मिभिर्द्राक् करिष्यमाणेन ध्वान्तनिवारणरूपेण, ज्योतिषा लोकचक्षुषा पूरणरूपेण कार्येण च इन्द्रद्वारा करिष्यमाणस्य बन्धनमोचनरूपस्य कारणस्य समर्थनाद् **अर्थान्तरन्यासमलङ्कारं व्यनक्ति**। न चाऽत्र—"न विव्यथे तस्य मनो न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः" इतिवत् अथवा—"पृथ्वि स्थिरा भव भुजङ्गम धारयैनाम्, त्वं कूर्मराज तदिदं द्वितयं दधीथाः[4] दिक्कुञ्जराः कुरुत तत् त्रितये दिधीर्षां देवः करोति हरकार्मुकमाततज्यम्" इतिवद्वा विशेष्यस्य सामान्येन कार्यस्य वा कारणेन समर्थनाद्[5] अर्थान्तरन्यासो वाच्यः।

---

१. यां मेधां देवगणाः पितरश्चोपासते, तया मामद्य मेधयाऽग्ने मेधाविनं कुरु॥ यजु० ३२।१४

'धीर्धारणवती मेधा संकल्पः कर्म मानसम्' इत्यमरः।

२. 'ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्' इति मेदिनी।

३. प्रसङ्गेऽस्मिन् उपनयनसंस्कारे आचार्यब्रह्मचारिणोः संवादोऽवधानयोग्यः।

आचार्यः—कस्य ब्रह्मचार्यसि ? ब्रह्मचारी—भवतः।

आचार्यः—इन्द्रस्य ब्रह्मचार्यसि। अग्निराचार्यस्तव अहमाचार्यस्तव। इह आचार्यः अग्निरूपेणोक्तः। संस्कारविधावुपनयनप्रकरणे।

४. द्र० सा० परि० १०। कारि० ६२ अनन्तरम्। यु० मी०

५. यत्र कारणभूतं हरकार्मुकाततज्याकरणं पृथिवीस्थैर्यादेः कार्यस्य समर्थकम्॥ साहि० ६, परि० १०, कारि० ३१, ३२॥

स तु व्यञ्जनयैवोपलभ्यः। एवमिह कविनिबद्धवक्तृभावानां सुपर्णानां कविप्रौढोक्तिसिद्धेन समासोक्त्यलङ्कारेण अर्थान्तरन्यासव्यञ्जनाद् अलङ्कारेण अलङ्कारध्वनिः।

प्रकाशं याचमाना इव सूर्यं प्रतीक्षन्त इत्युत्प्रेक्षालङ्कारः।

एवमभिधावृत्त्या मन्त्रस्याऽस्य रविरश्मिपरकेऽर्थे निर्धारितेऽपि उभयत्र तुल्याभ्यां ऋषिप्रियमेधविशेषणाभ्याम् "नाधमाना इन्द्रमुपसेदुः" इति तुल्येन कार्येण च प्रस्तुतेषु रविरश्मिषु अप्रस्तुतानां गुरुकुले ब्रह्मचर्यव्रतसाधनपूर्वकं विधिवदधीतनिखिलनिगमाऽऽगमानां प्रत्यासन्नसमावर्तनसंस्काराणां प्रियमेधानां[1] प्रियबुद्धीनाम् । विद्याव्रतस्नातकानाम् इन्द्रे[2] च आचार्यस्य व्यवहारसमारोपात् समासोक्तिरलङ्कारः। 'समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः" (साहि० परि० १०, कारि० ५६) सा समासोक्तिश्च समारोपिताऽप्रस्तुतव्यवहारैः सुपर्णैः करिष्यमाणेन ध्वान्तनिवारणरूपेण, लोकचक्षुषां ज्योतिषा पूरणरूपेण कार्येण च इन्द्रेण करिष्यमाणस्य बन्धनमोचनरूपस्य कारणस्य समर्थनाद् अर्थान्तरन्यासमलङ्कारं व्यनक्ति। इह कविनिबद्धवक्तृभावानां सुपर्णानां प्रौढोक्तिसिद्धेन समासोक्त्यलङ्कारेण अर्थान्तरन्यासव्यञ्जनादलङ्कारेण अलङ्कारध्वनिः। न चाऽत्र—पृथ्वि स्थिरा भव, भुजङ्गम धारयैनां त्वं कूर्मराज तदिदं द्वितयं दधीथाः। दिक्कुञ्जराः कुरुत तत् त्रितये दिधीर्षां देवः (श्रीरामः) करोति हरकार्मुकमाततज्यम्'[3] ।। इत्यत्रवत् कार्यस्य कारणेन अभिधोपस्थापितोऽर्थान्तरन्यासः, तथाविधस्फुटत्वाऽभावात् ।।

अथ अष्टादशः (अर्थान्तरसंक्रमितवाच्य० इत्यारभ्य) शब्दार्थोभयशक्त्युत्थितो ध्वनेः एकोभेदः स च केवलवाक्यगतः। वाक्यगतत्वादेव इह केचन शब्दाः परिवर्तनसहाः, यतस्तेषां पर्यायवाचक-

१. धीर्धारणावती मेधा। मेध आशुग्रहणे। ज्ञेयं विषयमाशु आत्मसात्करोति या मतिः सा मेधा।

२. इन्द्र इह सूर्योऽग्निश्च। 'इन्द्रः शक्रादित्यभेदे योगभेदान्तरात्मनि' इति मेदिनी, आचार्यः सूर्यवत् अग्निवद्वा ब्रह्मचारिणः पथप्रदर्शक आदर्शश्च।

३. द्र०—पृष्ठ २१७ टि० ५।

पदप्रयोगेऽपि व्यङ्ग्यार्थस्य न क्षतिः । अपरे अपरिवर्तनसहाः येषां पर्यायवाचकपदप्रयोगे विवक्षितो व्यङ्ग्योऽर्थो न प्रतीयते क्षीयते हि सः । एवमस्य अनेकपदगतत्वात् वाक्यगतत्वमपरिहार्यमेव ।

व्यङ्ग्यार्थप्रसङ्गे यद्यपि सर्वत्रैव शब्दशक्तेरर्थशक्तेश्च सहकारिता, शब्दश्रवणतदर्थानुसन्धानयोरभावे व्यङ्ग्यार्थस्यैवाऽनुध्यानात् । तथाऽपि परिवर्तनाऽसहानां पदानां प्राचुर्ये, तत्र सत्यामप्यर्थशक्तौ तस्या गुणीभावात् तत्र शब्दशक्तिमूलकतया व्यवहारः । परत्र, परिवर्तनसहानां पदानां प्राचुर्येऽन्ये वा क्वचित् सत्यामपि शब्दशक्तौ अर्थशक्तिमूलकतया व्यवहारः । उभयविधानां पदानां प्रायः साम्ये तु व्यङ्ग्यार्थस्योभयशक्तिमूलकता । स च द्व्यर्थध्वनेरवकाशविषयः ।

अथ ध्वनेरष्टादशः शब्दार्थोभयशक्तिसमुत्थितः केवलवाक्यगतोऽलङ्कारात्मकश्चैको भेदः—

वाक्यगतत्वादिह केचनशब्दाः परिवर्तनसहा यतस्तेषां पर्यायवाचकपदप्रयोगेऽपि व्यङ्ग्यार्थोऽक्षुण्णः । अपरेऽपरिवर्तनसहा येषां पर्यायवाचक पदप्रयोगे व्यङ्ग्यार्थोऽप्यपैति । एवमस्याऽनेकपदगतत्वात् वाक्यगतत्वमपरिहार्यम् । इत्याह—

> यत्र पर्यायशब्दानां प्रयोगात् परिवर्तनम् ।
> सहन्ते व्यञ्जकाः केचित्, केचिच्छब्दा न तादृशाः ॥२७॥
>
> शब्दार्थयोर्द्वयोः शक्त्योत्त्थितो वाक्येऽयमेककः ।
> सर्वेषां मेलनादेषामष्टादशविधो ध्वनिः ॥२८॥

यथा—

> सरला विरलायन्ते घनायन्ते कलिद्रुमाः ।
> न शमी न च पुन्नागा विराजन्ते महीतले ॥
>
> कस्यापि सूक्तम् ॥

इह लोके सरला ऋजुप्रकृतयः पुरुषा विरलायन्ते अल्पशो भवन्ति । कलेः कलहस्य द्रुमा वृक्षा इवेति लुप्तोपमा । वैरविरोधवर्धकास्तु जना घनायन्ते बहुशो लभ्यन्ते । "कलिर्विभीतके शूरे विवादेऽन्त्ययुगे (कलियुगे) युधि"—इत्यनेकार्थसंग्रहे श्रीहेमचन्द्राः । शमी शमवान् शान्तप्रकृतिको जनः पुन्नागाः पुरुषश्रेष्ठाश्च इह भूतले बहवो न विराजन्ते । एवमभिधावृत्त्या मुख्यार्थे प्रतीतेऽपि वृक्षविशेषवाचकानां सरलकलिद्रुम-

शमीपुन्नागपदानां साहचर्यात् सरलास्तन्नामका देवदारुद्रुमाः, विरलायन्ते विरलपत्रशाखा भवन्ति, अथवा समुन्नतेषु केषुचिदेव पर्वतप्रायप्रदेशेषु प्राप्यन्ते न सर्वत्र। कलेर्विभीतकनामकस्य फलस्य वृक्षास्तु घनायन्ते सघनपत्रशाखा भवन्ति सर्वत्र बाहुल्येन वा लभ्यन्ते। शमीनामकाः पुन्नागाख्याश्च तरवो भूमितले न विराजन्ते भूयांसो न शोभन्ते 'सरला देवदारवः' इत्यमरः। "पुन्नागस्तु सितोत्पले। जातीफले नरश्रेष्ठे पाण्डुनागे द्रुमान्तरे" इति मेदिनी। इति रूपोऽपरोऽर्थो व्यञ्जनालभ्यः। अत्र सरलपदेन समानपदवाच्यतया सत्पुरुषाणां देवदारुद्रुमाणां चौपम्यं गम्यते। तथा कलिद्रुमपदेनापि दुर्जनविभीतकवृक्षयोरौपम्यम्। एवं शमीपुन्नागपदाभ्यामपि वृक्षविशेषयोर्व्यंजना तयोः साम्यं च गम्यते। किंच सरलकलिद्रुमयोर्भेदवर्णनाद् **व्यतिरेकालङ्कारः**। 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः'। तथा पद्यस्योत्तरार्धे प्रस्तुतयोः शमीपुन्नागयोर्दुर्लभत्वरूपैकधर्मसम्बन्धवर्णनात् **तुल्ययोगिता**। ततश्च ताभ्यां व्यतिरेकतुल्ययोगिताभ्याम् देवदारुद्रुमाणां सज्जनानां विभीतकानां दुर्जनानां च साम्यव्यञ्जनाद् **अलङ्कारादलङ्कारव्यञ्जना**। अत्रैव चतुर्थचरणे 'न विराजन्ते महीतले' इत्यस्य स्थाने 'संसारकानने' इति पठनाद्रूपकम्। शाब्देन संसारे काननत्वारोपेण सरलपुरुषेषु देवदारुत्वारोपो व्यङ्ग्यः। तेनेह परम्परितरूपकालङ्कारः। एवं कलिद्रुमशमीपुन्नागपदेषु स्वयमूह्यम्। इह सरलकलिद्रुमादयः शब्दाः परिवर्तनं न सहन्ते। सरलपदस्य स्थाने ऋजुपदप्रयोगे कलिद्रुमस्य स्थाने विभीतकपदप्रयोगे च तत्तदलङ्काराणामभावः।

यथा वा—

**जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः।**
**किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रदुर्जनाः॥** कुवलयानन्दे।

घटीयन्त्रस्य (लोकभाषायां रहट इति प्रसिद्धस्य) वर्णनप्रसङ्गे "पयः कीलालममृतं जीवनं भुवनं वनम्'। इत्यमरप्रामाण्यादिह जीवनपदस्य शक्तिर्जले नियम्यते। तदा च जीवनस्य कूपतलस्थितोदकस्य ग्रहणे ग्रहणनिमित्तम्। इह निमित्तार्थे सप्तमी। नम्रा अधोमुखाः। जीवनं जलं गृहीत्वा आदाय तु पुनरुन्नता ऊर्ध्वमुखा घटीयन्त्रस्थघटा इव दुर्जना अपि जीवनग्रहणे परेषां प्राणापहरणे धनाद्यपहरणे वा नम्रा

विनीताः स्वदुष्कृत्यं सम्पाद्य जीवनादि गृहीत्वेत्यर्थः। "जीवनं वर्त्तने जीवप्राणधारणयोर्जले" इति मेदिनी। पुनरुन्नताः साफल्यदर्पणोद्धताः ते खलाः तथाविधेनाचरणसादृश्येन घटीयन्त्रस्य तद्बद्धघटस्य किं कनिष्ठा भ्रातर इव किंवा ज्येष्ठा इवेति—"अप्रसिद्धकोटिकोऽयं तु कल्पितकोटिकः सन्देहः"। इति कुवलयानन्दे सन्देहालङ्कारप्रकरणे (२५ कारि०) श्रीमदप्पयदीक्षिता यदाहुस्तन्न साधु। किमिति पदेन आपाततः प्रतीतेऽपि सन्देहेऽविश्रान्त्यभावात्। इह घटीयन्त्रबद्धा घटा अधिकनिन्दनीया दुर्जना वेति क्षणिकाऽऽभासेऽपि दुर्जननिन्दायामेव वक्तुस्तात्पर्यात्। किंच घटो न गर्हाऽर्हः जडस्य तस्य तादृग्व्यवहारः प्रकृतिसिद्धो न विचारपूर्वकः स्वेच्छाचरितो वा। चेतनस्य दुराचार एव निन्दाऽर्हो नाऽचेतनस्य। तस्मात् कविप्रौढोक्त्या घटस्य दुर्जनस्य च व्यवहारे किंचित् तुल्यत्वाऽऽभासं प्रदर्श्य दुर्जननिन्दाधिक्यव्यञ्जनाद् **व्यक्तिरेकध्वनिरेव**। इह जीवनपदम् अपरिवर्तनसहं नम्रोन्नतादीनि तु परिवृत्तिसहानीति द्व्युत्थोऽयं व्यतिरेकध्वनिः।

यथा वा—

**हेमाम्बरा हेमकिरीटभाला पुरःस्फुरत्कांचनकेतुमाला।**
**देवी सदोषा निहतप्रदोषा विराजते कीर्णसुवर्णकोषा॥२६॥**

हेममयमम्बरं गगनं यया, हेममयं किरीटं मुकुटं भाले यस्याः,पुरोऽग्रतः स्फुरन्ती काञ्चनमयी केतूनां द्युतीनां सुरुचां माला पताका यस्या अथवा केतवो रुच एव मालाः पताकाः यस्याः सा। निहतप्रदोषा विनाशितनिशा, सर्वतः कीर्णाः शोभनवर्णानां रक्तपीतादीनां कोशा यया तथाविधा उषाः देवीव राज्ञीव "देवी कृताभिषेकायाम्" इति मेदिनी। सदा नित्यं विराजते। राज्ञीपक्षे—हेममयानि अम्बराणि वसनानि यस्याः। सुवर्णमयं किरीटं भाले यस्याः, पुरः मार्गेऽग्रतः स्फुरन्ती कांचनमयी पताकानां माला यस्याः सा निहता प्रचुरदोषकर्तारो मानुषा यया तथाविधा देवी राज्ञी उषा इव विराजते। "केतुर्ना रुक् पताका विग्रहोत्पातेषु लक्ष्मणि" इति मेदिनी। इह अम्बरसुवर्णप्रदोषादीनि पदानि अपरिवृत्तिसहानि। इतराणि परिवृत्तिसहानि। उषाः सदा देवीव विराजते इत्युपमाध्वनिः।

यथा वा—

**अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।**
**अजो ह्येको जुषमाणोऽनु शेते जहात्येनां भुक्तभोगामजोऽन्यः ॥**

श्वेताश्वतरोपनिषदि ४।५॥

अजामेकामिति—लोहितशुक्लकृष्णां शोणश्वेतश्यामवर्णाम्, स्वसदृशीर्भूयसीः प्रजाः सन्ततीः सृजमानां जनयन्तीम् एकामजां छागीं द्वयोरजयोरन्यतरः जुषमाणः तत्रानुरक्तः सेवमानो वा, जुषी प्रीति-सेवनयोः । अनुशेते तया संपर्कं करोति अनुतपति च । "......अथानुशयो दीर्घद्वेषाऽनुतापयोः" इत्यमरः । अन्योऽजः न जायते उत्पद्यते इति आत्मा तत्त्वज्ञः "अजश्छागे हरिब्रह्मविधुस्मरहरे नृपे" । इति मेदिनी । लोहितं रजः, श्वेतं सत्त्वम्, श्यामं तमः । एवं वर्णत्रयात्मिकां गुणत्रयवतीमजां सदा वर्तमानत्वादजा न कदाचिज्जायत इति, तां प्रकृतिम् । स्वसदृशीः भूयसीः सुखदुःखमोहात्मिकाः सृष्टीर्जनयन्तीम्, अपरोऽजः जहाति मुञ्चति । निवृत्तौत्सुक्यत्वात् जहाति मुञ्चति । मुक्तो भवति । इह अजा अजयोः प्रकृत्यात्मनोरौपम्यं गम्यते । अजाऽजपदे, परिवर्तनं न सहेते लोहितादयस्तु, तत् सहन्ते । अतः उभयोः शब्दार्थयोः शक्त्या सन्नुत्थितोऽयमुपमालङ्कारध्वनिः ।

अथवा—

**उपह्वये सुदुघां धेनुमेतां सुहस्तो गोधुग् उत दोहदेनाम् ।**
**श्रेष्ठं सवं सविता साविषन्नो ऽभीद्धो धर्मस्तदु षु प्रवोचम् ॥**

ऋ० १।१६४।२६॥

देवता—विश्वेदेवाः । ऋषिः—दीर्घतमा औचथ्यः । छन्दः—त्रिष्टुप् ।

उपह्वये सुदुघामिति - सुदुघां शोभनं दोहनं दुग्धं यस्याः । अथवा सुखेन दोहनार्हाम् । एनां गाम्, अहं गृहपतिः उपह्वये आह्वयामि । 'धेनुर्धयतेः धिनोतेर्वति । तथा घर्मंधेनुरिति याज्ञिकाः' इति निरुक्ते (११।४३) श्रीयास्कः । धेनुर्धयति वत्सान् धीयते वत्सैरिति वेति धेट् पाने धातोः—धेट इच्च (उणा० ३।३४) नुप्रत्यये साधु । उत अपि च सुहस्तो दोहननिपुणपाणिः गोधुग् दोहनकर्मणि नियुक्तो दोग्धा एनां दोहत् दोग्धि दुग्धां वा । सविता सर्वेषां प्रेरकः प्रसविता वा

परमात्मा अथवा सूर्यः। नः अस्माकं कृते। अस्यां श्रेष्ठं सवं साविषत् प्रकृष्टं प्रचुरं च पयः जनयतु अनुजानातु वा। इयमस्माकं कृते प्रचुर-दोहा भूयादिति भगवाननुजानातु। सूयते इति सवः। पयो घृततक्रा-दिक पदार्थजातम्। किमर्थमियं प्रार्थनेति चेत् ? यतो हि घर्मः ग्रीष्मः। अभीद्धः प्रदीप्तः। प्रखरग्रीष्मजनितसन्तापशान्तये शीतल-पयोदध्यादिकमेव प्रभवतीति भावः। तद् उ सु प्रवोचम् अत एव तत्पूर्वोक्तं प्रार्थनावचनं सु सम्यक् प्रवोचम् अभिहितवानस्मि। सु इत्यस्य मूर्धन्यत्वं छान्दसम्।

एवमभिधावृत्त्या मन्त्रस्याऽस्य गोपरकेऽर्थे निर्धारितेऽपि माध्य-मिकवाक्परको मेघमालापरको वा योऽर्थोऽवगम्यते स व्यञ्जनालभ्य एव। "गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयी दृग्वाणदिग्वाग्भूम्यप्सु भूम्नि च" इति मेदिनी। कुलिशोऽशनिर्विद्युद्वा। यजमानो होता लोको वा भुवि दीर्घाऽवग्रहग्रस्तः प्रार्थयते—उदधिभ्यः सूक्ष्मं वाष्पात्मकं जलमादाय व्योम्नि विचरन्तीम् एतां धेनुम् अशनि-गर्भां मेघमालां वा वृष्टिकामोऽहं यज्ञैः प्रार्थनाभिर्वा आह्वयामि अभि-मुखीं करोमि। सुहस्तः शोभनाः रश्मिरूपाः करा यस्य स सविता सूर्य एव गोधुग् एतां दुग्धां दोहतु। पुरुषसूक्ते समाजो राजा परमात्मा च पुरुषरूपेण वर्णितः। क्षत्रियास्तस्य बाहवः। 'बाहू राजन्यः कृतः' (यजु० अ० ३१। मं० ११)। स हि करैः आयषष्ठांशैः प्रजारूपां गां दोग्धि। तदुक्तं श्रीकालिदासेन रघुवंशस्य चतुर्थसर्गे—'दुदोह गां स यज्ञाय सस्याय मघवा दिवम्'। भगवद्गीतायामपि[1]। यज्ञैः प्रसादितः प्रभुः श्रेष्ठं सवं जलमयं स्वप्रसवं साविषत् जनयतु वर्षत्वित्यर्थः। किमर्थम् ? यतो घर्मः ग्रीष्मः अभीद्धः प्रदीप्तः। दीर्घावर्षणजन्येन जलशोषणेन शस्यशष्पतरुलतादिकं सर्वं शुष्कप्रायम्। तस्माद्धेतोः पूर्वोक्तं प्रार्थनावचनं सु सम्यक् प्रवोचं सादरमुक्तवानस्मि। इह—सवं सविता साविषद् इत्यत्र सकारवकारयोरसकृदावृत्त्या वृत्त्यनु-प्रासः। साविषत् 'षु प्रसवैश्वर्ययोः' इति धातोर्लेटि रूपम्। मन्त्रेऽस्मिन् धेनोः मध्यस्थानदेवताया विद्युतश्च उपमेयोपमानभावोऽवगम्यते इत्य-

---

१. अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसंभवः।
यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः॥ ३।१४॥

लङ्कारध्वनिः। सुदुघां, धेनुम्, गोधुक् पदान्यपरिवृत्तिसहानि। उत्तरार्धस्य प्रायः सर्वाणि पदानि परिवृत्तिसहानीत्युभयशक्तिसमुद्भूतो वाक्यमात्रगतो ध्वनिः। अथवा धेनुः सूनृता (वेदवाक्)। तदाह—भवभूतिः—'धेनुं धीराः सूनृतां वाचमाहुः'। सा हि सम्यगधीता सुप्रयुक्ता च सर्वेषां सन्तापसन्ततिं शमयति नितरां सुदुघा सुबोधा चेत्याशयः।

एवं ध्वनेरष्टादश प्रधानतया भेदा निरूपितास्तेषामेष संग्रहः—

संक्रान्तेऽर्थान्तरं वाच्ये, तथाऽत्यन्ततिरस्कृते।
अविवक्षितवाच्यार्थो लक्षणामूलको ध्वनिः ॥३०॥

असंलक्ष्य क्रमव्यङ्ग्यो रसभावादिरूपकः।
विवक्षितेऽपि वाच्येऽन्यनिष्ठे (व्यङ्ग्यपरके सति)
चैकोऽभिधोत्त्थितः ॥३१॥

लक्ष्यमाणक्रमव्यङ्ग्ये वस्त्वलङ्कारभेदतः।
शब्दशक्तिसमुद्भूतो द्विविधो भवति ध्वनिः ॥३२॥

अर्थशक्त्युद्भवा भेदा द्वादशै, को द्वयोत्त्थितः।
एषां संकलनादष्टादश भेदा ध्वनेरिमे ॥३३॥

अस्य अष्टादशप्रकारकस्य ध्वनेर्भूयान् प्रपञ्चः[1]—

अभिधा लक्षणा मूलतयाऽऽदौ द्विविधो ध्वनिः।
अविवक्षितवाच्येऽर्थेऽन्यनिष्ठेऽथाऽविवक्षिते ॥३४॥

अन्यनिष्ठे व्यङ्ग्यार्थपरके सतीत्यर्थः।

अविवक्षितवाच्यार्थो लक्षणमूलको ध्वनिः।
बाधिते सति वाच्येऽर्थे जायते लक्षणोदयः ॥३५॥

रात्रौ यथा रवेराभा स्वतो न पुरतः स्थिता।
प्रकाश्य शशिनं तेन भासयत्यखिलं जगत् ॥३६॥

अविवक्षितवाच्येऽस्मिन् वाच्यार्थो बाधितो भवन्।
स्यादर्थान्तरसंक्रान्तो नितरां वा तिरस्कृतः ॥३७॥

---

१. समस्तस्य ध्वनिविषयस्य एकत्रैव सर्वाङ्गीणदृष्टिलाभाय अपेक्षिताः काश्चन पूर्वपठिताः कारिका अपि इह पुनः पठ्यन्ते।

स्वार्थान्तरं तु संक्रान्ते वाच्येऽर्थेऽनुपयोगिनि ।
स्यादर्थान्तरसंक्रान्ताऽऽख्यो भेदः प्रथमो ध्वनेः ॥३८॥

वाच्येऽर्थे स्वमेव विशिष्टमर्थं संक्रान्ते अतएव प्रकृतेऽनुपयोगिनि सतीत्यर्थः ।

यत्राऽत्यन्ततिरस्कृतवाच्याऽर्थोऽन्यं ददाति शब्दोऽर्थम् ।
स ह्यत्यन्ततिरस्कृतवाच्यो भेदो ध्वनेर्द्वितीयः स्यात् ॥३९॥

तावुभावपि पूर्वोक्तौ पदवाक्यगताविति ।
द्विधा विभज्यमानत्वाच्चातुर्विध्यमवाप्नुतः ॥४०॥

मुद्रिकैकाऽङ्गुलिस्थाऽपि भूषयत्यखिलं वपुः ।
तथैवैकपदस्थोऽपि पद्यं भूषयति ध्वनिः ॥४१॥

व्यङ्ग्यार्थोपस्थितावेकपदस्यैव प्रधानता ।
सहकारित्वमन्येषां तदा पदगतो ध्वनिः ॥४२॥

अभिधावृत्तेः प्रधानतया यद्यपि तन्मूलकध्वनेरेव प्रथमं निरूपणं प्राप्तावसरम्, तथापि तस्य बहुविषयतया, स्वल्पविषयस्य लक्षणामूलध्वनेरेव प्राङ्निरूपणं सूचीकटाहन्यायेन समुचितमिति तेनैवोपक्रमते—

(१) अथ लक्षणामूलकः संलक्ष्यक्रमव्यङ्ग्योऽविवक्षितवाच्यः (क) अर्थान्तरसंक्रमितवाच्यः, (ख) अत्यन्ततिरस्कृतवाच्यश्चेति सोऽपि पदवाक्यगतत्वाच्चतुर्विधः ।

अर्थान्तरसंक्रान्तवाच्यो ध्वनिः पदगतो यथा—

यस्मिन् जीवति जीवन्ति बहवः सोऽत्र जीवति ।
वयांसि किं न कुर्वन्ति चञ्च्वा स्वोदरपूरणम् ॥ कस्यापि

इह द्वितीयं जीवतीति पदं सर्वैः श्लाघ्यमानो जीवतीति श्लाघनीयताविशिष्टजीवनानुकूलव्यापारवद्रूपे स्वकीय एव अर्थान्तरे संक्रान्तम् । प्रथमम् 'जीवति' पदं तु 'जीव प्राणधारणे' इति धातोः शतृप्रत्यये सप्तम्येकवचने रूपम् । इह वैधर्म्यमूलको दृष्टान्ताऽलङ्कारः । तल्लक्षणम्—'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्' (साहित्यद०, परि १०,कारि ५०) । अत्र विभिन्नयोः उपमानोपमेयवाक्ययोर्भिन्नावेव धर्मौ बिम्बप्रतिबिम्बभावेन निर्दिष्टौ । न चेयं प्रतिवस्तूपमा

तत्र उपमानोपमेयवाक्ययोर्वस्तुत एकोऽपि धर्मः कथितपदत्वदोषपरिजिहीर्षया विभिन्नशब्दैरभिधीयते। इह तु प्राणधारणस्य उदरभरणस्य च नैक्यम्। नाऽप्यर्थान्तरन्यासः तत्र सामान्यं विशेषेण विशेषो वा सामान्येन समर्थ्यते। न चात्र समर्थनमेकस्याऽवरेण किन्तु केवलं बिम्ब-प्रतिबिम्बभाव एव। बिम्बं शरीरम्, प्रतिबिम्बं दर्पणादौ तस्यच्छाया। तयोर्भावः बिम्बप्रतिबिम्बत्वम्।

यथा वा मम—

उपकुर्वन्ति येनाऽन्यान् धनिनां तद्धनं धनम्।
निधनं तत्तु नाशाय यत् परस्यात्मनस्तथा ॥

इह द्वितीयं धनपदं वित्तरूपे स्वकीये सामान्येऽर्थे पुनरुक्तमतोऽनुपपन्नं सत् सफलधनरूपे स्वकीयविशिष्टार्थे संक्रान्तम्। किंच—यद्धनं धनिनः परेषां वा निधनाय नाशाय तन्न धनं किन्तु निधनं मरणमेवेति "प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः" (सा० द० परि० १० कारि० ३८) इत्युक्तस्वरूपाऽपह्नुतिः। सा च मरणहेतोर्मरणेन अभेदप्रतिपादनाद् हेत्वलङ्कारः। "अभेदेनाऽभिधा हेतोर्हेतुहेतुमता सह"॥ (सा० द० परि० १०। कारि० ६४)। तेन अपह्नुतिहेत्व-लङ्कारयोरङ्गाङ्गिभावसङ्करः॥

अपि च—

स्वच्छन्दाः परितो भ्रमन्तु विपिने सिंहाः कुरङ्गाशनाः
पुंसां रक्तपिपासवो जनपदे नाम्नैव सिंहाश्च ये।
कस्माच्चिन्न मनागपि स्पृशति यच्चित्तं कदाचिद् भयं
भो जानीत जना यदस्मि स दयानन्दः परिव्राडहम् ॥

इदं पद्यं मम ॥

इह श्रीदयानन्दे वक्तरि स्वोपस्थित्या वक्तृत्वेनैव च लभ्ये दयानन्दपदं महर्षेः निर्भयताविशिष्टे स्वीय एवाऽर्थान्तरे संक्रान्तम्।

तथा—

तद् ब्रूहि वचनं देवि राज्ञो यदभिकाङ्क्षितम्।
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ॥

वाल्मीकिरामायणेऽयोध्याकाण्डेऽष्टादशसर्गे ३०शः श्लोकः ॥

अत्रापि श्रीरामे स्वोपस्थित्यैव वक्तृत्वेन च लभ्ये पुना राम इति पदमनुपयुक्तं सत् तस्य पितृभक्तिसत्यप्रतिज्ञत्वदुःसाध्यतमकार्य-साधकत्वादिगुणविशिष्टे स्वकीय एवाऽर्थान्तिरे संक्रान्तम् । श्रीकाव्य-प्रकाशकारास्तु—

**यस्य मित्राणि मित्राणि, शत्रवः शत्रवस्तथा ।**
**अनुकम्प्योऽनुकम्प्यश्च स जात. स च जीवति ॥**

का० प्र० उल्ला० ४॥

पद्यमिदमर्थान्तरसंक्रान्तध्वनेः पदगतत्वेनोदाजहार । तथाहि—'अत्र द्वितीयमित्रादिशब्दाः पुनरुक्तत्वादनुपयुक्ता अतएव अविवक्षित-वाच्याः सन्तः आश्वस्तत्व-नियन्त्रणीयत्व-स्नेहपात्रत्वे संक्रमित-वाच्याः ।.........तेन नायकस्योचितव्यवहारित्वादिकं व्यङ्ग्यम् उपादानलक्षणायाः फलमिति ।' तदुक्तमुद्योते—अत्राऽर्थान्तर-संक्रमित-वाच्यै-मित्रादिशब्दै-राश्वस्तत्वादे-र्यावज्जीवस्थायित्व--रूपतदतिशयव्य-ञ्जनद्वारा नायकदृढप्रकृतिकत्वं व्यङ्ग्यम् । अत्र त्रयाणामपि (उप) वाक्याऽर्थानां (यस्य मित्राणि विश्वसनीयानि सन्ति, यस्य शत्रवो दमनार्हाः, यस्य अनुकम्प्याः कृपार्हाश्चेति) रूपाणाम्, प्रत्येकविश्रान्त-त्वेन नैकवाक्यता "त्वामस्मि वच्मि विदुषाम्" इत्यत्रवत् । तेन तत्तद्वा-क्यगतस्य एकैकपदस्यैव (मित्राणीत्यादिकस्य) व्यञ्जकता न तु समग्रस्य वाक्यस्येति **पदप्रकाश्योऽयं ध्वनिः** । उक्तं च विवरणे—"अत्र हि मित्रादि प्रत्येकमेव पदं लक्षकं सत् नायकस्योचितव्यवहारित्वादिकं प्रकाशयतीति यथोक्तोदाहरणत्वमिति । त्वामस्मि वच्मीत्यादौ तु व्यङ्ग्याऽर्थस्योपस्थितिः एकवाक्यस्थैः सर्वैरेव पदैरिति **ध्वनेर्वाक्य-प्रकाश्यत्वमिति**" ।

अस्माकं मते तु—अस्य शत्रवः शत्रव एव न तु मित्रत्वशत्रुत्वयो-र्मध्ये कस्मिश्चिदनिश्चितेऽन्तरालेऽवलम्बमानाः कदाचित् मित्रत्वा-भिलाषका अपि क्षणादूर्ध्वं प्रत्यक्षप्रतिपक्षाः इत्यनिर्दिष्टस्वरूपाः । यथाऽस्माकं प्रतिवेशिनः पाकिस्ताननेतारः । परत्र भारतीयनेतारोऽपि कदाचित्—पाकिस्तानस्य निर्माणमेव परस्परघृणां विद्वेषमविश्वासं चाधारीकृत्यैव अजायत इत्युद्घोषयन्तोऽपि शान्तिसद्भावमृगतृष्णा-ऽऽकुलाः कदाचिच्छिमलायोजनाम् अन्येद्युरिन्द्रप्रस्थवार्तामिस्लामाबाद-

सम्मेलनादिकं योजयन्तः क्षणे प्रसीदन्तः क्षणे विषीदन्तः स्वराजनीति-पाटवं प्रकटयन्ति ।

अत एवोच्यते—

**ध्वस्तं कीटपतङ्गवद्रिपुबलं, शेषं च वन्दीकृतं**
**पञ्चक्रोश-सहस्र-सम्मितमहीभागो बलान्निर्जितः ।**
**टैङ्का जङ्गमदुर्गदुर्गमदृढा नीता क्षयं लीलया**
**शान्त्याशा मृगतृष्णया युधि जितं वार्तासु भूयोऽर्पितम् ।।**

इदं पद्यं मम ।।

भगवद्गीतामधीतवतोऽप्यस्मान् स एवार्जुनविषादयोगो नाद्यापि मुञ्चतीति चित्रम् । अयं पदगतोऽर्थान्तरसंक्रान्तो ध्वनिर्वेदेऽपि—

**अहमिन्द्रो न पराजिग्य इद्धनं न मृत्यवेऽवतस्थे कदाचन ।**
**सोममिन्मा सुन्वन्तो याचता वसु न मे पूरवः सख्ये रिषाथन ।।**

ऋ० १०।४८।५।।

देवता—इन्द्रः । ऋषिः—वैकुण्ठः । छन्दः—जगती ।

अहमिन्द्र इति—इह वक्तरि इन्द्रे स्वोपस्थित्यैव लभ्ये पुनरपि अहमिन्द्र इति पदं तस्याऽलोकसामान्यमैश्वर्यं तेजस्वित्वम् आत्म-विश्वासादिकं च लक्षयति, तस्मिन्नेतेषां गुणानामतिशयप्रकाशनं च फलम् । इन्द्रः "इरां दृणातीति वा, इरां ददातीति वा, ...... इन्धे भूतानीति वा । तद्यदेनं प्राणैः समैन्धँस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायते । ........................इन्दतेर्वैश्वर्यकर्मणः । इन्दञ्छत्रूणां दारयिता वा द्रावयिता वा । आदरयिता च यज्वनाम्" इति (निरुक्ते अ० १०।८) श्रीयास्कः । "इरा भूवाक्सुराऽम्बुषु" इति मेदिनी । इन्द्रः आत्मा (पुरुषः) आत्माऽहमस्मीति तत्त्ववित् । अथवा इन्द्रः नृपः । इन्द्रः पर-मात्मा वा । "इन्द्रः शक्रेऽन्तरात्मनि । आदित्ये योगभेदे चेति" श्री-हेमचन्द्रा अनेकार्थसंग्रहे । 'इन्द्रियमिन्द्रलिङ्ग......मिन्द्रजुष्टमिन्द्र-दत्तमिति वा" (पाणि० ५।२।९३) । "इन्द्र आत्मा तस्य लिङ्गमिन्द्रि-यम् । करणेन कर्तुरनुमानात्," इति तत्सूत्रव्याख्यायां सिद्धान्तकौमुद्यां दीक्षिताः । यतोऽहमिन्द्रः, अतः कस्माच्चिन्न पराजिग्ये पराजयमनु-भवामि । मम इद्धनं सर्वमैश्वर्यं ममैव । इत् पदमेवार्थे निपातः । अहं कदाचन मृत्यवे नावतस्थे मृत्योर्ग्रासो न भवामि । सुशासकः आत्म-

ज्ञानी वा मरणस्य शरीरधर्मत्वात् कदाचित् प्रकृतिभावमापन्नोऽपि यशःशरीरेण जीवत्येव। सोमं सुन्वन्तो यूयं मामेव वसु याचत। इह सोमसवनं सर्वेषां लोकाभ्युदयिकसत्कर्मणामुपलक्षकम्। पूरवो मानुषा इति निघण्टौ मनुष्यनामसु पठितम्। मम सख्ये वर्तमाना यूयं न रिषाथन न विनङ्क्ष्यथ। रिष हिंसायामिति धातोर्लटि 'तप्तनप्तनथनाश्च' (पाणि० ७।१।५५) इति सूत्रेण तस्य स्थाने थनादेशे रूपम्। इह एकमेव इन्द्रपदं तत्तद्गुणातिशयविशिष्टव्यक्तिरूपं स्वीय एवार्थान्तरं संक्रान्तम्। किं च—यतोऽह 'मिन्द्रः' इत्येकस्य पदस्यैवाऽर्थेन शेषमन्त्रस्थानाम् 'न पराजिग्ये,' 'न मृत्यवेऽवतस्थे,' 'मम सख्ये न रिषाथन' इति वाक्यानां सोपपत्तिकीकरणात् काव्यलिङ्गमलङ्कारः। इन्द्रव्यतिरिक्तस्य यस्य कस्यचिन्मानवस्य पराजयाऽभावादिकमनुपपन्नम्। 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदीरितम्'[1] (सा० द०, परि० १०। कारि० ६३)।

अथ स एव लक्षणामूलकोऽर्थान्तरसंक्रान्तो ध्वनिर्वाक्यगतः—

क्रियाकारकरूपाणां बहूनां तु तदुद्भवे।
निमित्तत्वं पदानां चेद् ध्वनिर्वाक्यगतो मतः॥४३॥

चूडामणिः शिरस्येव कर्णयोरेव कुण्डले।
शोभते हृदये हारो मध्ये काञ्ची च काञ्चनी॥४४॥

प्रकृतिप्रत्यया एवमुपसर्गा व्यवस्थिताः।
पदांशाश्च निपाताश्च ध्वनन्ति विविधान् ध्वनीन्॥४५॥

यथा काव्यप्रकाशे—

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्॥

चतुर्थोल्लासे॥

अत्र संबोध्यस्य पुत्रस्य शिष्यादेर्वा स्वोपस्थित्यैव लभ्यत्वे त्वामिति वचनं तस्योपदेश्यत्वे अस्मि (अहम्) इति पदं तवाऽहमत्यन्तहिताभिलाषीति रूपे, वच्मीति क्रियापदमुपदिशामीति रूपे, विदुषां समवाय इति पदयुगलं तेषामुपदेशस्तव नितरां हितकर इति रूपे आत्मीयां

---

१. साहित्यदर्पणे 'काव्यलिङ्गं निगद्यते' इति पाठः(१०।६३।।)। दु०मी०

मतिमास्थायेति पदकदम्बकं नितरां सावधानो भूत्वेति रूपे स्वकीय एवाऽर्थान्तरे संक्रान्तम्। अस्मीति पदम् अहमित्यर्थको तिङन्तप्रतिरूपको निपातः।

यथा वा—

रे श्रद्धाजड जीव जीव, वचनं पथ्यं मदीयं शृणु
जीवन्तं मनुजं क्वचिद् घटयितुं देवं मतिं मा कृथाः।
तुच्छा ते क्षमता, मतिः परिमिता, तादृक्प्रयत्ने कृते
देवो नैव स दानवो हि भविता त्वामेव योऽन्तेऽत्स्यति॥

पद्यमिदं मम

रे श्रद्धाजड जीव—रे श्रद्धान्धविवेकविकल प्राणिन् जीव सुखी सन् चिरं जीव। पथ्यं तवैव हितकरं मदीयमिदं वचनं मनोयोगपूर्वकमाकर्णय अवधारय च। किं तद्वचनम्? जीवन्तं मनुजं मानवं क्वचिद् देवं परमेश्वरं परमेश्वरवत् सर्वाधिकारसंपन्नं निरङ्कुशं घटयितुं मतिं कुर्मतिं मा कृथाः। यतः स्वल्पा ते क्षमता मतिश्चातिदभ्रा। त्वया तादृक्प्रयत्ने कृते यो भविता उत्पत्स्यते स देवः परमात्मा देवोचितसद्गुणगणान्वितः सद्गुरुः सुशासको वा न, प्रत्युत दानवो राक्षसप्रकृतिको निरङ्कुशो नृशंस एव भविता। यश्चान्ते स्वनिर्मातारं स्वानुयायिनं प्रजाजनं जनं वा अत्स्यति भक्षयिष्यति नितरां पीडयिष्यति। श्रीरामकृष्णादयो महापुरुषास्तेषां परलोकगमनानन्तरं तत्कृतानुपकारान् स्मरद्भिस्तान् प्रति स्वकृतज्ञतां प्रकाशयितुं ते देवपदे परमात्मावतारपदे वा प्रतिष्ठापिताः। ये पुर्नाहिटलरादयो जीवन्त एव संविधानादुपरि पदं लम्भितास्तैः कनिष्ठिकाग्रहणे प्रकोष्ठग्रहणन्यायात्पर्यन्ते प्रजानां सर्वाधिकारान् आत्मसात्कृत्य अत्याचाराणां पदकाण्डताण्डवं व्यधायि तत्स्मारं स्मारमद्यापि हृदयं कम्पते। पद्येऽस्मिन् जीव, शृणु, देव, दानवादयोऽनेके शब्दाः स्वकीय एवाऽर्थान्तरे संक्रान्ता इत्यतिस्फुटतया प्रतिपदयोजनां नापेक्षन्ते।

किंच देवं निर्मातुं प्रवृत्तस्य पुंसः प्रयत्नवैकल्यस्य अनर्थोत्पत्तेश्च वर्णनाद् विषयाऽलङ्कारः। "गुणौ क्रिये वा चेत् स्यातां विरुद्धे हेतुकार्ययोः यद्वाऽऽरब्धस्य वैकल्यमनर्थस्य च संभवः। विरूपयोः संघटना वा च तद्विषयं मतम्"॥ इति तल्लक्षणात्। मानवो यदि सम्मानवो-

चितगुणसंपन्नं मानवं जनयति सैव तस्य महत्युपलब्धिः । अतस्तेन देवस्य अतिमानवस्य वा जननाय प्रयत्नो न विधेय इति वस्तुध्वनिः ।

यथा वा—

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्
पश्येम शरदः शतम्, जीवेम शरदः शतम् ।
शृणुयाम शरदः शतम्, प्रब्रवाम शरदः शतम्,
अदीनाः स्याम शरदः शतम्, भूयश्च शरदः शतात् ॥
यजु० ३६।२४॥

देवता— सूर्यः । ऋषिः—दध्यङ्ङाथर्वणः । छन्दः भुरिग् ब्राह्मी त्रिष्टुप् ।

तच्चक्षुरिति—मन्त्रस्याऽस्य ब्रह्मयज्ञे सन्ध्योपासनकर्मणि विनियोगाद् उपासको नैत्यिकस्नानादिविधेरनन्तरं पूर्वाभिमुखस्तिष्ठन् उद्गच्छन्तं सूर्यं दृष्ट्वा तमपि भगवतो विभूतेरंशं मन्यमानः स्तौति—तत् पुरोवर्ति आदित्यात्मकं लोकचक्षुः पुरस्ताद् उच्चरत् उच्चरति उदेति । "इतश्च लोपः परस्मैपदेषु" (पाणि० ३।४।९७) इति सूत्रेण इकारलोपः । कीदृशं तत् ? देवहितं देवेभ्यो हितकरम् । इन्द्रियेभ्यः प्राणेभ्यश्च बलप्रदम् । "देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये" इति मेदिनी । शुक्रं शुक्लम् । अस्य प्रसादात् संजातनवजीवनसंचाराः समासादितनूतनशक्तयो वयं शरदः शतं शतवर्षपर्यन्तम् । "कालाध्वनोरत्यन्तसंयोगे" (पाणि०२।३।५) इति द्वितीया । पश्येम अप्रतिहतदृष्टिशक्तयः सम्यक् पश्येम । अक्षतश्रवणशक्तयः शृणुयाम । सम्पूर्णं पुरुषायुषं सुखेन जीवेम । अस्खलितवाचो वदेम । शरदः शतमदीनाः सर्वकार्येषु स्वयं समर्थाः, न पराश्रिताः स्याम । न केवलं वर्षशतम् यावत्, किन्तु तत्परतो पश्येम जीवेमेत्यादि । अत्र विषयं सूर्यं निगीर्य तत्र विषयिणो नेत्रस्याऽभेदतादात्म्यारोपाद् अतिशयोक्तिः । अथवा तदिति पदेन पुरोवर्तिः सूर्यमण्डलं विषयं निर्दिश्य तत्र नेत्रत्वारोपाद् रूपकम् । किंच—जीवेम पश्येमेत्यादीनि सर्वाणि क्रियापदानि अप्रतिहतशक्तयो वयं पश्येम, ससुखं जीवेम, सम्यक् शृणुयामेत्यादि स्वविशिष्टार्थे संक्रान्तानीति अर्थान्तरसंक्रान्तो ध्वनिर्वाक्यगतः ।

परत्र अध्यात्मपक्षे निरन्तराऽभ्यासवशाद् भगवत्कृपया च साधकः क्रमेणेषदीषत्समुन्मिषदान्तरज्योतिप्रकाशो हृदयाऽऽकाशे प्रादुर्भवन्तीं प्रभोः प्रभामनुभवन् तत्रैकतानो भवति वदति च अयं लोकचक्षु-रध्यात्मभानुरुदेति यो मदन्तर्निहितदेवानां दिव्यशक्तीनां परमहितः। अस्य कृपया वयं निरन्तरमूर्ध्वां गतिं कुर्वाणा दिव्यप्रकाशमध्यात्मदृशा सदा पश्येम। किं च सायं समये निम्लोचत्यादित्ये बाह्यसूर्यपरकस्य उच्चरतीति पदस्य मुख्यार्थबाधः। तदा सन्ध्योपासनप्रवृत्तः साधारण उपासकः कल्पनोपनीतं सूर्यं पश्यन् उच्चरतीति वदति। अध्या-त्मज्योतिः साक्षात् कुर्वतस्तु साधकस्य कृते तु ज्ञानसूर्यः सर्वदोदेतीति न मुख्यार्थबाधः।

यथा वा—

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।**
**एवं त्वयि नाऽन्यथेतोऽस्ति न कर्म लिप्यते नरे॥**

यजु० ४०।२॥

देवता—आत्मा। ऋषिः—दीर्घतमाः। छन्दः—भूरिगनुष्टुप्।

कुर्वन्नेवेति—मा गृधः कस्य स्विद्धनम् इति प्रथममन्त्रप्रसङ्गसङ्गतो भगवानुपदिशति—धनादीनामेषणात्यागः समुचितो न हि शास्त्रविहित-सत्कर्मणामपीति। फलेच्छात्यागपूर्वकं कर्तव्यधिया वेदोक्तानि सत्-कर्माणि कुर्वन्नेव समाचरन्नेव नरो वर्षशतं जिजीविषेत्। न तु मरणं कामयेत। एवमाचरत्येव हे नर! त्वयि कृतमपि कर्म न लिप्यते, न वज्रलेपायते। बन्धनहेतुर्न भवतीति। इतोऽन्यथा एतद्विपरीतमाचरतः पुंसः कृते कश्चिदन्य उपायो नास्ति येन स कर्मणा न लिप्येत बन्धन-मुक्तश्च स्यात्। कर्मपदं फलेच्छात्यागपूर्वकं कृते विहितसत्कर्मरूपे स्वविशिष्टार्थे संक्रान्तम्, कुर्वन्निति पदं सम्यक् समाचरन्निति रूपे। किंच लेपनकर्म मूर्त्ते द्रव्ये कुड्यादौ मूर्तस्यैव द्रव्यस्य वज्रलेपादेः संभवति, न त्वमूर्ते आत्मनि अमूर्तस्य कर्मणः। तेन 'लिप्यते' इति पदं लोकप्रसिद्धलेपनरूपमर्थं सर्वथा परित्यज्य सुदृढबन्धनव्यापाररूपे अर्थान्तरे परिणतम् इति **लक्ष्यलक्षणलक्षणा**। **जन्ममरणादि बन्धनहेतुर्न भवतीति वस्तु व्यज्यते**। एवमिह कर्माणि कुर्वन्नेवेति द्वयोः पदयोः स्वकीय एव विशेषार्थे संक्रमणात्, **अर्थान्तरसंक्रान्ताख्यो ध्वनिभेदः**।

लिप्यते इत्यत्र स्वार्थस्य अत्यन्ततिरस्काराद् उभयोः परस्परनिरपेक्षतयाऽवस्थितेश्च तयोर्द्वयोः संसृष्टिरपि ।

अपि च—

ज्यायस्वन्तश्चित्तिनो मा वियौष्ट,
संराधयन्तः सधुराश्चरन्तः ।
अन्यो अन्यस्मै वल्गु वदन्त एत,
सध्रीचीनान् वः संमनसस्कृणोमि ॥ अथर्व० ३।३०।५॥

ज्यायस्वन्त इति—कश्चित्कुलवृद्धः स्वपरिवारजनान् उपदिशति—हे वत्साः अस्माकं परिवारस्य सर्वे सदस्याः पुरुषायुषजीविनो भूयासुः येन यूयं ज्यायस्वन्तः प्रकृष्टकुलवृद्धवन्तः पूजनीयान् पूजयन्तः । चित्तिनः युक्ताऽयुक्तविवेचनचतुराः सम्यक् चिन्तनपराः । संराधयन्तः सहोद्योगेन कार्याणि साधयन्तः । सधुराश्चरन्तः समानकार्यभाराः "धूर्यानमुख-भारयोः" इति हेमचन्द्राचार्याः । तथा "धूः स्त्री क्लीबे यानमुखम्"इत्यमरः । अथवा एकधुरि नियुक्ता अश्वा इव समानगतयो न तु परस्परविपरीप्रयत्ना इत्यर्थः । अन्योऽन्यस्मै वल्गु वदन्तः परस्परं मधुरमालपन्तः एत दिवसावसाने समवेता भवत । मां प्रत्यागच्छत वा । अनेन विधिना व्यवहरतो युष्मान् अहं सध्रीचीनान् समानगतिकान् समानपूजितपूजितव्यान् संमनसः समानभावनावतश्च कृणोमि करोमि । सह पूर्वस्य अञ्चतेः, "सहस्य सध्रिः" (पाणि० ६।३।९५) इति सूत्रेण सहेत्यस्य सध्रिरित्यादेशे कृते खप्रत्यये रूपम् । ज्यायस्वन्तः —"वृद्धस्य च" (पाणि० ५।३।६२) इति सूत्रेण वृद्धपदस्य ज्यादेशे, ततश्च "द्विवचनविभज्योपपदे तरबीयसुनौ" (पाणि० ५।३।५७) इति सूत्रेण ईयसुनि प्रत्यये कृते ततश्च मतुप्प्रत्यये मकारस्य च "मादुपधाया०" (पाणि० ८।२।९) इत्यादिना वकारादेशे रूपम् । यस्मिन् कुले परिवारे वा तस्य वृद्धजनानां समुचितः सत्कारः पूजा च विधीयते, यत्र च तादृशाः प्रशस्ताः स्थविराः सर्वसदस्येषु समानवृत्तयो नवयुवकानां सम्यक् पथप्रदर्शनं समाचरन्ति तत्र सर्वाः सुखसम्पत्तयो नवनवाभ्युदयाश्च चिरपरिभ्रमणश्रान्ता अतएव स्थायिनिवासाभिलाषुका इव स्वयं समवेता भवन्ति । तस्माच्छ्रेयस्कामैर्मतिमद्भिः स्वकुलवृद्धानां सेवायै सर्वदा तत्परैर्भाव्यमिति वस्तुध्वनिः ।

मन्त्रेऽस्मिन् ज्यायस्वन्तः, चित्तिनः, मा वियौष्ट, संराधयन्तः, सधुराश्चरन्तः, अन्योऽन्यस्मै वल्गु वदन्तः, सध्रीचीनान्, संमनसः इत्यनेकपदानि क्रमेण प्रशस्तवृद्धवन्तः, निरतिशयचारुचिन्तनचतुराः, कदाचिद् विद्वेषादिना विछिन्ना न भवत, संभूय कार्याणि साधयन्तः, उदूढसमामकर्तव्यभाराः, नितरां मधुरमालपन्तः, कदाचित् सत्यपि वैमत्ये कटुत्वं दूरतः परिहरन्तः, समानगतिकान्, समानहृदयभावान् इति स्वकीयमेव अर्थान्तरं लक्षयन्ति । तदतिशयप्रकाशनं च फलम् । इति **वाक्यगतोऽर्थान्तरसंक्रान्तवाच्यो ध्वनिः** । सधुराश्चरन्त इत्यनयोः पदयोः समानायामेकस्यां धुरि रथादेरग्रभागे नियुक्ताः इति सधुरा अश्वा इति योजनायां लुप्तोपमाना उपमाऽत्र संभवति । अस्मिन् प्रसङ्गे रथस्य धूरूपो वाच्यार्थो बाधितः भोजनावसरे सैन्धवमानये-त्युक्ते हयाऽऽनयनवत् । धूःपदसान्निध्यादिह अश्वाध्याहार उपमाना-र्थमुपयुक्त एव ।

अथ लक्षणामूलध्वनेः द्वितीयो भेदोऽत्यन्ततिरस्कृतवाच्यार्थः **पदगतो वाक्यगतश्च** ।

अस्य लक्षणं ३७,३८ तमकारिकयोः प्राक्प्रदर्शितम्—तयोः, पद-गतस्योदाहरणानि ।

यथा—

**रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः ।**
**निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥**

वाल्मी० रामा० किष्किन्धा काण्डे

अत्र अन्धपदं नष्टदृष्टिरूपं स्वमुख्यमर्थं नितरां तिरस्कृत्य प्रकाशरहितरूपमर्थं लक्षयति । अप्रकाशातिशयद्योतनं च फलम् ।

यथा—

**ऋजीते परिवृङ्धि नोऽश्मा भवतु नस्तनूः ।**
**सोमो अधिब्रवीतु नोऽदितिः शर्म यच्छतु ॥**

ऋ० ६।७५।१२; यजु० २९।४९॥

ऋजीते परीति—ऋजुः सरला ईतिर्गमनं यस्यास्तथाविध हे इषो शर ! त्वं शत्रुणा अस्मान् अभिलक्ष्य क्षिप्ताऽपि न परिवृङ्धि

वर्जय। वेदे इषुपदं प्रायः स्त्रीलिङ्गकम्। अस्माकं तनूर्देहः अश्मा भवतु पाषाणवद् दृढा भवतु। सोमः ओषधीनां राजा सुयोग्यचिकित्सको नः अधिब्रवीतु चिकित्साऽवसरे सम्यग् उपदिशतु चिकित्सतु च। अदिति-रदीना देवमाता सुजनरक्षिका परमात्मशक्तिः नः शर्म यच्छतु। ऋजीते ऋजुः ईतिर्गमनं यस्याः इत्यत्र टिलोपश्छान्दसः। अत्र अश्म-पदस्य वाच्यार्थः पाषाणरूपोऽत्यन्ततिरस्कृतः। गौण्या लक्षणलक्षणया पाषाणवद् दृढा भवत्विति रूपमर्थं लक्षयति गौरयम् (वाहीकः) इतिवत् दृढत्वातिशयद्योतनं फलम्।

यथा वा—

योनः स्वो अरणो यश्च निष्ट्यो जिघांसति।
देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम्॥
ऋ० ६।७५।१९॥

सामवेदे (१८७२) "शर्म वर्म ममान्तरम्"। इत्यधिकः पाठः।

देवता—देवा ब्रह्म च। ऋषिः—पायुर्भारद्वाजः। छन्दः—अनुष्टुप्।

यो नः स्व इति—यो नः स्वजनः, यो वा अरणः अपार्णः अपगता-ऽन्नजलादिसम्बन्धः शत्रुरित्यर्थः। अर्णपदम् उदकनामसु पठितं निघण्टौ (१।१२)। यो निष्ट्यो नीचवृत्तिः, निम्नं स्थानमर्हतीति वा। योऽस्मान् जिघांसति हन्तुमिच्छति, तं सर्वे देवा देवोचितगुणगणाचिता सत्पुरुषा धूर्वन्तु नाशयन्तु। सत्पुरुषैः सत्पुरुषाणां सहायकैर्दुर्जनानां संहारकैश्च भवितव्यमेव। प्रभुभक्तोऽहं तेभ्यो दुर्जनेभ्यो न बिभेमि। कुतः? यतो ब्रह्म ब्राह्मं तेजः स्वयं ब्रह्मैव वा मम आन्तरं वर्म मम आन्तरम् अन्तर्भवं वर्म कवचभूतमस्ति। रक्षकमस्ति। इह वर्मपदं स्ववाच्यार्थं कवचरूपमत्यन्तं तिरस्कृत्य कवचवद्रक्षकमिति प्रकार-कमर्थं गौण्या लक्षणया लक्षयति। प्रभौरक्षकत्वातिशयो भक्तस्य तन्मात्रनिर्भरत्वं च ध्वन्यते। ऋग्वेदपाठमाश्रित्य मन्त्रोऽयं पदगतत्वेनो-दाहृतः। सामवेदपाठानुसारमयमेव वाक्यगतत्वेनोदाहर्तुं शक्यः।

यथा वा—

न तं विदाथ य इमा जजानाऽन्यद्युष्माकमन्तरं बभूव।
नीहारेण प्रावृताः०। ऋ० १०।८२।७॥

अत्र नीहारपदम् अवश्यायरूपं वाष्पीभूतसूक्ष्मजलरूपं वा मुख्यमर्थं सर्वथा परित्यज्य बुद्धेराच्छादकाऽज्ञानरूपमर्थं लक्षयति । **अज्ञानातिशयो ध्वन्यते ।**

अथ तस्यैव ध्वनिभेदस्य अत्यन्ततिरस्कृतवाच्यस्य वाक्यगतत्वे ।

यथा—

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥[1]**

भगवद्गीता २।६९॥

या निशेति—सर्वभूतानां तमोगुणप्रधानानां सर्वप्राणिनां कृते या निशा तमोमयी मिथ्यादृष्टिरस्ति, यया ते रज्जौ सर्पम्, स्थाणौ पुरुषम्, मृण्मयदेहेषु अयमहम, अयं मम तनयो माता-पिता वेत्यादि पश्यन्ति, यस्यां च विमूढा जना जागृमो वयमिति मन्यमाना वस्तुतः सुप्ताः मोहविमूढा सन्तः, अयथार्थमपि यथार्थं मन्यन्ते तस्यामेव मुनिः समुत्पन्नाऽऽत्मतत्त्वाऽवबोधो ज्ञानी जागर्ति, अज्ञानजन्योऽयम्.......... । सकलः प्रपञ्च इति च पश्यति । यदपगमे "एवं तत्त्वाभ्यासान्नाऽस्मि, न मे नाऽहमित्यपरिशेषम् । अविपर्ययाद् विशुद्धं केवलमुत्पद्यते ज्ञानम्" । (सांख्यकारिका ६४ तमा) । यस्यां च मिथ्यादृष्टावितरभूतानि अन्ये प्राणिनो जागृमो वयमिति मन्यन्ते तथैव च व्यवहरन्ति सा पश्यतस्तत्त्वविदो मुनेः कृते मोहमयी निशैव । इह—"निशा, जागर्ति, जाग्रति, पश्यतः" इत्येतानि पदानि स्वं स्वं वाच्यमर्थं—रजनी, अवबुध्यते, व्यवहरन्ति, विलोकयतीति रूपं स्वमुख्यमर्थमत्यन्तं तिरस्कृत्य मिथ्यादृष्टिः, तात्त्विकदृष्ट्या पश्यति, याथार्थ्यमजानन्तः, यथार्थवद् व्यवहरन्ति, तत्त्वज्ञस्येति रूपमर्थं लक्षयन्ति तदतिशयादिबोधनं च फलम् ।

---

१. एहि जग जामिनि जागहिं जोगी । परमारथी प्रपञ्च वियोगी ॥
जानिह तबहिं जीव जग जागा । जब सब विषय विलास विरागा ॥
होई विवेका मोह भ्रम भागा । जब रघुनाथ चरन अनुरागा ॥
तुलसी (रामचरित मानस, अयोध्या काण्ड)

यथा वा अथर्ववेदे—

**सखायाविव सचावहा अव मन्युं तनोमि ते।**
**अधस्ते अश्मनो मन्युमुपास्यामसि यो गुरुः ॥**

अथर्व० ६।४२।२॥

देवता—मन्युः। ऋषिः—भृग्वङ्गिराः। छन्दः—भुरिगनुष्टुप्।

सखायाविवेति—एकः सुहृत् कदाचित् सकारणम् अथवाऽकारणं भ्रमवशात् एव रुष्टं सुहृदं वदति—सखे अलं विवादेन। इतः परम् आवां पुनः पूर्ववत् सखायाविव मित्रवत्, सचावहा सचावहै अभिन्न-हृदयौ वर्तिष्यावहै। 'षच समवाये' धातोर्लोटि रूपम्। अयमहं तव हृदयात् मन्युं कोपम् अवतनोमि अपनयामि। "अवज्यामिव धन्वनो मन्युमवतनोमि ते हृदः" (अथर्व० का०६। सू० ४२। मं० १) इति प्रथममन्त्रस्याऽऽशयं मनसिकृत्य पठ्यमानमिदं द्वितीयमन्त्रगतम् अवतनोमीति पदं मन्युधनुर्ज्ययोरुपमेयोपमानभावमत्राऽप्यवगमयति। यथा समरावसाने ज्या धनुष्कोट्या अवतार्यते तथा तव हृदि स्थितं मन्युमहमनेन प्रसादनेन अपनयामीत्यर्थः। त्वदीयं तं कोपं च तस्य अश्मनः पाषाणस्य अधः उपास्यामसि उपास्यामि निक्षिपामि यो गुरु-र्भूरिभारवानस्ति येन सः मन्युः पुनरुत्थातुं न क्षमेत। अमूर्तस्य मन्योः अश्मनोऽधस्ताद् आधानमनुपपन्नं सत् स्ववाच्यार्थमत्यन्तं तिरस्कृत्य प्रचुरप्रसादनेन शमयामीति रूपमर्थं लक्षयति। उपाऽस्यामसीति उप-पूर्वस्य असु प्रक्षेपणे धातोर्लटि उत्तमपुरुषबहुवचने रूपम्। उपाऽस्यामीति वक्तव्ये उपास्यामसीति प्रयुक्तम्। तत् 'सुपां सुलुक्०' (पाणिनि ७।१।३९) सूत्रेण तिङां तिङादेशा भवन्तीति वार्त्तिकेन मिपः स्थाने मस्, ततश्च "इदन्तो मसि"। (पाणि० ७।१।४६) इति सूत्रेण छन्दसि मसः सकारान्तस्य इकारागमे साधु। अवतनोमीत्यत्र एक-वचनेन कस्यचिदेकस्य प्रसादनप्रयत्नः, उपास्यामसि इति बहुवचनेन तत्र बहूनां प्रयत्नः सूच्यते। परिवारे बन्धुजनेषु च कदाचिन्मनोमा-लिन्ये समुत्पन्ने मतिमद्भिरचिरात् यथावसरं कदाचिदेकेन कदाचित् बहुभिर्वा संभूय सान्त्ववचनादिभिः प्रसादनोपायैस्तथा प्रयतितव्यं यथा तद् भूयो न प्रादुर्भवेदिति व्यज्यते।

यथा वा—

**आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः ।**
**तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः ।।**

अथर्व० ११।५।३।।

देवता—ब्रह्मचारी । ऋषिः—ब्रह्मा । छन्दः—उरोबृहती ।

आचार्य उपनयमान इति पित्रोरुपात्तप्रथमजन्मानं द्विजत्वलाभाय समागतं ब्रह्मचारिणं विधिवद् गृहीतब्रह्मचर्यव्रतं बालकम् उपनयमानः उपनयनसंस्कारविधिना स्वीकुर्वन् आचार्यो[1] गर्भमन्तः कृणुते गुरुकुलरूपे स्वगर्भे स्थितमिव करोति । मातृगर्भे स्थितः शिशुः प्रसवात् प्राग्यथा नवमासान् यावत् अनिष्टैः ऋतुपरिवर्तनप्रतिकूलपरिवेशादीनां कुप्रभावैरप्रभावितोऽहर्निशम् आत्मनिर्माणं पूर्णविकासं च करोति तथा गुरुकुलरूपे गुरुगर्भे स्थितो ब्रह्मचर्यपि ग्रामनगरादीनामशान्तदूषितपर्यावरणादारात् सुरक्षितो भाविजीवनयात्रायै आत्मानं तदुचितशिक्षादीक्षासाधनादिभिः सन्नह्यति । आचार्यो बालकं तिस्रो[2] रात्रीरुदरे बिभर्ति । कास्तिस्रो रात्रयः ? व्यक्ताऽव्यक्त[3]ज्ञविषयकं त्रिविधमज्ञानम् । अथवा-पृथिव्यन्तरिक्ष[4]द्युलोकसम्बन्धि सर्वमज्ञानम् । यावत्पर्यन्तम् उक्तमज्ञानत्रिकं न विनश्यति तावत्पर्यन्तमाचार्य-

---

१. आचिनोति च शास्त्रार्थानाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मात् तस्मादाचार्य उच्यते ।।

२. कठोपनिषदि—मृत्युनामकेन यमेन वा आचार्येण मृत्युसम्बन्धे पृष्टानां प्रश्नानामुत्तरं ददता त्रिविधमज्ञानमेव तिस्रो रात्रय इति निर्दिष्टम् ।

३. दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताऽव्यक्तज्ञविज्ञानात् ।। सां० कारि० २

कार्यरूपं स्थूलं जगत् व्यक्तम्, गुणानां साम्यावस्था अव्यक्तं कारणजगत्, जानातीति ज्ञः आत्मा परमात्मा च ।

४. इयं समित् पृथिवी द्यौर्द्वितीयोतान्तरिक्षं समिधा पृणाति ।
ब्रह्मचारी समिधा मेखलया, श्रमेण लोकांस्तपसा पिपर्ति ।
अथर्व. का. ११ । सू. ५ । मं. ४ ।

स्तमन्तेवासिनं स्वोदरे स्वविद्यामन्दिरे दधाति बिभर्ति च । सम्यक् समापिताऽध्ययनं सर्वविद्याव्रतस्नातकं तं जातम् उत्पन्नं गृहीत-द्वितीयजन्मानं[1] द्रष्टुमभिनन्दितुं च सर्वे देवा विद्वांसः सत्पुरुषाश्च तस्य दीक्षान्तयज्ञावसरे समवेता भवन्ति । इत्थमिह गर्भमन्तः कृणुते, तिस्रो रात्रीः, उदरे बिभर्ति, जातम् इत्यादीन्यनेकानि पदानि स्वमुख्यमर्थं सर्वथा तिरस्कृत्य गौण्या लक्षणलक्षणया गुरुकुलवासः, त्रिविधा-ऽज्ञानावसान–पूर्णविकास–द्विजन्मत्वावाप्तिरूपानर्थान् लक्षयन्ति । एतेन च तरुणेषु प्रसुप्तसर्वशक्तीनां विकासस्तेषां चरित्रनिर्माणम्, उत्तमनागरिकत्वलाभश्च तदैव संभवति यदा तेषां विद्यामन्दिराणि ग्रामनगरादीनामशान्तक्षेत्रेभ्यो दूरेऽवस्थितानि स्युर्यत्र सर्वचिन्ता-विमुक्तास्ते केवलसरस्वत्याराधनसक्ताः समर्पितजीवनाः समिध इवा-त्मानं ज्ञानयज्ञे दिवानिशं जुह्वत्विति वस्तुध्वनिः । गुरुकुलैर्मातृगर्भोपमै-र्बाह्यप्रभावेभ्यः सुरक्षितैर्भाव्यमित्युपमाध्वनिरपि ।

अथ विवक्षिताऽन्यपरवाच्योऽभिधामूलो ध्वनिः—

प्रकाशयन् यथाऽऽत्मानं भानुः काननसागरान् ।
यथा वा दीपको गेहे सर्वानर्थान् घटादिकान् ॥४६॥

विवक्षिताऽभिधेयेऽस्मिन् वाच्याऽर्थोऽपि तथा ध्वनौ ।
भासयत्यपरानर्थानात्मानं गौणतां नयन् ॥४७॥

रसरसाभासभावभावाऽऽभासादीन् वक्ष्यमाणानर्थानित्यर्थः ।

अयं च—

विवक्षिताऽभिधेयोऽपि ध्वनिः प्राक्प्रथमो मतः ।

पूर्वोक्तो रसादिरूपो वर्णपदांशपदवाक्यरीतिप्रबन्धगतत्वात् षड्-विधो ध्वनिः ।

तत्राऽसंलक्ष्यक्रमः—

(क) असंलक्ष्यक्रमव्यङ्ग्यो (ख) लक्ष्यव्यङ्ग्यक्रमः परः ॥४७॥

---

१. मातुरग्रेऽधिजननं, द्वितीयं मौञ्जिबन्धने ।
तृतीयं यज्ञदीक्षायाम० ॥ मनु० अ० २ । श्लोक १६९ ॥
तत्र यद् ब्रह्मजन्माऽस्य मौञ्जीबन्धनचिह्नितम् ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ मनु० २।१७०॥

तदुक्तं प्राक्—

असंलक्ष्यक्रमव्यङ्ग्ये त्वाशुभावितया क्रमः ।
छेदवत् पद्मपत्राणां लाघवान्नैव लक्ष्यते ॥

वर्णानां च पदांशानां तथैव पदवाक्ययोः ।
रीतिप्रबन्धयोर्भेदादसावेकोऽपि षड्विधः ॥

उन्मेष ५, का० ७ ॥

वर्णादिवैशिष्ट्ये यथा—

क्रोधेनोद्धतधूतकुन्तलभरः सर्वाऽङ्गजो वेपथुः
किञ्चित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः ।
धत्ते कान्तिमिदं च वक्त्रमनयोर्भङ्गेन भिन्नभ्रुवो-
श्चन्द्रस्योद्भटलाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च ॥

उत्तररामचरितस्य ५ माङ्के ३५तमं पद्यम् ॥

सुमन्त्रवचनेऽस्मिन् उद्दीप्तक्रोधयोर्लवचन्द्रकेत्वो रोषाविष्टयोर्मुखच्छविवर्णने क्रोधेनोद्धतधूतेत्यादिमहाप्राणबहुलवर्णानाम् उद्धतरचनायाश्च प्रयोगो रौद्ररसं व्यनक्ति ।

यथा वा—

भो लङ्केश्वर दीयतां जनकजा रामः स्वयं याचते ।
कोऽयं ते मतिविभ्रमः स्मर नयं नाऽद्यापि किञ्चिद् गतम् ॥

मैवं चेत् खरदूषणत्रिशिरसां कण्ठाऽसृजा पङ्किलः ।
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः ॥

हनुमन्नाटके रावणं प्रति श्रीरामस्योक्तिः—भो इत्यव्ययपदेन सम्बोधनार्थकेन त्रिभुवनविजेतू रावणस्य संमुखीनता, आह्वानकर्तुः श्रीरामस्य निर्भीकता च व्यज्यते। लङ्केश्वर इति सुबन्तेन विशेषणपदेन हेलयैव रावणकृतं कुबेरादिसकलदिक्पालदर्पदलनं ततस्तस्यापि मानमर्दनसाहसेन श्रीरामस्य पराक्रमातिशयः प्रकाश्यते । जनकजेति पदेन जनकराजसदसि सीतास्वयंवराऽवसरे प्रच्छन्नसमागतेन त्वया मम बाहुबलमात्मनश्च निर्वीर्यत्वं प्रत्यक्षीकृतमेव । तेन मम भार्या दीयताम् इति कर्मप्रधानेन क्रियापदेन सीताप्रत्यर्पणविषये—सा दीयतां नवेति रावणस्य न कामचारः प्रत्युत बाध्यताऽत्रबुध्यते। रामः 'स्वयं याचते'

इति वाक्येन वक्तरि रामे स्वोपस्थित्यैव लभ्ये पुना रामपदप्रयोगेण "द्विः शरं नाभिसन्धत्ते, रामो द्विर्नाभिभाषते" इत्युक्तिप्रतिपाद्यं **रामशरस्य अमोघत्वं ध्वन्यते**। रामः स्वयं याचते न तु दूतप्रेषणादिनेति वचनेन तत्र संशयाऽभावस्तदनवधानदशायां तद्दुष्परिणामभीषणता च प्रकटी भवति। "मैव चेदिति" निपातसन्निपातेन रामवचनस्याऽनुपेक्षणीयता लक्ष्यते। "चतुर्दश सहस्रक्षसामध्यक्षाणां खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलो मम धनुर्ज्याबन्धबन्धूकृतस्तत्राऽऽरोपितो मम पत्री शरस्तवाविनयं न सहिष्यते" इत्युक्त्या सहृदयोऽहं कदाचित्तवापराधं क्षमे अथाऽपि नत्वयम् अयोमयो मदीयसायक इति **सर्वं यथायथमवधार्य प्राप्तकालं विधेहीति ध्वन्यते**। खरदूषणत्रिशिरसाम् इत्यत्र पदांशरूपं षष्ठीबहुवचनं पत्रीत्यत्रैकवचनं च **श्रीरामस्य महारथत्वं** तत्सायकस्याऽव्यर्थत्वं च **वस्तुरूपं व्यनक्ति**।

महारथस्तु—'एको दशसहस्राणि योधयेद् यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च स विज्ञेयो महारथः॥' अत्र रावण **आलम्बनविभावः**। तत्कृतं सीतापहरणम् **उद्दीपनविभावः**, श्रीरामस्य तानि तानि वचनादीनि **अनुभावाः**। रामः स्वयं याचते, पत्री नैष सहिष्यते, इत्यादिभिर्वचनैर्गम्या गर्वाऽमर्षादयः **सञ्चारिभावाः**। परस्पर संवलितैरेतैरास्वाद्यमानः श्रीरामस्थितः शत्रुवधोत्साहः **स्थायिभावः**। स काव्यनाट्य पठनदर्शनादिना विगलितपरिमितप्रमातृभावैः सहृदयैरास्वाद्यमानो **वीररसतां** भजते।

**यथा वा—**

**आविवाहं समयाद् गृहे वने शैशवात् प्रभृति योषितां प्रियाम्।**
**छद्मना परिददामि मृत्यवे सौनिको गृहशकुन्तिकामिव॥**

उत्तररामचरिते प्रथमाङ्के सीतापरित्यागावसरे श्रीरामविलापप्रसङ्गे पठितमिदं पद्यम्। सूना पशूनां वधस्थानम्। सौनिको वधिकः। गृहशकुन्तिकामिव पालितानुकम्पनीयां गृहपक्षिणीमिव। छद्मना भागीरथीतीरतपोवनेषु परिभ्रमणमिषेण। मृत्यवे ददामि हन्मि। शकुन्तिकामिति "अनुकम्पायाम्" (पाणि० ५।३।७३) इति सूत्रेण अनुकम्पार्थे कन्प्रत्यये रूपम्। अत्र पदांशः **कारुण्यव्यञ्जकः**। भग्न-भाजनान्मन्द-निष्यन्दमान-वारिबिन्दु-संततिवच्छोकाकुल-श्रीराम-

हृदयात् स्खलद्गत्या निर्गच्छन्ती रथोद्धता छन्दोबद्धा वाक्यरचना करुणरसानुकूला।

इह आसन्ननिर्वासना गर्भभरालसा वैदेही **आलम्बनविभावः**। पत्यौ निरतिशयविश्रम्भसम्भारनिश्चिन्तनिद्रासुखप्रसन्नमुद्राया मुग्धायास्तस्याश्छद्मनानिर्वासननिश्चयो वनवासयात्रार्थं रथोपस्थापनादेशश्चो**द्दीपनविभावः**। निर्जने वने सीतायाः संभाव्यमानविपरित्यागकल्पना तथा श्रीरामकृतोऽश्रुमोक्षकरुण क्रन्दनस्वरभङ्गप्रस्वेदादयोऽनुभावाः। दैन्यविषादविमोहादयः **संचारिणः**। श्रीरामहृदयगतः शोकः **स्थायिभावः**। नाटचदर्शनादिना विगलितपरिमितप्रमातृभावैः सहृदयैरनुभूयमानः **करुणो रसः**। एवं तत्रैव—

**त्रस्तैकहायनकुरङ्गविलोलदृष्टे-**
**स्तस्याः परिस्फुरितगर्भभरालसायाः।**
**ज्योत्स्नामयीव मृदुबालमृणालकल्पा**
**क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता॥**

उत्तररामचरितस्थपद्येऽस्मिन् त्रस्तस्य एकवर्षायुष्कस्य मृगशिशोर्विलोला तरला दृष्टिरिव दृष्टिर्यस्याः इत्यु**मेपयलुप्तोपमा**। एतेनैकपदेन सीताया भयकातरस्य बालमृगशिशोर्दृष्टेरिव दृष्टेस्तरलतातिशयो व्यज्यते। परिस्फुरितेन अन्तःस्पन्दभावेन पूर्णगर्भभरेण हिंस्रश्वापदेभ्य आत्मरक्षार्थं पलायनाद्यसामर्थ्यं ध्वन्यते। अङ्गलतिकाया ज्योत्स्नामयीत्वप्रतिपादनेन तस्या अनन्यसामान्या सुकुमारताविशिष्टमक्लिष्टं लावण्यं तथा गात्रयष्टेस्तनुत्वं सुखस्पर्शत्वं मृदुत्वं च लभ्यते। अङ्गे देहे लतात्वारोपात् लतापदे च 'क' प्रत्ययेन पदांशेन सौन्दर्यातिशयोऽपूर्वं सौकुमार्यमनुकम्पनीयत्वं च सूच्यते। तत्रापि निष्करुणस्य स्वस्य नृशंसतातिशयः प्रकाश्यते। अत्रापि विभावादयः पूर्ववत् स्वयमूह्याः।

वेदेऽपि —

**त्वया मन्यो सरथमारुजन्तो हर्षमाणासो धृषिता मरुत्वः।**
**तिग्मेषव आयुधा संशिशाना अभिप्रयन्तु नरो अग्निरूपाः॥**
**अग्निरिव मन्यो त्विषितः सहस्व, सेनानीर्नः सहुरे हूत एधि।**
**हत्वाय शत्रून् विभजस्व वेद ओजो मिमानो विमृधो नुदस्व॥**

सहस्व मन्यो अभिमातिमस्मे रुजन् मृणन् प्रमृणन् प्रेहि शत्रून् ।
उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयस एकज त्वम् ॥
ऋ० १०।८४।१,२,३॥

देवता—मन्युः (रोषयुक्त उत्साहः) । ऋषिः—मन्युस्तापसः छन्दः—जगती ।

त्वया मन्य इति—शत्रोरपराधं सम्यग् विमृश्य विहितः क्रोधयुक्त उत्साह. मन्युः । धर्मधर्मिणोरभेदात् तद्वान् वीरोऽपि मन्युः । तत्सम्बुद्धौ हे मन्यो त्वदधिष्ठिता वा वीरा वयम् । रथेन सह वर्तमानं सरथम् । रथपदमिह सर्वेषां युद्धोपकरणानामुपलक्षणम् । रुजन्तः पीडयन्तः । हर्षमाणासः हर्षघोषं विदधानाः । धृषिताः धृष्टा धर्षितशत्रवो वा । अथवाऽधृषिताः[1] शत्रुभिरकृतधर्षणाः । मरुत्वः मरुत्समानवेगाः । करतलकलितमूर्धानः समर्पितजीवना वा । तिग्मास्तीक्ष्णा इषवः शरा येषाम् । आयुधा संशिशानाः आयुधानि शस्त्रास्त्राणि तीक्ष्णीकुर्वन्तः अग्निरूपाः अग्निसमानतेजसो नरो वीराः अभिप्रयन्तु । शत्रुमभिलक्ष्य प्रयन्तु गच्छन्तु ।

अग्निरिवेति—वह्निरिव त्विषितः दीप्तिमन् हे मग्यो मन्युमन् सहस्व शत्रुं प्रतिकुरु, बाधस्व । हे सहुरे सहनसमर्थं, प्रतिरोधक्षम वा । हूतः नेतृत्वहेतवे आकारित आमन्त्रितो वा त्वं नोऽस्माकं सेनानीः सेनापतिः एधि भव । शत्रून् हत्वाय निहत्य । क्त्वो यकि रूपम् (पाणि० ७।१।४७)। वेदो धनं विभजस्व अस्मासु वितर । ओजो मिमानः बलप्रयोगं विदधानः । मृधो नुदस्व अस्माकं वैरिणः विद्रावय । णुद प्रेरणे । पलायनाय विवशान् कुरु ।

सहस्व मन्य इति—हे मन्यो ! मन्युमन् सहस्व प्रतिरोधक्षमो भव ।

---

१. स्वरानुरोधेनेह 'अधृषिताः' इति पदच्छेदो न सम्भवति । 'स्वरस्तु' वेद एव प्रतीतिकृत्' इति साहित्यविशारदानां वचनानुसारं स्वरलभ्योऽर्थ एव वेदे साधुर्भवति । यत्र तु स्वरो विशेषपरिच्छेदे न बाधको भवति तत्र पदान्तरत्वमपि स्वीक्रियते । यथा—'अरुणोमासकृत्' (ऋ० १।१०५।१८) । अत्र 'अरुणः, मा, सकृत्' इति त्रीणि पदानि शाकल्यो मनुते । यास्कस्तु—'अरुणः, मासकृत्' इति पदद्वयं प्रतिजानीते । द्र० निरुक्त ५।२१। यु० मी०

अस्मे अभिमातिम् अस्मान् प्रति अभिगन्तारम्। आक्रमणाभिलाषिणम्। जनं रुजन् पीडयन्, मृणन् मर्दयन्, प्रमृणन् प्रकर्षेण दलयन् समूलकाषं कषन्नित्यर्थः। शत्रूनभिलक्ष्य प्रेहि प्रयाहि। ते पाजः उग्रं तव बलम् आक्रमणवेगो वा नितरां प्रचण्डः। कः खलु तत् आरुरुध्रे आरुणद्धि तत्प्रतिकरोति ? एकजः अद्वितीयपराक्रमः, वशी समर्थः शत्रून् वशं नयसे नय। आयुधा आयुधानीति प्राप्ते सुब्लुकि रूपम्। 'सुपां सुलुग्०' (पाणि० ७।१।३९)। सहुरिः सहधातोः "जसिसहोरुरिन्" (उणा० २।७४) इत्यनेन सहधातोरुरिन्प्रत्यये रूपम्। अस्मे अस्माकमिति प्राप्ते 'सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः' (पाणि० ७।१।३९) इत्यनेन शे कृते रूपम्। वेदःपदं धनार्थकं पाजःपदं बलार्थकं वेदे।

मन्त्रेष्वेषु शत्रुरालम्बनविभाव। रथाऽश्वादिचतुराङ्गिण्या सेनया तस्याऽऽक्रमणादिकमुद्दीपनविभावः। नः सैनिकानाम् अस्त्रसन्नाहो युद्धघोषाः समराङ्गणं प्रति प्रयाणं चानुभावाः। आवेगोग्रतादर्पाऽमर्षादयः सञ्चारिणः। एतैः परिपाकं प्राप्तोऽस्मत्सैनिकानां युद्धोत्साहः स्थायिभावः। सहृदयैश्चर्व्यमाणो वीररसतामुपैति। अत्र वि, प्रादयः उपसर्गाः पदांशाः धृषिताः, हृषमाणासः, आयुधानि, मृधः, आरुरुध्रे, मृणन्, प्रमृणन्, इत्यादिषु वीररसानुगुणानां वर्णानां प्राचुर्यं वीररसध्वनिव्यक्तौ कारणतां याति। अग्निरूपा इत्युपमा। मरुत्वः मरुत्समावेगाः इत्युपमातिशयोक्तिर्वा।

इह वर्णपदांशपदवाक्यरीतिप्रबन्धोत्थस्य ध्वनेः षड्भेदाः। यत प्रत्येकम् [न] पृथक्त्वेनोदाहृतास्तत् केवलं विषयस्य अनावश्यकविस्तरभिया। किञ्च ध्वनेरेषु रूपेषु न प्रकारभेदो गुणभेदो वा, किन्तु परिमाणमात्रभेदः। तेनैकस्य भेदस्य ज्ञानेनाऽन्यतरस्य ज्ञानं न दुष्करम्। तदुच्यते—

प्रस्थोऽपि सर्षपो नु स्यात् सर्षपो न तु तण्डुलः।
तथा पदगताद् वाक्यगतो न भिद्यते ध्वनिः ॥४८॥

आस्वादस्य प्रकारस्य भेदो वा भेदकारणम्।
अभावे तु तयोर्मात्राभेदान्न भिद्यते ध्वनिः ॥४९॥

व्यङ्ग्याऽर्थोपस्थितावेकपदस्यैव प्रधानता ।
सहकारित्वमन्येषां तदा पदगतो ध्वनिः ॥५०॥

कस्तूरीतिलकं भालेऽलङ्करोत्यखिलं वपुः ।
तथैवैकपदस्थः सन् पद्यं कृत्स्नमपि ध्वनिः ॥५१॥

क्रियाकारकरूपाणां बहूनां तु तदुद्भवे ।
निमित्तत्वं पदानां चेत् तदा पदगतो ध्वनिः ॥५२॥

चूडामणिः शिरस्येव, कर्णयोरेव कुण्डले ।
शोभते हृदये हारो, मध्ये काञ्ची च काञ्चनी ॥५३॥
प्रकृत्या प्रत्ययैरेवमुपसर्गैर्निपातकैः ।
पदांशैरपि काव्येषु व्यज्यन्ते ध्वनयः पृथक् ॥५४॥
वर्णा रसानुगुण्येन यथा स्थानं निवेशिताः ।
रसान् शृङ्गारवीरादीन् व्यञ्जयन्ति यथायथम् ॥५५॥

रचना वाक्यविन्यासो विषयानुगुणः स्फुटः ।
उद्धृतः प्राञ्जलो मञ्जुः कुसुमाऽञ्जलिपेशलः ॥५६॥

वाक्यं च योग्यताऽऽकाङ्क्षाऽऽसत्तियुक्तः पदोच्चयः[1] ।
एकार्थकः प्रयोगार्हः पदं वर्णसमुच्चयः[2] ॥५७॥

एवमन्योऽन्यसम्बन्धज्ञानेन पदवाक्ययोः ।
ज्ञानेनैकध्वनेरन्यध्वनेर्ज्ञानं न दुष्करम् ॥५८॥

स्वर्णे ज्ञाते यथा सर्वं ज्ञातं स्वर्णमयं भवेत् ।
ज्ञातायां मृत्तिकायां च सर्वं दीपघटादिकम् ॥५९॥

ध्वनेः पदगतस्यैवं ज्ञाने वाक्यगतध्वनेः ।
ज्ञानं सहृदयस्य स्यादसाध्यं नेतरध्वनेः ॥६०॥

"चक्षुष्मते" ऽथवा चक्षुष्मते[3] श्रोत्रमते तथा ।
"ब्रवीमीत्यत्र" को भेदस्तात्त्विक. कथ्यतां बुधैः ॥६१॥

---

१. द्र० पूर्वत्र उन्मेष ३, कारिका ६७ पृष्ठ ४६ ।

२. द्र० पूर्वत्र उन्मेष ३, कारिका ६६ पृष्ठ ४६ ।

३. परं मृत्यो अनुपरेहि पन्थां यस्ते स्व इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥
ऋ० १०।१८।१॥

**तथापि बुद्धिवैशद्यार्थं शास्त्रे शास्त्रवेदिभिः ।**
**भिन्नेष्वभिन्नताऽभिन्नेषु च भेदो विमृश्यते ॥६२॥**

अतः—

**असंलक्ष्यक्रमव्यङ्ग्यध्वनेर्वर्णपदादिगाः ।**
**भेदाः शुद्धा न, संकीर्णा लाघवायैव दर्शिताः ॥६३॥**

ध्वनेः प्रधानतयाऽष्टादशभेदानां निरूपणप्रकरणे वाक्यगता एव ध्वनिभेदाः प्रायेण प्रदर्शिताः । पदपदांशादिगतानाम् इतरेषाम्, क्वचित् पुनर्वाक्यगतानामपि अर्थान्तरसंक्रान्तादि (१) सप्तदशभेदानां दिङ्मात्रमिह विषयज्ञानवैशद्याय प्रतिपत्तिदार्ढ्याय वा 'द्विर्बद्धं सुबद्धं भवति' इति विभाव्य प्रदर्श्यंते—

तेषु असंलक्ष्यक्रमव्यङ्ग्यस्य वस्तुना वस्तुध्वनिरूपो भेदः पदगतः—

**तद्रूपं स परीणाहः, सा विद्या, सा च वाग्मिता ।**
**उल्लासाय तदाऽसीद् यत् तद्विषादाय संप्रति ॥**

इदं पद्यं मम ॥

महर्षौ दयानन्दे दिवंगते तद्भक्तानां शोकोद्गारोऽयम् । अत्र रूपम्, परीणाह, विद्या, वाग्मिताऽतिशयस्य तादृगनुभवसंवेद्यस्य द्योतकानां तदादिपदानामेव प्राधान्यं तदितरेषां रूपादीनां तु तत्र सहकारित्वमात्रत्वम् । तेनाऽत्र **वस्तुना वस्तुध्वनेः पदप्रकाश्यता** । इह करुणरसस्य प्रतीतावपेक्षिताया विभावादि सामग्र्याः सत्त्वेऽपि तदादिपदानामेव प्राधान्यम् इति पदगता ध्वनेर्व्यंजकता । तदादिपदानां चाऽनेकत्वेऽपि नाऽत्र वाक्यत्वाऽसंभवः, तेषां विभिन्नवाक्यवर्तिनां मिथो वाक्यत्वाऽसंभवात् ।

यथा वा—

**किं कोटिशः प्रतिपलं कृमिवत् प्रसूतै-**
**रात्मानमात्मजवतीं मनुषे मनुष्यैः ।**
**श्रीचन्द्रशेखरसमं सुतसिंहमेकं**
**मातः प्रसुष्व भुवने स्ववशो विहर्तुम् ॥** इदं मम ॥

मातृभूमेश्चरणयोरात्मसमर्पणकारिणम् आजाद—चन्द्रशेखरं प्रति वीरपूजकानां जनानामादरभावोऽत्र स्थायिभावः । कस्याश्चिन्मातु-

मातृत्वं कृमिकोटिवत् प्रतिपलमुत्पन्नैर्विपन्नैश्च बहुभिस्तनयैर्न भवति। हे भारतमातर्यदि त्वमात्मनो मातृत्वं कृतार्थं कर्तुमिच्छसि तर्हि चन्द्रशेखरसममेकमेव सुतं प्रसुष्व। अत्र एकेनैव सुतसिंहम् इति पदेन उपमालङ्कारात्मकेन मातृत्वस्य कृतार्थत्वरूपं वस्तु व्यज्यते। सुतेषु सिंहमिवेत्युपमितसमासः अथवा सुतमेवसिंहमितिरूपकसमासः।

वेदेऽपि—

**एह्यश्मानमा तिष्ठाऽश्मा भवतु ते तनूः।**
**कृण्वन्तु विश्वेदेवा आयुष्टे शरदः शतम्॥** अथर्व०२।१३।४

आचार्यकुले नवप्रविष्टोऽयं बालकः पराक्रमी निर्भयः प्रतापी विद्वांश्च भूयादिति शुभाशंसुराचार्यस्तं ब्रूते—वत्स एहि। अत्र स्थितमश्मानम् आतिष्ठ। अस्योपरि पादन्यासं विधेहि। तव तनुः अश्मा अश्मवद् दृढा भवतु। विश्वेदेवाः सूर्यचन्द्रमारुतजलादयस्त्वदीयम् आयुः शरदः शतं कृण्वन्तु कुर्वन्तु। इह वस्तुनाऽश्मना अश्मवद् इत्युपमालङ्कारध्वनिः।

अथ वीररसे अलङ्कारेण वस्तुध्वनिः।

**तीक्ष्णीयांसः परशोरग्नेस्तीक्ष्णतरा उत।**
**इन्द्रस्य वज्रात् तीक्ष्णीयांसो येषामस्मि पुरोहितः।**
अथर्व० ३।१९।४॥

राजपुरोहितः, अथवा पुरोऽग्रतो नेतृत्वाय नियुक्तः कश्चित्सेनाधिकारी कथयति—

अहं येषां वीरसैनिकानां पुरोधा अग्रणीर्वाऽस्मि, ते परशोः कुठारात् तीक्ष्णीयांसः प्रखरतराः छेदनभेदनादिक्रियाकलापेषु कुशला इत्यर्थः। अग्नेः पावकाऽपेक्षया तीक्ष्णतराः रिपुदुर्गनगरादीनां दहनप्रतापनादिव्यापारेषु पारङ्गताः, इन्द्रस्य वज्रात् माध्यमिकदेवताया दम्भोलेः अथवा सूर्यशक्त्या मेघेषु जनितादशनेस्तीक्ष्णीयांसः विस्फोटविध्वंसादिकृत्येषु कुशलाः सन्ति भूयासुर्वा। इह परशुदहनवज्रगतं तीक्ष्णत्वं नितरां भिन्नमपि अभिन्नत्वेन वर्णितमित्यतिशयोक्तिः। तदुक्तम्—"भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ। पौर्वापर्याऽत्ययः कार्यहेत्वोः सा पञ्चधा ततः"। इति सा० द० परि० १०।

सा च परशुप्रभृतिभ्यः सैनिकानामाधिक्यवर्णनाद् व्यतिरेकं व्यनक्ति। तेन स्वसैनिकानामजेयत्वरूपं वस्तु व्यज्यते। तीक्ष्णीयांसः—तीक्ष्णपदात् "द्विवचनविभज्योपपदे तरबीयसुनौ" (पाणि० ५।३।३७) इति सूत्रेण द्वयोरन्यतरस्याधिक्यवर्णने ईयसुनि प्रत्यये रूपम्।

अथाभिधामूलो विवक्षितान्यपरवाच्यः संलक्ष्यक्रमव्यङ्ग्यः शब्दशक्त्युत्थितः पदगतः—१. वस्तुनो वस्तुध्वनिरूपः २. वस्तुनोऽलङ्कारध्वनिरूपः, ३. अलङ्काराद् वस्तुध्वनिरूपः, ४. अलङ्काराद् अलङ्कारध्वनिरूपश्चेति चतुर्विधो ध्वनिः।

तत्स्वरूपमुक्तं प्राक्[1]—

प्रतीयमानः क्रमशो व्यङ्ग्योऽर्थो यत्र लक्ष्यते।
घण्टाटंकृत्यनुस्वानवत् स लक्ष्यक्रमो मतः॥

अलङ्कारोऽथवा वस्तु शब्दशक्त्या प्रतीयते[2]।
वस्त्वलङ्काररूपत्वाद् द्विविधः शब्दशक्तिजः॥

क्वचित्पदगतत्वेन वाक्यव्यापितया क्वचित्।
चतुर्विधत्वं भजते शब्दशक्तिसमुत्थितः॥

एषां वाक्यगतौ भेदौ ध्वनेरष्टादशभेदनिरूपणावसरे प्रदर्शितौ। पदगतत्वे दिङ्मात्रमुदाह्रियते—

तत्र वस्तुनो वस्तुध्वनिः। यथा—

तत्र तत्र द्विजैरेते पृष्टा नाशं पृथाभुवाम्।
प्रत्यूचुर्वयमत्रैव विद्मस्तेषां तु संस्थितिम्॥

चम्पूभारतस्य २यस्तवकात्॥

लाक्षागृहात् सकुशलं निर्गताः, विप्रवेशधारिणः पाण्डवाः प्रच्छन्नं देशाद् देशान्तरं पर्यटन्तो याथार्थ्यमजानद्भिरतः तानपि सामान्यान् पथिकान् मन्यमानैर्द्विजैः वह्नौ पाण्डवानां विनाश प्रत्यनुयुक्ताः—एते वराका न जानन्ति यद् वयमेवैतेषां जिज्ञासाविषया जीविताश्चेति

१. द्र०— क्रमशः उन्मेष ५, कारिका ५, १०।

२. पूर्वत्र द्वितीयचरणे 'शब्दशक्त्योद्भवेद् यदि' इत्येव पाठः। उन्मेष ५, कारिका १०।

सान्तर्हासं श्लेषगर्भमुत्तरं प्रायच्छन् यद् वयं तु तेषां (पाण्डवानाम्) संस्थितिं मृत्युम् इह भवन्मुखादाकर्ण्यैव जानीम इति । प्रश्नकर्तॄन् प्रति तत्त्वनिगूहनार्थं संस्थितिपदमभिधया मृतिपरकं परस्परं प्रति तु तदेव व्यञ्जनयाऽवस्थानपरकम् इति पदप्रकाश्यो वस्तुना वस्तुध्वनिः ।

यथा वा—

**प्रागेव सेतोरवलोकनेन पापाऽपनोदे फलितेऽर्जुनस्य ।**
**प्रभासतीर्थे विहितोऽभिषेकः पश्चात् सुभद्राऽऽगमहेतुरासीत् ॥**

चम्पूभारतात् ।

अर्जुनस्य दक्षिणभारतयात्रायां समुद्रे श्रीरामकृतसेतुबन्धदर्शनेन सकलकल्मषनाशे प्रागेव जाते, पश्चिमदिग्यात्रायां प्रभासतीर्थे स्नानं किं फलकं स्यात्, प्रागेव सकलपापनाशसिद्धेरिति शङ्कापनोदाय कविराह—यत् तत्स्नानं सुभद्राऽऽगमस्य शोभनतरस्य कल्याणस्य यदागमनं प्राप्तिस्तद्धेतुरासीत् । इह पापापनोदादिफलवर्णनप्रसङ्गेन 'सुभद्रागम' पदस्य शक्तौ कल्याणागमरूपेऽर्थे नियन्त्रितायामपि शब्दशक्त्या सुभद्रेति नाम्न्याः श्रीकृष्णस्वसुः प्राप्तेर्हेतुरासीदिति वस्तु व्यज्यते । सुभद्रागमः सुभद्रागम इति व्याख्यायां तु वस्तुनोऽलङ्कारध्वनिरिति ।

यथा वा—

**ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भुरिशृङ्गा अयासः ।**
**अत्राह तदुरुगायस्य वृष्णः (विष्णोः) परमं पदमव भाति भूरि ॥**

ऋ० १।१५४।६॥

हे वधूवरौ ! पतिपत्न्यौ वा वां युवाभ्यां कृते वयं तानि वास्तूनि भवनानि गमध्यै गन्तुं तत्र निवासार्थमित्यर्थः उश्मसि कामयामहे। यत्र भूरिश्रृङ्गा बहुतीक्ष्णाग्रा अयासो गमनागमनशीलाः गावो वर्तन्ते । अत्राह एतद्विधेषु आवासेषु उरुगायस्य महागतेर्वृष्णोर्वर्षणकर्तुर्विष्णोर्वा सूर्यस्येत्याशयः। परमं पदम् अन्तरिक्षं भूरि अतिमात्रम् अवभाति प्रकाशते । अत्र गाव इति पदं लोकप्रसिद्धचनुरोधात् प्रागभिधया धेनुपरकेऽर्थे नियन्त्रितमपि परतः अत्र वर्णितगवां भूरिशृङ्गत्ववर्णनाद् बाधे व्यञ्जनया सूर्यकिरणरूपा गाव इत्यर्थमुपस्थापयति । एवमिह गवां सूर्यरश्मीनामबाधप्रवेशनिर्गमाभ्यां विशदाकाशवशाच्च वस्तुना भव-

नानां विशालता समृद्धिशालिता रूपं वस्तु व्यज्यते। अत्र यास्कः--सर्वे रश्मयो गाव उच्यन्ते। ता वामिति०। तानि वां वास्तूनि कामयामहे गमनाय। यत्र गावो भूरिश्रृङ्गाः भूरीति बहुनो नामधेयं भवतीति सतः। शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा......—अयासोऽयनाः। आज्जसेरसुक्' (पाणि० ७।१।५०) इत्यनेनासुगागमः। उरुगायस्य विष्णोर्महागतेः परमं पदं परार्द्धर्यस्थमवभाति। पादः पद्यतेः। इत्यादि। निरुक्ते २।८।

यथा वा—

**य उशता मनसा सोममस्मै सर्वहृदा देवकामः सुनोति।**
**न गा इन्द्रस्तस्य परा ददाति प्रशस्तमिच्चारुमस्मै कृणोति॥**
ऋ० १०।१६०।३॥

य उशतेति—यो भगवद्भक्तः। देवकामः यस्य सर्वे देवकामाः प्रभावेव एकायनीभूताः तथाविधः। स्वहृदा स्वहृदयस्य समस्तभावनया। उशता कामयमानेन मनसा च अस्मै इन्द्रायैव सोमं भक्तिरसं सुनोति अभिषूय समर्पयति। तस्य गाः धेनूः स इन्द्रो न परा ददाति अपहरति। न तावदियदेव, किन्तु इह जगति अमुत्र च यद् यत् प्रशस्तं प्रकृष्टं चारु चायनीयं कमनीयं वा तत् सर्वमस्मै स्वभक्ताय प्रयच्छति। इह गोपदं प्राग् अभिधया धेनुरूपेऽर्थे नियन्त्रितमपि परतः प्रशस्त चारु चेति पदयोः सान्निध्यात् ततोऽपि किञ्चिदधिकं प्राप्तव्यम्—आमृत्योर्नेत्रादीन्द्रियाणामप्रतिहतां शक्तिम्, वाक्सामर्थ्यं स्वर्गादिकं रूपं च व्यनक्ति। 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयी दृग्बाणदिग्वाग्भूष्वप्सु भूम्नि चेति' मेदिनी। एवमिह एकेनैव गा इति पदेन आपाततो धेनुरूपवस्तुवाचकेन परतः प्रतीयमाना वस्तुरूपा इतरेऽर्था व्यञ्जनालभ्याः एव इति।

अथ प्रसङ्गागतस्य पूर्वोदाहृतस्यापि वाक्यव्यापिनो वस्तुना वस्तुध्वनेरुदाहरणम्। यथा—

**अपार्थं कर्म मे किंचिन्नासीत् तस्मिन्महाहवे।**
**पुरो विजयमाधाय पुनरागां पुरीमिमाम्॥** चम्पूभारतात्

कौरवैर्धेनुषु आहृतासु अन्तःपुरे कन्याजनसमक्षं स्वशौर्यविषये बहुविकत्थमानः उत्तरकुमारो बृहन्नलावेशधारिणमर्जुनं सारथित्वे

नियुज्य रणाङ्गणं गतः कौरवाणामतिमहत् सैन्यमालोक्य यथाऽऽतुरो रथादवतीर्य नगरं प्रति पलायत तं बलान्निरुध्य अर्जुनोऽहं पाण्डवः कौरवैर्योत्स्ये, त्वं सारथ्यं समाचरेत्युक्तः समाश्वस्तस्तथाऽचरत् । अर्जुनः कौरवबलं निर्जित्य उत्तरकुमारं पुना रथिनमात्मानं च सारथिं विधाय नगरं प्रत्यागतः । अथोत्तरकुमारो युद्धवृत्तान्तं प्रति पित्रा पृष्ठ उदतरत्—तत्र महाहवे मम किमपि कर्म अपार्थं व्यर्थं नासीत् । युद्धं विधाय विजयं च पुरोधाय अहं पुनः पुरीं प्रत्यावृत्त इति । अज्ञात-रहस्यो विराटः पुत्रवचनस्य अपार्थं व्यर्थम्, विजयं जयश्रियमित्येवार्थं प्रत्यपद्यत । तत्र स्थितः कङ्कनामा प्रच्छन्नस्वयाथार्थ्यो युधिष्ठिरस्तु अपार्थः—पार्थेन अर्जुनेन रहितम् अर्थात् मया उत्तरेण कृतं किमपि कर्म तत्र नासीत् । मया तु तत्र केवलं सारथ्यं विहितम् । युद्धावसाने तु विजयमर्जुनमग्रतः कृत्वा सारथ्ये नियुज्य प्रत्यागतोऽस्मीति । अत्र उत्तरकुमारस्य अपार्थविजयपदयोः वस्तुरूपाभ्यामर्थाभ्यां रहस्यवेदिना युधिष्ठिरेण—'अर्जुनेन न कृतम्' 'अर्जुनम्' चेति यदर्थान्तरमवबुद्धं तद् व्यञ्जनालभ्यमेव । इहानेकपदयोर्ध्वनिनिमित्तत्वात् तस्य वाक्य-गतत्वम् । इह अपार्थमिति पदेन तथा विजयपदेन तथाश्लिष्टेन अर्जुने-नाऽकृतं विजयमिव अर्जुनं चेति उपमानोपमेयभावव्यञ्ना तु नाभ्युप-गन्तुं शक्यते । तथा कृते गोपनीयं प्रच्छन्नवासिनां पाण्डवानां रहस्यं सर्वविदितं स्यात् तच्च नेष्टम् ।

अथ वस्तुनोऽलङ्कारध्वनिः पदप्रकाश्यः । यथा—

आयोधनेषु करवालकरालबाहुं
भ्रूभङ्गभीषणमुखं रिपुदुर्निवार्यम् ।
दूराऽधरीकृतमहोर्मिमिलत्समुद्रं
कस्त्वां क्षमेत भुवि वारयितुं नु रुद्रम् ।।

पद्यमिदं मम ।।

इह शत्रुभिर्दुर्वार्यवीर्यत्वरूपवस्तुना राज्ञो रुद्रः शिवः उपमानमिति व्यज्यते ।

वेदेऽपि—

नाभिरहं रयीणाम् । नाभिः समानानां भूयासम् ।।

अथर्व० १६।४।१।।

नाभिरहमिति—देशस्य स्वाधीनतायाः सुरक्षायाः सर्वपथीनोन्नतश्च प्रधानं साधनं धनमेव। तस्याऽर्जनस्य संवर्धनस्य संरक्षणस्य च कृते सुविचारिताः सुप्रयुक्ताश्च दूरगामिन्यो विविधा योजना एव प्रभवन्ति। मन्त्रेऽस्मिन् कश्चित्कुशलो योजनामन्त्री वित्तमन्त्री प्रधानशासको वा ब्रूते—यथा गर्भस्थशिशुर्मात्रा सह नाभ्या संबद्धो वृद्धि पुष्टिं च लभते तथा मया सृष्टा नियन्त्रिताः सुप्रयुक्ताश्च देशस्य अर्थयोजनाः स्थिरतामुत्कर्षं चानुभवन्ति। एवं नाभिपदमिह अभिधया नियन्त्रितं प्राण्यङ्गविशेषरूपमर्थं सर्वथा तिरस्कृत्य गौण्या लक्षणया देशस्याऽर्थव्यवस्थायाः सृष्टिपुष्टचोर्निमित्तरूपमर्थान्तरं लक्षयति इति **वस्तुनोपमालङ्कारध्वनिः**।

अस्य मन्त्रस्योत्तरार्धे—"अहं समानानां नाभिर्भूयासम्"। इत्यत्र कश्चित् पुरुषः पुरुषान्तरस्य नाभिरूपमङ्गं भवितुं नालम् इति स्वमुख्यमर्थं विहाय गौण्या लक्षणया राजमण्डलस्य प्रमुखरूपमपरमर्थं लक्षयति तदतिशयबोधनं च प्रयोजनम्। स एव पुनः कथयति—अद्य प्रतिभाऽनुभवप्रभावादिषु ये जना मम तुल्यकल्पा इव मया स्पर्धन्ते मम सदृशाः प्रतिभान्ति वा, स्वयोग्यतया कार्यक्षमतया दक्षतया चाऽहमचिरेणैव तेषां नाभिः प्रमुखो भूयासम् इति **वस्तुना व्यतिरेकध्वनिः**। 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः' इति। नाभिर्मुख्ये नृपे चक्रमध्यक्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे" इति मेदिनी। एवमिह **पदप्रकाश्यो वस्तुनालङ्कारध्वनिः**। द्वयोर्ध्वन्योः स्वातन्त्र्येण पृथगवस्थानाच्च तयोः **संसृष्टिः**।

अस्यैव वाक्यगतत्वे। यथा—

> अधिगत्य जगत्यधीश्वरादय मुक्ति पुरुषोत्तमात् ततः।
> वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः॥
>
> नैषधीयचरितस्य २य सर्गे॥

पुरुषप्रवरान्नृपात् बन्धनमोक्षमवाप्य स द्विजो राजहंसोऽनिर्वचनीयमानन्दमविन्दतेति। अत्र मुक्ति-पुरुषोत्तम-द्विजादीन्यनेकपदानि साधकद्विजस्य भगवत्कृपया मोक्षानन्दप्राप्तिरूपमर्थमुपस्थाप्य द्वयोरुपमानोपमेयभावव्यक्तौ पर्यवस्यन्ति इति **वाक्यगतेन वस्तुनाऽलङ्कारध्वनिः**।

अथाऽलङ्कारात् वस्तुध्वनिः पदप्रकाश्यः। यथा—

यामश्विनावमिमातां विष्णुर्यस्या विचक्रमे।
इन्द्रो यां चक्र आत्मनेऽनमित्रां शचीपतिः।
सा नो भूमिर्विसृजतां माता पुत्राय मे पयः॥

अथर्व० १२।१।१०॥

यामश्विनाविति अस्माकं यां भूमिम्। अश्विनौ नासत्यौ नासायां भवौ श्वासोच्छ्वासौ। इह तौ प्राणाऽपानाऽऽत्मानं पवमानमुपलक्षयतः। अश्विनौ हि देवानाम् इन्द्रियाणां भिषजौ। तदुक्तं मनुना—दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः। तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात्'। (मनुस्मृ० अध्या० ६। श्लो० ७१)।

अत्र श्रीयास्कः—तत्कावश्विनौ? द्यावापृथिव्यावित्येके। अहोरात्रावित्येके। सूर्याचन्द्रमसावित्येके। अश्विनौ यद् व्यश्नुवाते सर्वम्। रसेनाऽन्यः (चन्द्रः) ज्योतिषाऽन्यः (सूर्यः)। (निरु० १२।१)।

तावश्विनौ यामभियातां समयाऽनुकूलाः पावनाः स्वास्थ्यवर्धकाः पवमाना अभिव्याप्नुवन्ति। यस्यां विष्णुः विचक्रमे। विष्णुः सूर्यः स स्वरश्मिभिः पृथिवीजलानिलवर्तिप्रदूषणानि पुनाति विचक्रमे एवं विविधानि कार्याणि करोति। शचीपतिः शक्तेः कर्मणां धियां वा पतिः परमात्मा धर्मात्मा शासको वा याम् आत्मने प्राणिमात्राय अनमित्रां चक्रे व्यरचयत्। शत्रुमित्रोदासीनादयो भेदास्तुच्छराजनीतिग्रस्तेन जनेन स्वार्थसिद्धये पश्चात् प्रकल्पिताः। सा नो भूमिः। न तु तस्याः कश्चिदेकदेशः। एतेन मानवानां विश्वनागरिकत्वं प्रभोरभीष्टम्, न तु क्षुद्रप्रदेशविशेषनागरिकत्वम् इति लभ्यते। पुत्राय स्वसुतस्वरूपाय, मे मह्यं पयो विसृजतां स्वस्तन्यं प्रयच्छतु। इह भूमौ, मातृत्वस्य तन्निवासिनि जने च पुत्रत्वस्याऽऽरोपः शाब्दः किन्तु जले स्तन्यत्वस्याऽऽरोप आर्थः, तेनाऽत्र **एकदेशविवर्तिरूपकालङ्कारः**। तल्लक्षणम्—"रूपकं रूपितारोपो विषये निरपह्नवे। ..........आरोप्याणामशेषाणां शाब्दत्वे प्रथमं मतम्। यत्र कस्यचिदार्थत्वमेकदेशविवर्त्तितम्"।

(सा० द०, परि० १०। कां० २८-३२)

भूमिसम्बन्धादिह पयःपदस्य शक्तिः "पयः स्यात् क्षीरनीरयोः" इति मेदिनी। प्रागभिधया जलरूपे मुख्येऽर्थे नियम्यते किन्तु परतः

श्लेषस्य शब्दशक्तिमूलतया पयसि जले स्तन्यत्वारोपः भूमौ मातृत्वाऽऽरोपस्य तन्निवासिषु च पुत्रत्वारोपस्य निमित्तत्वं प्रयाति। सोऽलङ्कारो "मानवैर्भूमौ मातृत्वधियमाधाय मानवमात्रे ज भ्रातृत्वमाधाय 'उदारचरितानां तु वसुधैव कुटुम्बकम्' इति सिद्धान्तश्चरितार्थी करणीय इति **वस्तुरूपमर्थं व्यनक्ति**। अत्रैकमेव पदं पय इति अस्य ध्वनेर्निमित्तम् इति पदप्रकाश्योऽयं **शब्दशक्तिमूलकोऽलङ्काराद् वस्तुध्वनिरूपः**। "अत्र श्लिष्टशब्देनाऽर्थद्वयोपस्थितौ श्लेषमहिम्ना प्रकृतसम्बन्धिनि अप्रकृताऽभेदप्रत्ययः प्रकरणेन प्रकृतसम्बन्धिनो विशेष्यत्वात्। स चाऽभिधामूलव्यञ्जनयेति बोध्यम्" इति काव्यप्रकाशे परम्परितरूपकालङ्कारव्याख्यायां श्रीवामनाचार्याः। इति।

यथा वा—

**उदुत्सं शतधारं सहस्रधारमक्षितम्।**
**एवाऽस्माकेदं धान्यं सहस्रधारमक्षितम्॥**

अथर्व० ३।२४।४॥

उदुत्समिति—उत्सः प्रस्रवणं प्रवाहो वा। ऊर्ध्वं सूते जलमिति। इह उत्सपदे क्लीबत्वं छान्दसम्। इदमुत्सं स्रोतः प्रस्रवणं वा। यथा शतधारं सहस्रधारं शतशः सहस्रशो वा धारा यस्य तथाविधम्। अक्षितम् अक्षीणं नित्योदकमित्यर्थः, अस्ति, अनेन सिच्यमानम्, अस्माकेदम् अस्माकं धान्यम् अन्नादिकमपि एवा-एवं सहस्रधारम् अक्षितं च भूयात्। यथा उत्सस्य प्रस्रवणस्य शतशः सहस्रशो वा धारा प्रवहन्ति, न तथा धान्यस्येति मुख्याऽर्थस्य बाधे सहस्रशो जनान् धारयति पालयतीति पुष्णातीति व्युत्पत्त्या प्राचुर्यरूपोऽपरोऽर्थो व्यज्यते। एवमिह **उपमालङ्काराद् अन्नप्राचुर्यरूपं वस्तु व्यज्यते**। सहस्रशो धारा आगमनमार्गा यस्येत्यर्थस्वीकारे उपमालङ्कारः, तेन चोपमालङ्कारादुपमालङ्कारध्वनिरेव।

अपि च—

**शतमिन्नु शरदो अन्ति देवा**
**यत्रा नश्चक्रा जरसं तनूनाम्।**
**पुत्रासो यत्र पितरो भवन्ति**
**मा नो मध्या रीरिषताऽऽयुर्गन्तोः॥** यजु० २५।२२॥

देवता—विद्वांसः। ऋषिः—गोतमः। छन्दः—त्रिष्टुप्।

शतमिति—यत्र यस्मिन्, वर्षाणां षष्टिप्राये सप्ततिप्राये वा वयस्तृतीये भागे हे देवा यूयं नस्तनूनां शरीराणां जरसं वार्धकं चक्र निर्धारितवन्तः। तत्र अपि शतमित् शतम् एव, न ततो न्यूनं शरदो वर्षाणि यावत् नोऽस्माकम् अन्ति अन्तिके निकटे वर्तमाना भवत। समीपार्थके अन्तिक इति वक्तव्ये 'अन्ति' इति प्रयोगश्छान्दसः। कृ करणे धातोर्लिटि मध्यमपुरुषवहुवचने चक्र इति प्राप्ते "द्व्यचोऽतस्तिङः" (पाणि० ६।१।१३५) इति सूत्रेण अन्त्यदीर्घे कृते 'चक्रा' इति रूपम्। कुत इति चेत्? येन वयं वार्धकेऽपि अप्रतिहतसकलेन्द्रियशक्तयः पुष्टाङ्गाः समर्थाः सुखिनश्च स्यामेति। एतच्च देवानां विदुषाम्, आत्मनि निगूढं प्रसुप्तदिव्यशक्तीनाम्, चक्षुः श्रोत्रादीन्द्रियाऽधिष्ठातृदेवानां सूर्यचन्द्रमरुदादिदेवानामानुकूल्येनैव वा संभवति।

तदुक्तम्—"तस्माद् वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते। सर्वा ह्यस्मिन् देवता गावो गोष्ठ इवाऽऽसते"॥ अथर्व० ११।८।३२॥

यद्वा देवा विद्वांस आचार्यादयः प्रदीप्ता ज्ञानेन, दानाद्वा ज्ञानादीनाम्। ते हि स्व-सान्निध्येन जनान् सदाचारमार्गे प्रवर्तयन्तः सदा तान् तरुणान् रक्षन्ति। ननु क्व वयसि? यत्र पुत्रासः पितरो भवन्ति। ननु सूनूनां स्वपितृत्वमनुपपन्नम्। न हि सुपटुरपि नटबटुः स्वस्कन्धमधिरोढुं क्षमः इति विरोधः। तत्परिहारस्तु—युवानस्तनयाः स्वसुतानां पितरो भवन्त्येवेति नातिदुष्करः। तस्मिन्नस्माकं वार्धकेऽपि यूयं गन्तोः गमनात् पूर्वम् अर्थात् निर्धारितं शतवर्षपरिमाणं यदायुः तत्समाप्तिपर्यन्तं गमनात् प्राक् मध्ये एव न आयुर्मारिषत हिंसत। 'यत्रा' इत्यत्र "निपातस्य च" (पाणि० ६।१।१३६) इति सूत्रेण अन्तदीर्घत्वे रूपम्। मध्ये इति प्राप्ते "सुपां सुलुक०" (पाणि० ७।१।३९) इति सूत्रेण आचि कृते मध्या इति सिद्धम्। गन्तोः गमनम् इह गम् धातोः "भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्" (पाणि० ३।४।१६) इति सूत्रेण तोसुन्प्रत्यये रूपम्। पुत्रासो यत्र पितरो भवन्तीति **विरोधोऽलङ्कारः**। देवाः कुतः शतं शरदो नाऽन्तिके भवन्तु यतस्तेषां सान्निध्ये नो जीवनं मध्ये एव न विनश्येत्।

इह मध्ये जीवनविनाशाऽभावरूपेण कार्येण तन्निमित्तं देवानां

सन्निध्यं समर्थ्यते इत्यर्थान्तरन्यासोऽलङ्कारः। तल्लक्षणं तु—"सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्यं च कारणेनेदं कार्येण च समर्थ्यते। साधर्म्येणेतरेणाऽर्थान्तरन्यासोऽष्टधा ततः"। (साहित्य दर्पण। परि० १०। कारि० ६१, ६२) इह विरोधहेत्वाऽभासयोः परस्परनिरपेक्षतया पृथगवस्थानात् उभयोः संसृष्टिः। किं चाऽत्र 'देवा' इति पदस्य अनेकार्थकत्वात् प्रथमप्रतीतोऽर्थो वाक्यः। परतः प्रतीतौ तु व्यञ्जनालभ्यावेव। ततस्त्रयाणामुपमानोपमेयभावादुपमालङ्कारध्वनिः। तेन च दीर्घायुष्ट्वप्राप्तीच्छया देवानां सान्निध्यस्याऽऽवश्यकर्तव्यत्वप्राप्तेर्वस्तुध्वनिः। 'देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये'। इह चक्षुरादीनीन्द्रियाणि विद्वांसश्च देवाः।

यथा वा—

**मृत्योरहं ब्रह्मचारी यदस्मि,**
**निर्याचन् भूतात् पुरुषं यमाय।**
**तमहं ब्रह्मणा तपसा श्रमेणा**
**ऽनयैनां मेखलया सिनामि॥** अथर्व० ६।३३।३॥

मृत्योरिति—यतोऽहं मृत्योर्ब्रह्मचारी अस्मि, ब्रह्मचर्यव्रतपालनाय स्वजनैर्मृत्यवे मृत्युरूपाय आचार्याय समर्पित आसम्। स एव विधिवत् परिपालितब्रह्मचर्यव्रतः सम्प्रति भूतात् समाजात् एकं पुरुषं बालकमित्यर्थः। निर्याचन् छात्ररूपेण याचमानः अस्मि निर्याचामीत्याशयः। त्वं तं कुतो निर्याचसे ? इति चेत्—गृहीतं तं यमाय समर्पयितुं यमनियमपालनार्थम् अर्पितं कर्तुम्। आचार्यस्य मृत्युत्वं बालके निसर्गतः स्थितस्य पशुभावस्य हननात्। तदुक्तम्—मन्त्रान्तरेऽपि, आचार्यो मृत्युर्वरुणः सोम ओषधय इत्यादि (अथर्व० ११।५।१४)। स्वयं यमनियमपालनेन, ब्रह्मचारिणश्च संयमनात् स एव यमोऽपि। आचार्यस्य मृत्युत्वं यमत्वं कठोपनिषदि प्रतिपादितम्। आचार्यो ब्रूते—तं ब्रह्मचारिणमहं ब्रह्मणा ब्रह्मज्ञानेन आस्तिक्येन सर्वतोमुखीनवृद्धया वा तपसा द्वन्द्वसहिष्णुतया श्रमेण कठोरकर्मनिष्ठया वा परिपक्वं बद्धपरिकरतायाः प्रतीकभूतयाऽनया मेखलया सिनामि प्रतिबद्धं करोमि। याच् धातोर्द्विकर्मकतया गौणकर्मणि 'भूतम्' शब्दे कर्मत्वप्राप्तावपि

अपादानत्वं छान्दसम्। तेन एकं पुरुषं भूतं (मानवसमाजं) निर्याचन्न-स्मीति वक्तव्ये 'भूताद्' इत्युक्तम्।

इह विषयं बालकस्य पशुभावं निगीर्य तस्य विषयिणा पशुत्वाधिष्ठानभूतेन पुरुषेण (बालकेन) अभेदाध्यवसानाद् **अतिशयोक्तिः**। तथा विषयं यमनियमपालनरूपं निगीर्य तस्य विषयिणा यमेन मृत्युना वा अभेदाऽध्यवसानाद् **द्वितीयातिशयोक्तिः**। इह आचार्ये मृत्युत्वारोपरूपरूपकाऽलङ्कारात् कठोरानुशासनवत्सु शिक्षामन्दिरेषु मृत्युरूपा आचार्या[1] एव व्यक्तेः समाजस्य देशस्य नूतननिर्माणाय प्रभवन्तीति वस्तुव्यंञ्जनाद् **अलङ्काराद् वस्तुध्वनिः**। इह मृत्युः—यमः इति द्वयोः समानार्थयोः द्विः प्रयोगेऽपि एकाभिप्रायवत्वात् **पदप्रकाश्य एवाऽयं ध्वनिः**।

अथाभिधामूलः शब्दशक्ति-समुद्भूतोऽलङ्कारादलङ्कारध्वनिः पदप्रकाश्यः। यथा—

**एकं पादं नोत्खिदति सलिलाद्धंस उच्चरन्।**
**यदङ्ग स तमुत्खिदेत् नैवाऽद्य न श्वः स्यात्**
**न रात्रिर्नाऽहः स्यान्न व्युच्छेत्कदाचन॥**

अथर्व० ११।४।२१॥

एकं पादमिति—हंसपदस्य शक्तिरिह लोकप्रसिद्ध्यनुरोधात् समीपस्थ सम्बन्धाच्च प्रागभिधया तन्नामकपक्षिविशेषरूपार्थे नियम्यते। "हंसः स्यान्मानसौकसि। निर्लोभनृपविष्णवर्के परमात्मनि मत्सरे। योगिभेदे मन्त्रभेदे शरीरमरुदन्तरे (प्राणे)" इति मेदिनी। हंसो हि सलिले विचरति, विचरंश्च न कदाचित् स्थानान्तरं जिगमिषुः, उच्चरन् उत्पतन् एकं पादं चरणं नोत्खिदति नोद्धरति—इति मन्त्रेऽस्मिन्नुक्तम्। किन्तु पूर्वोक्त पक्षिसम्बन्धेऽर्थोऽसौ न संगच्छते। उत्पतनकाले द्वयोश्चरणयोर्युगपदुत्थानदर्शनात्। किं च, तद्द्वारा द्वयोश्चरणयोर्युगपदुत्थानात् न अद्य न श्वः स्यात् न रात्रिर्नाऽहः स्याद् इत्याद्यपि न दृश्यते। तस्मादिह हंस पदस्य प्राणरूपोऽपरोऽर्थं उपस्थितो भवति।

---

१. उपरिकरवालधारा क्रूरा भुजङ्गमपुंगवात्।
अन्तःसाक्षाद्दीक्षादगुरवो जयन्ति केऽपि जनाः॥
भामिनीविलासे श्री जगन्नाथ.।

तथाहि—प्राणरूपस्य हंसस्य द्वौ पादौ श्वासोच्छ्वासौ। तौ च पर्यायेण देहे गमनागमनमनारतं कुरुतः। श्वासोच्छ्वासयोर्देहाद् युगपन्निष्क्रमणं न भवति। अतः युक्तमुक्तम् एकं पादं नोत्खिदतीति। सलिलपदमिह देहार्थकम्, मरणकाले तस्य स्वकारणेषु क्षित्यप्तेज.प्रभृतिषु प्रविलयात्। स्वभावे कारणे लीनत्वमेव सलिलस्य सलिलत्वम् अथवा यदा स प्राणः श्वासोच्छ्वासात्मकावुभौ पादौ युगपदुत्थापयति म्रियमाणस्य प्राणिनः कृते अहोरात्रादिकृतः कालभेदः पर्यवसन्नो भवति। तदुक्तम्—"सम्मीलने नयनयोर्नहि किंचिदस्ति"।

अथ हंसः सूर्यः। प्रातःकाले समुद्रतटे, समुद्रवर्तिपोते वा पूर्वाभिमुखस्तिष्ठन् मानवः हंसं सूर्यं समुद्रसलिलादिवोद्गच्छन्तं पश्यति। यद्वा समुद्रोऽन्तरिक्षम् इति निरुक्ते श्रीयास्कः—समुद्रवन्त्यस्मिन्नापो मेघजलानीति। तदुक्तम्—'स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद् वर्ष्या अभि'। ऋ. १०।९८।५।

तदा समुद्रसलिलाद् अन्तरिक्षाद् उच्चरन् हंस एकं पादं नोत्खिदति नोद्धरति उद्गमनस्तमनं चेति सूर्यस्य द्वौ पादौ याभ्यां परिवर्तमानः स कालं निर्मिमीते। यदा यत्र स उदयते तदा तत्र नास्तमयते, यदा यत्र चास्तमयते तदा तत्र नोदयते। एवं स एकं पादम् एकां स्थितिं न जहाति। अथवा प्रातरन्तरिक्षमारुढोऽपि स पृथिव्यां स्वाऽवस्थानं न मुञ्चति तत्रापि प्रकाशते। अयं च प्रकृतेर्नियमः। यदि कदाचिदादित्यो व्यवस्थामिमां मुञ्चेत् तदा जगति अहोरात्रादिव्यवस्था विनश्येत्। अयमस्मदीयो लोकश्च विलीयेत। अत एवोक्तम् मन्त्रे—'यदङ्ग स तमुत्खिदेन्नैवाऽद्य न श्वः स्याद्' इत्यादि०।

पिण्डे (देहे) यथा प्राणः श्वासोच्छ्वासाभ्यां गतागतं कुर्वन् यावन्न विरमति तावदेव जीवनं तथा ब्रह्माण्डेऽपि यावद् हंसः सूर्यः स्वगतागतव्यवस्थां न लङ्घयति तावदेव लोकस्थितिरिति तयोरुपमानोपमेयभावः। इह प्राणसूर्ययोः साम्यप्रतीतेरुपमाध्वनिः। यथा प्राणस्य द्वितीयचरणोत्थापने पिण्डस्य स्थितिर्न संभवति तथा सूर्यस्य गति व्यतिक्रमे लोकस्याऽपीत्युपमालङ्कारादुपमालङ्कारध्वनिः।

यथा वा—

तत् सूर्यस्य देवत्वं तन्महित्वं
मध्या कर्तोर्विततं संजभार ।
यदेतदयुक्त हरितः सधस्थाद्
आ रात्री वासस्तनुते सिमस्मै ॥ ऋ० १।११५।४।

देवता—सूर्यः । ऋषिः—कुत्स आङ्गिरसः । छन्दः—त्रिष्टुप् ।

तत्सूर्यस्येति—सूर्यस्य भानोः तद् देवत्वं तच्च महित्वं महत्त्वं यत् स कर्तोः क्रियमाणानां कर्मणाम् । मध्या मध्यादेव मध्ये एव वा कस्यचित् किंचित् कर्म पूर्णं जातं नवेत्यविगणयन्नेव, नियतसमये स्वं विततं 'रश्मिजालमिति' योज्यम् । संजभार संजहार संहरतीत्यर्थः । अथ यद् यदा स सूर्यः सधस्थात् सहावस्थानप्रदेशाद् अस्माद् देशाद् देशान्तरगमनाय अस्तमनाय । हरितः स्वरश्मीन् । भूमिगतानां रसानामाहरणाद् आदित्यरश्मयो हरितः "हरिद् दिशि स्त्रियां, पुंसि हयवर्णविशेषयोः । अस्त्रियां स्यात् तृणे", इति मेदिनी । अथवा हरितः स्वाश्वान् अयुक्त योजयति नियोजयति देशान्तरगमनाय । यद्वा यथा कश्चित् तन्तुवायः पटवयनाय प्रातः तन्तुसन्तानं तन्त्रे प्रसारयति दिवसावसाने च वस्त्रनिर्माणकर्मण्यपूर्णेऽपि ततं संवेष्टय निदधाति तद्वत् । तदा रात्री रजनी सिमस्मै लोकाय । सिम पदं सर्वार्थकं सर्वनामसु पठितम् । वासो वसनमिव तमः आतनुते विस्तारयति यथा काचिद् गृहपत्नी निशि स्वपतां शिशूनामुपरि नीशारादिकं प्रसारयतीत्यर्थः ।

अत्र प्रस्तुतं विषयं तमो निगीर्य तस्य अप्रस्तुतेन विषयिणा वाससा अभेदाऽध्यवसानादतिशयोक्तिः । सा च रात्री गृहपत्नी व्यवहारसमारोपात् सिमपदप्रतिपादितसर्वप्राणिषु च शिशुव्यवहारसमारोपात् समासोक्त्यलङ्कारं व्यनक्तीत्यलङ्कारादलङ्कारध्वनिः । मध्ये मध्यात् इति वक्तव्ये "सुपां सुलुक्पूर्वसवर्ण०" (पाणि० ७।१।३९) इत्यादिसूत्रेण आत्वं सुपो लोपो वा संजभार इत्यत्र 'हृग्रहोर्भश्छन्दसि" इति वार्त्तिकेन हकारस्य भकारत्वम् । सधस्थ इत्यत्र 'सधमादस्थयोश्छन्दसि" (पाणि० ६।३।९६) इति सूत्रेण स्थोत्तरपदयोगे सहस्य सधादेशः । सूर्यस्य रथं सप्तरश्मय एव सप्ताश्वा वहन्तीति

वेदेऽन्यत्रापि वर्णितम्—"सप्त युञ्जन्ति रथमेकं चक्रम् (ऋ० १।१६४। २)। "कालो अश्वो वहति सप्तरश्मिः सहस्राक्षोऽजरो भूरिरेताः"। (अथर्व० १९।५३।१)।

तथा नैषधकाव्ये श्रीहर्षोऽपि—"रामाऽलिरोमावलिदिग्वगाहिध्वान्तापते वाहनमन्तकस्य। तद्वीक्ष्य दूरादिव बिभ्यतः स्वानश्वान् गृहीत्वाऽपसृतो विवस्वान्" (स०२२। प.२८)। मन्त्रस्याऽस्य व्याख्यायां निरुक्ते ( ४।१० ) श्री यास्कः—तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत् कर्मणां क्रियमाणानां विततं (रश्मिजालम्) संह्रियते। तदाऽसावयुक्त हरणानादित्यरश्मीन्। हरितोऽश्वानिति वा। अथ रात्री वासस्तनुते सिमस्मै। वेसर (वासर) महरवयुवती (पृथक् कुर्वाणा) सर्वस्मात्। अपि वोपमार्थे स्यात् रात्रीव (रात्रीवद् वासस्तनुत इति)।

अथाऽभिधामूलो विक्षितान्यपदवाच्यः। संलक्ष्यक्रमव्यङ्ग्योऽर्थशक्तिसमद्भूतः षट्त्रिंशत्प्रकारको ध्वनिः।

प्रागुक्तमप्यस्य स्वरूपं क्रमप्राप्तत्वात् प्रकरणसंगतये च पुनरुच्यते—

द्विविधो वस्त्वलङ्कार‌रूपोऽर्थः संभवी स्वतः।
कवेः प्रौढोक्तिमात्रेण सिद्धस्तत्कल्पितस्य वा ॥६४॥

वक्तुरुक्तिस्वरूपश्च जडादेरपि कस्यचित्।
व्यञ्जकोऽर्थो विभक्तस्त्रिर्भजते षट् प्रकारताम् ॥६५॥

तस्माच्च षड्विधाद् व्यक्तो वस्त्वलङ्काररूपकः।
भवति द्वादशाऽऽत्माऽयमर्थशक्त्युद्भवो ध्वनिः ॥६६॥

विभक्तोऽनेन विधिनाऽयं ध्वनिर्द्वादशात्मकः।
स्यात् षट् त्रिंशत्प्रभेदोऽसौ पदवाक्यप्रबन्धगः ॥६७॥

पद्वाक्यादिगा भेदाध्वनेर्नाऽतिपरस्परम्।
भिद्यन्ते, नैव तस्मात्र इह सर्वेऽप्युदाहृताः ॥६८॥

प्रतिभेदं प्रदीयेति यद्युदाहरणादिकम्।
अनावश्यक एव एव स्याच्छास्त्रस्य बहुविस्तरः ॥६९॥

किञ्च—

वाक्यप्रबन्धादौ यः पाकः पूर्णताऽथवा ।
दृश्यते रसभावादेर्ध्वनेर्वस्त्वात्मकस्य वा ॥७०॥

न स पदपदांशादौ रसिकैरनुभूयते ।
तथाऽपि शक्यते त्यक्तुं कदाचित्कतया न सः ॥७१॥

वाक्यानुच्छेदसर्गादौ स्वतन्त्राऽवस्थितिर्ध्वनेः ।
यादृशी, तादृशी, नैव वर्णे पदपदांशयोः ॥७२॥

प्रायेणैते न काव्येषु जनयन्ति ध्वनिं स्वतः ।
सिद्धानामन्यथा किन्तु प्रकर्षस्यैव हेतवः ॥७३॥

तद्दिग्दर्शनमात्रं हि पुरा तेषां यथाकृतम् ।
सम्बन्धेऽपि प्रबन्धादेस्तस्माद् वर्त्म तदाश्रितम् ॥७४॥

पदप्रबन्धादिगतध्वनिप्रभेदानामुदाहरणसम्बन्धे—इत्यर्थः ।

(१) अथार्थशक्ति समुद्भूतेन स्वतः संभविना वस्तुना वस्तुध्वनिः पदप्रकाश्यः—

यथा—

विलोक्य कीनाशविनाशलीलं ससंभ्रमाः संयति विद्विषस्ते ।
स्वमेव पक्षं विमुखा निजघ्नुस्तेनाऽसि मन्ये क्षतपृष्ठभागः ॥
पद्यमिदं मदीयम् ॥

विलोक्येति—समरात् प्रपलाय्य प्राप्तं कमपि सेनापतिं नृपतिः सोल्लुण्ठवचनैस्तिरस्करोति—कीनाशस्य यमस्येव विनाशलीला यस्य तथाविधं त्वां शौर्यातिशयाच्छत्रुभुवि प्रविष्टं विलोक्य कांदिशीकास्ते प्रभ्रष्टविवेका यत् स्वमेव पक्षं प्रजघ्नुस्तस्मात् त्वं क्षतपृष्ठभागोऽसि । न तु भीरुतया पृष्ठं प्रदर्श्य पलायित इति । इहैकमेव 'मन्ये' इति पदम्—त्वं भीरुतयैव समरविमुखः पलायितोऽसीति वस्तु व्यज्यते ।

यथा वा—

परि माऽग्ने दुश्चरिताद् बाधस्व मा सुचरिते भज ।
उदायुषा स्वायुषोदस्थाममृताँ अनु ॥ यजु० ४।२८॥

देवता—अग्निः । ऋषिः—वत्सः । छन्दः—साम्नी बृहती, साम्न्युष्णिक् ।

परिमेति—हे अग्ने अग्निवत्प्रकाशस्वरूप, पावन, सन्मार्गदर्शक-प्रभो, यद्वा सद्गुरो ! त्वम्, मा माम्। दुश्चरितात् पापाचरणात्। बाधस्व निवारय। सुचरिते सत्पुरुषोचिताचारे च। भज नियोजय। तवाऽनया कृपयाऽहम्। आयुषा दीर्घेण समर्थेन वयसा। स्वायुषा शोभनेन पवित्रेण वयसा समृद्धः। उदस्थां पुण्यात्मनामूर्ध्वांगतिं प्राप्नुयाम्। अमृतान् अमृतत्वमापन्नान् जीवनमुक्तान्। अनु उदस्थांताननुसृत्य ऊर्ध्वां गतिमाप्नुयाम्।

अग्निना भगवता, सद्गुरुणा वा प्रदर्शितेन पथा गच्छन् जनः पापाचरणं विहाय सदाचारपरायणो देवोचितामूर्ध्वां गतिमापन्नः तेषां सान्निध्येन अस्मिन्नेव जीवने जीवन्मुक्तोऽमरश्च भवितुं शक्नोतीति वस्तु स्वतः संभविना **'उदस्थाम्'** इत्यनेन वस्तुना व्यज्यते। इहैकमेव 'उदस्थाम्' इति पदं ध्वन्यर्थ प्रतीतेर्निमित्तमिति तस्य पदप्रकाश्यता।

(२) अथ स्वतः संभविना वस्तुनाऽलंकारध्वनिः पदप्रकाश्यः—
यथा—

तदप्राप्तिमहादुःखविलीनाऽशेषपातका।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा।
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्॥
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका॥

श्रीमद्भागवतात् (काव्यप्रकाशे उल्लास ४)

इह श्रीकृष्णवियोगदुःख, तच्चिन्तनाऽऽह्लादयोः अशेषदुष्कृत-सुकृतफलत्वेन अध्यवसानाद् अतिशयोक्त्यलङ्कारद्वयी 'अशेष चय' पद-प्राधान्येन व्यज्यत इति **वस्तुनाऽलङ्कारध्वनिः**। अत्र व्यञ्जकस्य वस्तुनः कविप्रौढोक्ति विनाऽपि संभवात् स्वतः संभविता।

यथा वा—

अस्मद्भ्रातर एव भारतसुताः केचिद् गतादण्डता-
मांग्लानां करुणाऽणुना विरहिते प्रोद्यत्कुठारे करे।
खण्डानां रजतस्य मातृरुधिरैः कल्माषितानां कृते
हा हा हन्त कलङ्कयन्ति जननीं स्तन्यं कुलं चात्मनः॥
दर्शं दर्शमहर्निशं परवशो देशस्य दीनां दशां
घोरं क्लेशमवाप्नुवन्न वसितस्वाऽशेषपापोच्चयः।

**अस्मै यान्त्यसवोऽधुनेत्यतिसुखात् प्रक्षीणपुण्योच्चयो**
**जीवन्मुक्तिमवाप मस्तकमणिः श्रीभक्तसिंहः सताम् ॥**

युग्मम्, इदं पद्ययुगलं मम ॥

देशभक्तानां मुकुटमणिः श्रीभक्तसिंहो वैदेशिकानां लालाटिकत्वमापन्नैर्देशद्रोहिभिर्भारतीयैरेव विहितां भारतस्य दुर्दशां वीक्ष्य घोरक्लेशानुभवेन विगलितसकलकल्मषोच्चयः, किञ्च अधुना मातृभूमिकृते एव ममासवो यास्यन्तीति विभाव्य तज्जन्यपरमाह्लादानुभवेन अवसितसकलपुण्योच्चयो जीवन्मुक्तिमवाप । इह भारतदुर्दशादर्शनजन्यदुःखस्य, तस्य पारतन्त्र्यपाशोच्छेदनप्रयत्ने ममासवो यास्यन्तीति विभावनजन्यपरमाह्लाद् अशेषदुष्कृतसुकृतफलत्वेनाऽध्यवसानादस्य अतिशयोक्तिद्वयी । सा (पाप-पुण्य) "उच्चय" पदप्राधान्येन व्यज्यते । इति स्वतः संभविना अलङ्कारध्वनिः । पूर्वोदाहरणवदत्रापि व्यञ्जकस्य स्वतः संभविता ।

(३) अथ स्वतः संभविना अलङ्कारेण वस्तुध्वनिः पदप्रकाश्यः—

**यत्र ज्योतिरजस्रं, यस्मिंल्लोके स्वर्हितम् ।**
**तस्मिन् मां धेहि पवमानाऽक्षितेऽमृते लोके इन्द्रायेन्दो परिस्रव॥**

ऋक्० ९।११३।७॥

देवता—पवमानः सोमः । ऋषिः—कश्यपो मारीचः । छन्दः—पंक्तिः ।

यत्र ज्योतिरिति—हे पवमान सोम ! यत्र अजस्रम् अविनश्वरं ज्योतिः दिव्यः प्रकाशः सर्वदा प्रकाशते । यस्मिन् लोके स्वः शाश्वतं सुखम् । हितं निहितम् । तस्मिन् अक्षिते अक्षीणे । अमृते मृत्युरहिते लोके । माम् तव भक्तिरूपं सोममभिषुण्वन्तं धेहि स्थापय आवासयेत्यर्थः । हे इन्दो चन्द्रवदाह्लादक देव सोम ! इन्द्रं मल्लक्षणं स्वभक्तात्मानं प्रति । परिस्रव सहस्रशो धाराभिः प्रवह, याभिरहं सर्वतः परिप्लुतः आप्यायितश्च स्यामिति । पवमानः पूङ् पवने धातोस्ताच्छील्ये शानचि रूपम् । लोकः—लोक्यन्तेऽनुभूयन्तेः पुण्याऽपुण्यकर्मविपाका अस्मिन्निति । देहो भुवनभेदः, भगवत्साक्षात्काराकालिक आत्मनोऽवस्थाविशेषो वा । कर्मभिश्चिता लोका भोगेन क्षीयन्ते,न तु ज्ञानेन, एतेषां परान्तकालपर्यन्तावस्थायित्वात् । तद्युक्तमुक्तं मन्त्रे—'अक्षिते-

ऽमृते लोके' इति, इन्द्र इहात्मा। 'इन्द्रः शक्रान्तरात्मनि' इत्यनेकार्थं-संग्रहे श्रीहेमचन्द्राः। इन्दुः—उन्दी क्लेदने इति धातोः "आदेरिच्च" इत्यौणादिक (उणा० १।१२) सूत्रेण उप्रत्यये आदेरुकारस्येत्वे च रूपम्। उनत्ति आर्द्रीकरोति भक्तहृदयान्यनिर्वचनीयेनानन्दामृतेनेति। असौ गगनगत इन्दुश्चन्द्रिकया जगत् सिञ्चति।

सोमो हि सर्वभेषजानामधिपतिः। भगवति सोमत्वारोपात् तत्सेवनेन सकलभवाऽऽमयोन्मूलनक्षमत्वं व्यज्यते—इति **स्वतःसंभविनाऽलङ्कारेण वस्तुध्वनिः**। किञ्च—मन्त्रान्ते 'इन्दो' इति पदसामर्थ्यात्—यथा ओषधीनां नाथ इन्दुः स्वरश्मिभिरोषधीषु अमृतमासिञ्चति तथा हे इन्दो भगवन् त्वमपि इन्द्राय भक्तात्मानं माम् प्रति अनिर्वचनीयं ब्रह्मानन्दनिःष्यन्दम् इन्दुरूपोभूत्वा परिस्रवेत्युप**मालङ्कारध्वनिरपि**। स च पदप्रकाश्यः।

अथ अर्थशक्त्युद्भवः स्वतःसंभवी अलङ्कारेणाऽलङ्कारध्वनिः पद-प्रकाश्यः—

यथा—

**स्वर्यन्तो नाऽपेक्षन्त आ द्यां रोहन्ति रोदसी।**
**यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे॥** यजु० १७।६८

स्वर्यन्त इति—सुसम्यग् विदन्तीति सुविद्वांसः आत्मतत्त्वज्ञाः ज्ञानकर्मसमुच्चयवेदिनो वा, न तु कर्मकाण्डिनः। ये विश्वतोधारं ज्ञानयज्ञं वितेनिरे वितन्वन्ति आत्मानं समिधं विधाय ब्रह्माग्नौ जुह्वति, ते ज्ञानिनः स्वः स्वर्लोकं सुखमयं लोकं मोक्षमित्यर्थः गच्छन्तस्ततः प्राक् ऋणत्रयाऽपःकरणाय पुत्रोत्पादनस्वाध्यायद्रव्ययज्ञादिसाधनानि नापेक्षन्ते अवश्यकरणीयत्वेन न मन्यन्ते। तद् विनैव रोदसी पृथिव्यन्तरिक्षे अतीत्य द्यां द्युलोकमारोहन्ति। अथवाऽत्र 'रोदसी'पदं द्यामित्यस्य विशेषणम्। रुणद्धि जन्ममृत्युभयशोकादिकमिति रोदसी। अत्र धकारस्य दकारत्वं छान्दसम् इति तन्मन्त्रव्याख्यायामुव्वटमहीधरौ। यज्ञसामान्यसम्बन्धेन विश्वतोधारम् इति पदस्य विश्वतः सर्वत आज्यादेर्धारा यस्मिन्नित्यर्थे आपाततः प्रतीतेऽपि यज्ञस्यास्य ज्ञानमयत्वात् तत्र च भौतिकद्रव्याणामभावाद् विश्वतो धारयति पालयतीत्यर्थः उपतिष्ठते। नाऽपेक्षन्त इति वचनेनाऽत्राऽऽज्यादेरनावश्यकत्वं

वेदेन स्वयं प्रतिपाद्यते । इह स्वर्गमनसाधनानामभावेऽपि स्वःप्राप्ति-वर्णनाद् **विभावनालङ्कारः**। "विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते" (साहित्यदर्पण परि० १०। का० ८६) सा विभावना च द्रव्ययज्ञात् ज्ञानयज्ञस्योत्कर्षप्रतीतेर्व्यतिरेकं व्यनक्तीत्यलङ्कारादलङ्कारध्वनिः । अत्र 'सुविद्वांसः' इत्येकमेव पदं ध्वनिप्रतीतेर्निमित्तमिति तस्य पद-गतत्वम् ।

(५) अथ अर्थशक्त्युद्भवः कविप्रौढोक्तिसिद्धमात्रवस्तुना वस्तु-ध्वनिः पदगतः । यथा—

**ये नदीनां संस्रवन्त्युत्सासः सदमक्षिताः ।**
**तेभिर्मे सर्वैः संस्रावैर्धनं संस्रावयामसि ॥**

**ये सर्पिषः संस्रवन्ति क्षीरस्य चोदकस्य च ।**
**तेभिर्मे सर्वैः संस्रावैर्धनं संस्रावयामसि ॥**

अथर्व० १।१५।३,४॥

ये नदीनामिति—अस्माकं देशे नदीनां सरिताम् । ये अक्षिताः अक्षीणाः उत्सासः पृथिव्याःपृष्ठमुद्भिद्य ऊर्ध्वं प्रसरणशीलाः प्रवाहाः । अथवा उत्स्रवते ऊर्ध्वमुत्क्षिपन्ति सलिलमित्युत्साः । "उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः" इत्यमरः । सदं सदा । संस्रवन्ति प्रवहन्ति । तैः संस्रावैः प्रवाहैः । अहम् वयम् । मे अस्माकम् । धनम् अन्नादिसम्पदं संस्रावयामसि सिञ्चामः परिप्लाव-यामः । क्रियागतबहुवचनानुसारं अहं मे इत्यत्रापि बहुत्वम् ।

अस्माकं देशे सर्पिषः घृतस्य, क्षीरस्य दुग्धस्य, उदकस्य जलस्य च ये संस्रावाः प्रवाहा नदीरूपेण वृष्टिरूपेण वा संस्रवन्ति प्रवहन्ति । तेभिः तैः सर्वैः 'बहुलं छन्दसि' (पाणि० ७।१।१०) इत्यनेन छन्दसि भिस ऐस्त्वं न । वयं स्वदेशस्य धनं सम्पदम् । संस्रावयामसि प्रवाह-यामः उचितरीत्या प्रजाजनेषु वितरामः । येनाऽस्माकं देशे कश्चिदपि क्षुत्क्षामः नग्नः गृहविहीनो वा न म्रियेत ।

नदीनां संस्रावाः इत्यनेन देशस्य नदीमातृकत्वम्, देवमातृकत्वं वा प्रख्याप्यते । देशो नद्यम्बु-वृष्ट्यम्बु-सम्पन्नव्रीहिपालितः । स्यान्नदी-मातृको देवमातृकश्च यथाक्रमम् ।। तयोश्च नदीमातृकः श्रेयान् । घृतस्य क्षीरस्य च नदीनां न स्वतः संभविता । तस्मात् कविप्रौढोक्तिमात्र-

सिद्धाभिस्ताभिर्वस्तुरूपाभिर्देशस्य पुष्कलधन-धान्यसमृद्धिरूपं वस्तु व्यज्यते। इहैकमेव 'संस्नाव'पदं प्राधान्येन ध्वनिनिमित्तमिति तस्य पदगतत्वम्। उत्सासः 'आज्जसेरसुक्' (पाणि० ७।१।५०) इत्यनेन असुकि रूपम्। संस्नावयामसि इत्यत्र 'इदन्तो मसि'(पाणि० ७।१।४६) इत्यनेन सकारान्तस्य मस इकारागमः।

(६) अथ अर्थशक्त्युत्थः कविप्रौढोक्तिसिद्धेन वस्तुनालङ्कारध्वनिः पदगतः—

यथा—

मा गतानामा दिधीथा ये नयन्ति परावतम।
आरोह तमसो ज्योतिरेह्या ते हस्तौ रभामहे ॥

अथर्व० ८।१।७॥

मा गतानामिति—मुहुश्चिन्त्यमाना ये स्वजनाः। परावतम् अन्धकूपवन्नितरामधोगतिं नयन्ति प्रापयन्ति। इतः परलोकं गतानां तेषाम्। माऽऽदिधीथाः ध्यानं मा कृथाः। तमसः शोकान्धकाराद् उत्थाय आरोह उन्नतेर्मार्गे उपरि आरोह। ज्योतिः प्रकाशम् आशोत्साहरूपं प्रकाशं प्रत्येहि प्रगतिं कुरु। तत्र तवाऽऽलम्वदानाय वयं ते हस्तौ आरभामहे गृह्णीमः। मृतानामनुचिन्तनं न स्वतः संभवितया कमपि पुरुषं परावते अन्धकूपे अधो गतौ वा पातयितुमलम्। तस्मात् कविप्रौढोक्तिमात्रसिद्धेन तद्वर्णनेन वस्तुनाऽत्र प्रस्तुतं विषयं शोकमुत्साहं च निगीर्य तयोरप्रस्तुतेन विषयिणा तमसा ज्योतिषा चाऽभेदाऽध्यवसानादतिशयोक्तिर्व्यज्यते। अत्र 'आरोह' इत्येकमेव पदं ध्वन्यर्थप्रतीतेर्निमित्तमिति तस्य पदप्रकाश्यता। परा+अव+अटच्प्रत्यये "पृषोदरादीनि यथोपदिष्टम्"(पाणि० ६।३।१०९) इत्यनेन टकारस्य तकारे कृते अवतपदं साधु। पदमिदं वेदे कूपार्थकम्, लोके "गर्ताऽवटौ भुवि श्वभ्रे"—इत्यमरः।

(७) अथ अर्थशक्तिमूलेन कविप्रौढोक्तिसिद्धेनाऽलङ्कारेण वस्तुध्वनिः पदगतः—

यथा—

अयं लोकः प्रियतमो देवानामपराजितः।
यस्मै त्वमिह मृत्यवे दिष्टः पुरुष जज्ञिषे।

**स च त्वाऽनुह्वयामसि मा पुरा जरसो मृथाः ॥**

अथर्व० ५।३०।१७॥

अयं लोक इति—हे मानव ! अपराजितः आधिव्याधिभिरनिर्जितः । अघृष्यः । देहरूपी अयं लोकः (मानवदेहः) देवानां चक्षुरादीन्द्रियाणाम् अथवा तदाधिष्ठातृदेवानां सूर्यचन्द्रमरुदादीनामतिप्रियः । ते हि इमं यावच्छक्यम् अधिककालं योक्तुं नेच्छन्ति । इह स्थितानां तेषां रोगमरणप्रभृतिभिः आक्रमणकारिभिरसुरैः सह निरन्तरं युद्धं प्रवर्तते । देवा यावज्जागरूकाः बलशालिनश्च सन्तस्तान् प्रतिकर्तुं समर्थास्तावदेवाऽयं लोकः (देहः) अपराजितः । मन्त्रः पुनराह—हे मानव मर्त्य, त्वं प्रकृतिनियमाद् अन्ते मृत्यवे दिष्टः अर्पितः । यस्मै यस्मिन् देहे जज्ञिषे जायसे । इह सप्तम्यर्थे चतुर्थी । तत्र स्थातुम् त्वं सदा न शक्नोषीति यो जानाति, स च सोऽपि तथाविधोऽप्यहम् । इह 'च' इति पदम् अप्यर्थकम्, अहं त्वा त्वाम् अनुह्वयामि आकारयामि प्रतिबोधयामि वा । यत् त्वं जरसः प्राक् वार्धक्यात् पूर्वं मा मृथाः मृत्युवशंवदो मा भूः ।

इह 'अपराजितः' इत्येकं पदमेव प्राधान्येन ध्वन्यर्थप्रकाशनसमर्थः । कुतोऽपराजितः? यतो देवानां प्रियतमो ये च सततमस्य रक्षणतत्परा इति कविप्रौढोक्तिमात्रसिद्धेन देहे देवानां प्रियतमाऽऽवासत्वारोपरूपकेण त्वं सुखि सुदीर्घं जीवनं कामयसे चेत् देहमनिमिषाणां देवानामावासम्, इन्द्रियाणि देवान्, जीवनं च यज्ञं मन्यमानोऽस्य रक्षणाय सदा जागरूको भवेति वस्तु व्यज्यते ।

यथा वा—

**पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ॥**
**पयस्वतीः प्रदिशः सन्तु मह्यम् ॥** यजु० १८।३६॥

देवता—रसविद्याविदो विद्वांसः । ऋषिः—देवाः । छन्दः—आर्षी अनुष्टुप् ।

पयः पृथिव्यामिति—पयः पदं क्षीरस्य नीरस्य च वाचकम् "पयः स्यात् क्षीरनीरयोः" इति मेदिनी । किन्तु मन्त्रेऽस्मिन् तयोरर्थयोरनुपयोगित्वात् मुख्यार्थबाधे कार्यकारणभावसम्बन्धात् पयःपदमिह रसाऽऽनन्दकल्याणादिरूपमर्थं लक्षयति । अतिशयप्रकाशनं च प्रयोजनम् ।

भक्तो भगवन्तं प्रार्थयते—प्रभो पृथिव्यां मह्यं पयो रसम् आनन्दं कल्याणं वा धाः धेहि। भवत्कृपया सकलाऽपि मही रसमयी कल्याण-कारिणी च भूयात्। सर्वासु ओषधीषु मह्यं पयो धाः। "वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद् वनस्पतिः। ओषध्यः फलपाकान्ताः" इत्यमरः। दिवि द्युलोके मह्यं सुखदोष्मप्रकाशविपुलाऽवकाशादिरूपं पयो धेहि। अन्तरिक्षे सामयिकीः सुभिक्षनिमित्तभूताः वृष्टीर्धेहि। किं वहुना— सर्वा दिशः प्रदिशश्च मह्यं पयस्वत्यः कल्याणकारिण्यो भूयासुः। रस आनन्दो वा चित्तस्य धर्मः। सोऽत्र कविप्रौढोक्तिमात्रेण पयोरूपतया पृथिव्यादीनां धर्मत्वेन वर्णितः। रसादिकं प्रस्तुतं विषयं निगीर्य तस्य अप्रस्तुतेन विषयिणा पयसा अभेदाऽध्यवसानादत्राऽतिशयोक्तिर-लङ्कारः। स च—भगवद्भक्ताय सकलोऽपि लोकोऽनुकूलो रसमयः कल्याणकारी च भवतीति वस्तु व्यज्यते। इह मुहुरावृत्तमपि पयःपद-मेकमेव ध्वनेर्निमित्तमिति पदप्रकाश्योध्वनिः।

अथ अर्थशक्तिसमुत्थितः कविप्रौढोक्तिमात्रेण सिद्धोऽलङ्कारेणा-ऽलङ्कारध्वनिः पदगतः—

यथा—

**ऋषी बोधप्रतीबोधावस्वप्नो यश्च जागृविः।**
**तौ ते प्राणस्य गोप्तारौ दिवा नक्तं च जागृतम्॥**

**अथर्व० ५।३०।१०॥**

देवता—आयुष्यम्। ऋषिः—उन्मोचनः (आयुष्कामः)। छन्दः—अनुष्टुप्।

ऋषी बोधेति—बोधप्रतिबोधौ विषयेन्द्रियसम्बन्धात् संवेदन-ग्रहणम्, तत्प्रतिक्रियास्वरूपो रागद्वेषानुकूलः प्रयत्नश्चेति द्वौ ऋषी प्राणिनां देहेषु नित्यं तिष्ठतः। तयोः प्रथमः अस्वप्नः स्वप्नरहितः कदाचिदपि न स्वपिति। अपरः प्रतिक्रियात्मकः प्रयत्नरूपो वा यः संवेदनानन्तरं तत्क्षणं जागर्ति इति जागृविः, विषयस्य प्रियताऽप्रियतानुकूलं प्रति-क्रियां समाचरति। हे प्राणिन्! एतौ ऋषी ते प्राणस्य जीवनस्य गोप्तारौ रक्षकौ स्तः। तौ दिवानक्तं रात्रिं दिवं च जागृतं जागृयातां स्वव्यापारतत्परौ च भवेताम्। बोधप्रतिबोधयोः ऋषित्वारोपाद् रूप-कालङ्कारः। चेतनस्य धर्मौ अस्वप्नत्वजागृवित्वे बोधप्रतिबोधयोः

कविप्रौढोक्तिमात्रसिद्धौ, न स्वतः संभविनौ। अयं रूपकालङ्कारश्च 'आरोग्यं सुखिदीर्घजीवनं कल्याणं च कामयमानेन मानवेन तथा प्रयतितव्यं यथा तस्य बोधप्रतिबोधौ प्रतिक्षणमप्रमत्तौ स्वव्यापारतत्परौ स्याताम्' इत्युपमालङ्कारं व्यनक्ति। इहैकमेव 'ऋषी' पदं प्राधान्येन ध्वनेः प्रतीतौ निमित्तमिति तस्य प्रकाश्यता।

यथा वा—

**यो वेदाऽनडुहो दोहान्त्सप्ताऽनुपदस्वतः।**
**प्रजां च लोकं चाप्नोति तथा सप्तऋषयो विदुः।**

अथर्व० ४।११।९॥

यो वेदेति—यो विद्वान् तत्वविद् अनडुहो वृषभस्य। अनुपदस्वतः अक्षीयमाणान्। सप्तदोहान् सप्त क्षीराणि। वेद जानाति। स प्रजां शोभनां वंशपरम्परां लोकं कीर्तिम् अथवा सुखमयानुत्तमान् स्वःप्रभृतिलोकान्, सुखिजीवनं वा लभते इति तत्त्वम्।

सप्तऋषयः[1] प्रशस्ताः सप्तसंख्याकाः ऋषयो ज्ञानसाधनानीन्द्रियाणि येषां तथाविधास्तत्त्वज्ञानिनो विदुः जानन्ति। अनडुहोवृषभस्य दोहो दुग्धमनुपपन्नमिति मुख्यार्थबाधः। तत्कोऽयं अनड्वान् के च तस्य दोहाः?

इन्द्रः परमात्मैव सोऽनड्वान् तदुक्तमस्यैव सूक्तस्य द्वितीये मन्त्रे—'अनड्वानिन्द्र०'[2] इत्यादि। अथ के ऋषयः के च दोहाः? (क)

---

१. सप्तऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम्।
सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ॥
यजु० ३४।५५॥

२. अनड्वानिन्द्रः स पशुभ्यो विचष्टे, त्रयाञ्छक्रो विमिमीतेऽध्वनः।
भूतं भविष्यद् भुवनं दुहानः सर्वा देवानां चरति व्रतानि॥
अथर्व० ४।११।२॥

विश्वरूपशकटवहनादिन्द्र एवानड्वान् विचष्टे पश्यति प्रकाशते वा त्रीन् अध्वन त्रिप्रकारकान् सात्त्विकराजसतामसरूपान् जीवनमार्गान्, अथवा त्रिविधान् प्राणिन उत्पादयति। त्रिकालभवान् पदार्थान् रचयति। सूर्यचन्द्रादिदेवान् स्वमर्यादायां स्थापयति।

अयमात्मैव प्रथमः ऋषिर्यस्तमनडुहमिन्द्रमानन्दरूपं पयो दोग्धि। परमात्मसाक्षात्कारेण तत्सान्निध्येन वा जीवो ब्रह्मानन्दमनुभवति। अत्राऽऽनन्द एव दोहः। (ख) बुद्धिर्द्वितीय ऋषिः अयं चैतन्यरूपं पयो दोग्धि। (ग) अहंकारस्तृतीयः ऋषिर्योऽनुड्वाहम् अहंममादिरूपां चित्तवृत्तिमेव पयो दोग्धि। (घ) चतुर्थ ऋषिर्मनोरूपो यो हि तं मननशक्तिरूपं पयो दोग्धि। (ङ) प्राणाः। प्राणरूपोऽयमृषिस्तं जीवनशक्तिरूपं पयो दोग्धि। (च) षष्ठो ज्ञानेन्द्रियपञ्चकरूपो यो विषयज्ञानरूपं पयो दोग्धि। (छ) सप्तमश्च कर्मेन्द्रियपञ्चकरूपो यस्तं कर्मशक्तिरूपं पयो दोग्धि। एत एव सप्तर्षयो देहे निरन्तरं प्रवर्तमानस्य सप्तहोतृकस्य[1] यज्ञस्य होतारः। अनः शकटं वहतीत्यनड्वान्। "उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः। अनड्वान् सौरभेयो गौः" इत्यमरः। ऋषिः—"ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्" इति मेदिनी। अनुपदस्वतः नञ्+उप+दसु उपक्षये+क्वसुप्रत्यये शसिरूपम्।

इह कविप्रौढोक्त्या इन्द्रेऽनुडुत्त्वारोपाद् रूपकम्। स हि विश्वरूपं शकटं वहति ततः आत्मबुद्ध्यहङ्कारादीन् आनन्दचैतन्याहंवृत्त्यादीन् प्रस्तुतान् विषयान्निगीर्य तेषु यथाक्रमम् ऋषीणां दोहानां चाऽभेदाऽध्यवसानाद् अतिशयोक्तिरित्यलङ्कारादलङ्कारध्वनिः। तेन च जीवने सप्तहोतृकयज्ञत्वाभेदाध्यवसानाद् द्वितीयातिशयोक्तिः। इहानडुत्पदमेव प्राधान्येन ध्वनेर्निमित्तमिति तस्य पदप्रकाश्यता।

व्यञ्जकस्य स्वतःसिद्धत्वे, कविप्रौढोक्तिमात्रसिद्धत्वे च अर्थशक्त्युद्भवा ध्वनिभेदाः पदगता वाक्यगताश्च प्रायेण सर्वेऽप्युदाहृताः। कविनिबद्धवक्तृप्रौढोक्तिसिद्धास्तु ध्वनिभेदा वाक्यगता एव प्रदर्शिता न तु पदगता अपि। पदगतैरेव वाक्यगतानामपि भेदानां बोधगम्यत्वाद् अनावश्यकविस्तरभयाच्चेति।

अयमर्थशक्त्युद्भवो द्वादशविधो ध्वनिर्न केवलं पदवाक्ययोरेव, किन्तु प्रबन्धगतोऽपि भवतीत्युक्तं प्राक्। प्रबन्धश्च—"प्रबन्धो वाक्यविस्तरः" इति।

---

१. येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम्।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु॥ यजु० ३४।४

अथ प्रबन्धगतध्वनेर्दिङ्मात्रं प्रदर्श्यते। यथा—

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसंकुले।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे॥
न चेह जीवितः कश्चित् कालधर्ममुपागतः।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी॥

महाभारतात् काव्यप्रकाशे॥

मृतं पुत्रमादायश्मशानमागतानां तत्स्वजनानामाशुनिवर्तनं तत्र वर्तमानस्य दिवसे एव शवाशनक्षमस्य गृध्रस्याऽभिमतम् इति स्वतः संभविना तदीयवाच्यार्थरूपेण वस्तुना "न चेह जीवितः कश्चित् कालधर्ममुपागतः" तेषामाशुनिवर्तनरूपं वस्तु व्यज्यते। तद् व्यञ्जकश्च पद्ययुग्मात्मकः प्रबन्ध एव। न पदं वाक्यं वा।

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम्।
बहुविघ्नो मुहूर्तोऽयं, जीवेदपि कदाचन॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।
गृध्रवाक्यात् कथं मूढास्त्यजध्वमविशङ्किताः॥

महाभारतात् काव्यप्रकाशे॥

प्रबन्धेऽस्मिन् रात्रावेव शवभक्षणरूपस्वव्यापारसमर्थस्य गोमायोः तत्स्वजनानामासूर्यास्तं तत्र विलम्बनमभिमतमिति "मूढाः स्नेहं कुरुत साम्प्रतम्। बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन।" इत्यादिना प्रबन्धेन व्यज्यते।

यथा वा—

जोधपुरं प्रति प्रस्थातुकामं महर्षिदयानन्दं प्रति उदयपुरनिवासिनामार्यजनानां निवेदनम्—

के स्मोऽनुमन्तुमवमन्तुमृषीश्वरं त्वां
विश्वं करामलकवत् प्रविलोकयन्तम्।
पादारविन्दयुगले विनिवेदयामः
किञ्चित् तथापि भगवाननुमन्यते चेत्॥
भिन्ना धियः प्रकृतयो भगवन् जनानां
भिन्ना विचारसरणिश्च यथाप्रदेशम्।

केचित् स्वभावसरला उपदेशयोग्याः
केचित्तु वज्रहृदया असहिष्णवश्च ॥
यत्राऽधुनाकृतमतिर्भगवान् प्रयातुं
तद्वासिनो हि पुरुषाः परुषाः प्रकृत्या ।
श्रोतुं क्षमा न हि मनाक् स्वरुचिप्रतीपं,
मृद्नन्ति निर्दयतया कृमिवन्निरीहान् ॥
गन्तव्यमेव यदि तत्र महर्षिवर्यैः
पाखण्डखण्डनमपि प्रविधेयमेव ।
प्रेरणा गिरा मधुरया समयानुसारं
सर्वं विचार्य करणीयमनल्पधीभिः ॥

ऋषेरुत्तरम्—

प्रभुं विना कोऽपि भवन्न भावी
भूतो दयानन्दभयस्य हेतुः ।
ममाङ्गुलीस्ते परिवेष्ट्य तूलै-
र्निषिच्य तैलेन च पञ्चशाखम्[1] ॥
प्रज्वालयेयुर्वदनान्मदीया-
च्छ्रूयेत शब्दो न कदापि हाः हा !
तेन प्रकाशेन मनोऽन्धकारो
लुप्येत तेषां यदि मेऽस्तु हर्षः ॥
प्रसाधनं दुर्विषवल्लरीणां
न वेद्म्यहं कोमलकर्तरीभिः ।
समूलमुन्मूलयितुं कुठारैः
सदा कठोरैरपुनर्भवाय ॥ पद्यानीमानि मम ॥

प्रबन्धयोरनयोराद्ये—"यत्राऽधुना कृतमतिर्भगवान् प्रयातुं तद् वासिनोऽतिकुटिला असहिष्णवश्च । श्रोतुं क्षमा न हि मनाक् स्वरुचि-प्रतीपं मृद्नन्ति निर्दयतया कृमिवन्निरीहान्" इत्यादि वचनरूपेण स्वतः संभविना व्यञ्जकेन ऋषिभक्तानामाग्रहः ऋषेर्जोधपुरगमननिषेधरूपं वस्तु व्यज्यते । द्वितीये च—"प्रभुं विना कोऽपि भवन्न भावी भूतो

१. पञ्चवर्तिकः प्रदीपभेदो यः पूजायां प्रयुज्यते ।

दयानन्दभयस्य हेतुः"। इत्यादि वचनरूपेण स्वतः संभविना व्यञ्जकेन ऋषेस्तत्र गत्वा सत्यप्रकाशने दृढनिश्चयरूपं वस्तु व्यज्यते । इदं च ध्वनिद्वयमपि प्रबन्धोत्थम् न पदोत्थं न वा वाक्योत्थम् ।

वेदेभ्योऽपि अनेकानि सूक्तानि ध्वनेः प्रबन्धगतत्वेनोद्धतुं शक्यन्ते, यान्यत्र विस्तरभिया नोद्ध्रियन्ते ।[1] उपसंहरति—

**१. चतस्रो लक्षणामूलाः पदवाक्यगता भिदाः ।**
**२. षड् लक्ष्यक्रमा वाक्यपदांशादिसमुत्थिताः ॥७५॥**

**३. चतस्रः शब्दशक्त्युत्थाः ।**
**४. षट्त्रिंशच्चाऽर्थशक्तिजाः ।**
**व्यञ्जकाऽर्थैस्त्रिधा भिन्नाः पदवाक्यप्रबन्धगाः ॥७६॥**

**५. वाक्यएव भवत्येका शब्दाऽर्थोभयशक्तिजा ।**
**अन्योन्याऽमिश्रणाच्छुद्धा भिदा उक्ता इमा ध्वनेः ॥७७॥**

**चत्वारः, षट् च, चत्वारः षट् त्रिंशच्चैक एव च ।**
**मिलिता एकपञ्चाशद् ध्वनिभेदाः समासतः ॥७८॥**

अथाऽस्य ध्वनेर्मिश्रभेदा निरूप्यन्ते—

**ध्वनेः पूर्वोक्तभेदानां संयोगेन परस्परम् ।**
**संसृष्टिः संकरश्चेति जायते द्विविधो ध्वनिः ॥७९॥**

**तिलतण्डुलवन्नैरपेक्ष्येणैकत्र संस्थिताः ।**
**ध्वनयः स्युरनेके चेत् संसृष्टिरभिधीयते ॥८०॥**

---

१. राष्ट्रीशक्तेर्महिमवर्णनपरम्—

क. अहं रुद्रेभिर्वसुभिरित्यादि सूक्तम् । ऋ० १०।१२५।

ख. अन्नदानमाहात्म्यम्—न वा उ देवा इत्यादि । ऋ० १०।११७ ।

ग. मानवस्य दृढाऽध्यवसायसमक्षे प्रकृतेर्महाशक्तीनां प्रह्वीभावः (नदीसूक्तम्) । ऋ० ३।३३ ।

घ. द्यूतदेवननिन्दा—ऋ० १०।३४ ।

ङ. शिवसंकल्पशक्तिः—यजु० ३४।१-६ ।

च. ज्ञानविस्तारः (ब्रह्मौदनम्) अथर्व० ४।३४ ।

छ. सौमनस्यम्—अथर्व० ३।३० ।

ज. मातृभूमिरक्षाव्रतम्—भूमिसूक्तम्—अथर्व० १२।१ ।

अन्योन्याऽपेक्षिणां तेषां त्रिधा भवति संकरः ।
अङ्गाङ्गिभावे, सन्देहे, स्थितावेकाश्रये तथा ।।८१।।

एकस्यैव ध्वनेरन्येऽप्रधाना अङ्गतां गताः ।
उपकुर्वन्ति चेन्मुख्यं, सोऽङ्गाङ्गिभावसंकरः ।।८२।।

यत्र ध्वनिष्वनेकेषु नैवाऽन्यतमनिश्चयः ।
सन्देहसंकरोऽभावात्साधकस्येतरस्य वा ।।८३।।

इतरस्य वाधकस्य हेतोरित्यर्थः ।

एकस्मिन्नाश्रये नाना ध्वनयः स्युर्निवेशिताः ।
एकाश्रयप्रवेशाऽऽख्यः संकरोऽसौ तृतीयकः ।।८४।।

गुणिता एकपञ्चाशदेकपञ्चाशता सह ।
भवन्ति भेदाः प्रत्येकं चन्द्रव्योमर्तुदृङ्मिताः ।।८५।।

ध्वनेः शुद्धाः भेदाः ५१ । ते एकपञ्चाशत् एकपञ्चाशता गुणिताः ५१×५१=२६०१ चन्द्रव्योमर्तुदृङ्मिता भवन्ति ।

संसृष्टया त्वेकविधया त्रिविधसंकरेण च ।
चतुर्भिर्गुणिता वेदखाऽब्धिखेन्दुमितास्तु ते ।।८६।।

वेदाः=४, खं=०, अब्धिः=४ । खं=०, इन्दुः=१=१०४०४।

मिलिताश्चैकपञ्चाशद् भेदैः शुद्धैरिमे पुनः ।
जायन्ते सकला भेदा बाणेषुवेदखेन्दवः ।।८७।।

वाणाः=५, इषवः=५, वेदाः=४, खं=० । इन्दुः=१=१०४५५ ।

दिग्दर्शनमात्रार्थमुदाह्रियते—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ।।

स्निग्धश्यामलेति—रावणेन अरण्याद् हृतायां सीतायां वर्षागमे तद्वियोगव्याकुलस्य श्रीरामस्योक्तिः । स्निग्धया मसृणया श्यामलया मेचकया च कान्त्या लिप्तं वियद् व्योम यैस्तथाविधाः । वेल्लन्त्यश्च-

लन्त्य उत्पतन्त्य इत्यर्थः। बलाका बकपङ्क्तयो येषामधस्तात् तथाविधा घनाः। शीकरिणो जलकणमिश्रा वाताः समीरणाः। पयोदा जलदाः सुहृदो येषां तेषां शिखावलानाम्। कला अव्यक्तमधुराः, आनन्दकेकाः हर्षोद्गताः कण्ठध्वनयः कामं सन्तु, यतोऽहं दृढं कठोरहृदयो रामोऽस्मि। सर्वमिदं सहे आकैशोरकाद् राज्याभिषेकविघ्नवनवासादिविविधदुःखसहनाऽभ्यस्तत्वात् पुंस्त्वाच्च। किन्तु नितरां मृदुहृदया वैदेही तु कथं भविष्यति कथमिदं दुःखं सहिष्यति जीविष्यति च। ततः कल्पनोपस्थितां पुरतः स्थितामिव तां पश्यन् समाश्वासयितुमाह—हा देवि धीरा भव, दुःखमिदं धैर्येण सहस्व।

लेपनव्यापारो हि द्रवद्रव्यस्य परस्य मूर्तपदार्थस्य पृष्ठे प्रतनुर्व्यापकः संयोगः। सोऽमूर्ते वियत्यनुपपन्नः प्रगाढसम्बन्धमात्रम्, अचेतने पयोदे च चेतनधर्मस्य सौहार्दस्य बाधः उपकारकत्वमात्रर्थं लक्षयति। तयोरतिशयो लक्षणयोः प्रयोजनम्। एते द्वे अपि अत्यन्ततिरस्कृतवाच्यार्थे लक्षणे । तयोरन्योन्यनिरपेक्षतयाऽवस्थानात् संसृष्टिः। सा च "रामोऽस्मि सर्वं सहे" इत्यत्र रामपदस्य अत्यन्तदुःखसहिष्णुरूपे स्वकीय एव विशिष्टार्थेसंक्रान्तत्वात् तेन व्यक्तीकृतं विप्रलम्भं परिपुष्णाति। तस्मात् तयोरनुग्राहकानुग्राह्यभावः। तस्मात् प्रथमे लक्षणे (लिप्तसुहृत्पदगते) अङ्गे, रामपदद्योत्यो विप्रलम्भस्तु अङ्गीति तयोरङ्गाङ्गिभावसंकरः।

यथा वा—

**यः पृथिवीं व्यथमानामदृंहद्,**
**यः पर्वतान् प्रकुपिताँ अरम्णात्।**
**यो अन्तरिक्षं विममे वरीयो**
**यो द्यामस्तभ्नात् स जनास इन्द्रः॥** ऋ० २।१२।२॥

देवता—इन्द्रः। ऋषिः—गृत्समदः। छन्दः—त्रिष्टुप्।

यः पृथिवीमिति—यः कश्चिन्महाप्रभावः। व्यथमानां पीडातिशयादिव अस्थिरां भुवम् अदृंहत् स्वकक्षायां सूर्यं परितः आत्मनश्च धुरि परिभ्रमितुं नियन्त्रितामकरोत्। यो विद्युतां प्रहारैः, हिमानी प्रवाहैः, भूकम्पक्षोभैश्च प्रकुपितानिव अत एव ज्वालोद्गारिमुखान् पर्वतान् अरम्णात् तस्माद् व्यापाराद् विरतानकरोत् अथवा शनैः शनैः

हिमशिखरैर्हरितैर्वनैर्जलप्रपातैश्च रमणीयानकार्षीत् । यो वरीयः अतिशयेन उरुर्विस्तृतम् अन्तरिक्षं विममे व्यरचयत् । यश्च निरवलम्बे अम्बरे द्यां दीप्तिमन्तं विवस्वन्तम् अथवा नक्षत्रमण्डलम् अस्तभ्नात् । हे जनासः मानवाः स एव इन्द्रः । कश्चिदिन्द्रः परमात्मा नास्तीति मतिं माकार्ष्ट ।

व्यथनं प्रकोपश्च चेतनस्य धर्मौ ताविह पृथिव्यां पर्वतेषु बाधितौ पूर्वस्याः स्वधुरि सूर्यं परितश्च नियमितां गतिं द्वितीयेषु (पर्वतेषु) स्थिरताम्, हिमशिखरैररण्यानीभिर्जलप्रपातादिभिर्जनितां रमणीयतां च लक्षयतः। एतेन च विश्वनियन्तुर्भगवतो नियन्त्रणशक्तेरतिशयो व्यज्यते। इह द्वावपि ध्वनी (व्यथमानाम् इति प्रकुपितानिति पदयुगलद्योत्यौ) परस्परनिरपेक्षौ तस्मादत्र तयोः संसृष्टिः। मन्त्रस्य पूर्वार्धवर्णितौ व्यापारौ दृंहणस्तम्भनरूपौ उत्तरार्धवर्णितौ अन्तरिक्षनिर्माणद्युलोकस्तम्भनरूपौ व्यापारौ च 'नृम्णस्य मह्ना स जनास इन्द्रः' इत्यत्रोक्तस्य इन्द्रस्य ब्रह्माण्डनिर्माणनियमनयोः शक्तेरतिशयप्रकाशनेऽङ्गतां गच्छत इति । अयमङ्गाङ्गिभावसंकरः। वरीयः उरुशब्दात् "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः" (पाणि० ६।४।१५७) इति सूत्रेण एते आदेशा भवन्ति। वर् आदेशे ईयसुनि प्रत्यये रूपम्।

अथ सन्देहसङ्करो यथा—

एकपाद् भूयो हि द्विपदो विचक्रमे
द्विपात् त्रिपादमभ्येति पश्चात्।
चतुष्पादेति द्विपदामभिस्वरे,
संपश्यन् पंक्तीरुपतिष्ठमानः ।। ऋ०१०।११७।८।।

देवता—धनान्नदानम् । ऋषिः—भिक्षुराङ्गिरसः । छन्दः—जगती।

एकपादिति—अत्र पादपदम् अंशार्थकम् । एकपाद्धनः पुमान् केवलस्य चतुर्थांशस्य धनस्य स्वामी। "पादौ बुघ्ने तुरीयांऽशे, शैल प्रत्यन्त पर्वते। चरणे च मयूखे च" इति मेदिनी। धनमर्जयन्। भूयः भूयसा कालेन। भूयःपदात् "सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः" (पाणि० ७।१।३९) इति सूत्रेण टा-लुकि रूपम्। द्विपादं

द्विपादधनस्य स्वामिनम् । विचक्रमे प्राप्नोति, अतिक्रामति वा । द्विभाग-धनस्वामी ततोऽपि पश्चाद् अधिकतरं कालं यावत् धनमुपार्जयन् त्रिपादं त्रिभागधनस्वामिनम् । विचक्रमे अतिक्रामति । अथ चतुष्पाद् चतुरंशधनस्वामी पूर्वोक्तानां द्विपदादीनां सर्वेषां पङ्क्तीः परम्पराः । उपतिष्ठमानः उपगच्छन् । तेषां पौर्वापर्यं पर्यालोचयन् सर्वेषाम् अभि-स्वरे अभिस्वराय अग्रगमनप्रेरणानिमित्तम् उपतिष्ठते । "अभिस्वरे आभिमुख्येन प्रेरणे निमित्तभूते सति" । इति "वृत्रखादो वलंरुज०" (ऋ० ३।४५।२) इत्यादिमन्त्रव्याख्याने श्रीसायणः ।

लोके हि धनस्य, तस्मिन् आधिपत्यस्य च सीमा नास्ति । देव-दत्ताद् यज्ञदत्त आढ्यतरः । सोमदत्तस्ततोऽपीति परम्पराया अस्याः क्वाऽप्यवसानं नास्ति । अहमेव सर्वेभ्यो धनवत्तमः स्यामिति महत्त्वा-काङ्क्षा वशंवदो दिवानिशं परिग्रहग्राहगृहीतः कश्चिद् रोगिवृद्धा-ऽसमर्थेभ्योऽपि न किंचित् प्रयच्छति । तथापि भाग्यविपर्ययात् कदाचित् सोऽकिञ्चनो जायते । अतः परिग्रहमृगतृष्णां प्रशमय्य मानवेन परोप-कारकार्येषु स्वधनस्योपयोगो विधेय इत्यर्थः । अथवा संसारे ऐश्वर्य-वानेव सुखी सत्क्रियमाणश्च विलोक्यते न निःस्वः । अतः सर्वात्मना संग्रहायैव मानवेन प्रयतितव्यं न तूदरभरणाय परेषामग्रे करः प्रसार-णीयः । "**कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः**" (अथर्व० ७।५०। ८) इति वेदोपदेशश्च पालनीय इत्यर्थो मन्त्रेणाऽनेन व्यज्यते इति सन्देहः । यद्यपि सूक्तेऽस्मिन् मन्त्रान्तरे "**केवलाघो भवति केव-लादी**" । इत्यादिभिर्वाक्यैः कृपणनिन्दाप्रतिपादिता, किन्तु तया धनस्य तत्संग्रहस्य वा निन्दा न अर्थादापद्यते तयोः पृथग्विषयत्वाद् इति ।।

ननु काव्याध्ययनप्रयोजनेषु अन्यतमप्रयोजनम् "सद्यः परिनि-र्वृतिः" इत्युक्तम् । तस्याम् एषां सहस्रशो ध्वनिभेदानां केशत्वग्विश्ले-षणस्य क्वावकाशः ? इति चेत् सत्यम् । रसास्वादेऽस्य सूक्ष्मपरिच्छेदस्य नास्त्युपयोगः बुद्धेः कुशाग्रतो नु वर्धते । अत आचार्याः स्वशास्त्रेषु क्वचित् क्वचित् सरणिमिमानुसरन्ति ।

अधुना प्रसङ्गेऽस्मिन् यत्किञ्चिद् विशिष्टं वक्तव्यं तत्प्रस्तूयते—

**पूर्वाऽऽचार्यानुरोधेन प्रपञ्चोऽयं ध्वनेर्महान् ।**
**प्रदर्शितोऽस्य कात्स्न्र्याय विषयो वै यथापुरम् ।।८८।।**

सम्यग् विविच्यमाने तु न व्यक्तेर्विद्यते ध्वनिः ।
व्यङ्ग्य एव यतो वाच्यातिशायी ध्वनिरिष्यते ॥८९॥

गुडो मत्स्याण्डिका खण्डशर्करा च तथा सिता ।
उत्कर्षतारतम्येन भिद्यन्ते नाममात्रतः ॥९०॥

आनन्दवर्धनः श्रीमानृषिराद्यो ध्वनेः पथः ।
खण्डयित्वा मतं सम्यग् व्यञ्जनाऽभाववादिनाम् ॥९१॥

तदभिन्नध्वनेर्मार्गाद्वुच्छिद्याऽखिलकण्टकान् ।
अङ्गोपाङ्गैः सुसन्दृब्धैः प्रशस्तमकरोत् स तम् ॥९२॥

प्रदातुमुचितं स्थानं तस्मै पूर्वैरुपेक्षितम् ।
स जिज्ञासूपकारार्थं ध्वन्यालोकमदर्शयत् ॥९३॥

सकृत् तस्मिन् प्रशस्ते तु प्रतिपादयितुं ध्वनिम् ।
उपयुक्ततमं स्थानमस्ति व्यञ्जनरूपणे ॥९४॥

मम्मटादिभिराचार्यैस्तु कुतः परवर्तिभिः ।
निरूप्य व्यञ्जनां पूर्वं पृथग्ध्वनिर्निरूपितः ? ॥९५॥

उत्कृष्टव्यञ्जनाया हि प्रसङ्गे यदपेक्षितम् ।
अवलम्ब्य ध्वनिं किञ्चिद् वाच्यं तत्रैव तद् बुधैः ॥९६॥

तदर्थं न पृथग् यत्नः कार्यं आसीन्मनीषिभिः ।
पौनरुक्त्यमपाकर्तुं परिहर्तुं च विस्तरम् ॥९७॥

किं च—

अविवक्षितवाच्यस्य, लक्ष्याऽलक्ष्यक्रमस्य च ।
शब्दशक्त्युद्भवस्यार्थशक्त्युत्थस्य तथा द्वयोः ॥९८॥

शक्त्युत्थस्यैकपञ्चाशद्ये भेदा दर्शिता ध्वनेः ।
सामान्यव्यञ्जनायां तान् जायमानान् रुणद्धि कः ? ९९॥

यान्युद्धृतानि पद्यानि व्यञ्जनाया निरूपणे ।
ध्वन्युदाहृतपद्येभ्यस्तेषु किं विद्यतेऽन्तरम् ? ॥१००॥

तथा हि—

प्रकाशस्थद्वितीयस्योल्लासस्यान्त उदाहृते
'भद्रात्मन' इत्यादि पद्ये गजपरोऽपरः ।

असम्बद्धो न न भासेताऽर्थो मुख्येनेति राजनि
गजराजेन सादृश्याऽवगमादुपम ध्वनिः ॥१०१॥
चतुर्थेऽप्येवमुल्लासे ध्वनेः प्रकरणे तथा
'उल्लास्ये' त्यादि पद्येऽर्थो य इन्द्रपरकोऽपरः।
व्यज्यते शब्दशक्त्याऽसौ मुख्येन संगतो भवेत्
इति सादृश्यसम्बन्धाद् द्वयोः स्यादुपमाध्वनिः ॥१०२
वाच्यातिशायिनि व्यङ्ग्ये सर्वत्र विद्यते ध्वनिः।
अतादृशि गुणीभूतव्यङ्ग्यता सकलेष्वपि ॥१०३॥
व्यञ्जनाश्रितकाव्यस्य नास्ति भेदस्तृतीयकः।
अव्यङ्ग्यं तु चमत्कारि चेत् काव्यं चित्रमुच्यते ॥१०४॥

इति ध्वनिनिरूपणं पर्यवसितम्।

## अथ गुणीभूतव्यङ्ग्याख्यः काव्यभेदः—

व्यञ्जनामेव काव्यजीवातुं मन्यमानाः श्रीमदानन्दवर्धनादय आचार्याः काव्यस्य उत्तमत्वं मध्यमत्वम् अधमत्वं वा व्यञ्जनामाश्रित्य निर्णिन्युः। व्यङ्ग्येऽर्थे वाच्यार्थापेक्षया उत्कृष्टे सति उत्तमं तस्मिन्नतादृशि मध्यमम्, व्यङ्ग्यरहितां च रचनाम् अधमकाव्यत्वेन प्रत्यपादयन्। ध्वनिनिरूपणानन्तरं गुणीभूतव्यङ्ग्यस्याऽवसर इति तदर्थोयमारम्भः। तस्याष्टौ भेदाः। तदुक्तम् काव्य प्रकाशे—

अगूढम् अपरस्याङ्गम्, वाच्यसिद्ध्यङ्गम् अस्फुटम्।
सन्दिग्धतुल्यप्राधान्ये, काक्वाक्षिप्तम् असुन्दरम्।
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याऽष्टौ भिदाः स्मृताः ॥[1]

तत्र गुणीभूतव्यङ्ग्यस्य काव्यस्य 'अगूढाख्यः' प्रथमोभेदो यथा—

यस्याऽसुहृत्कृततिरस्कृतिरेत्यतप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि,
जीवन्न सम्प्रति भवामि किं मा वहामि ॥ काव्यप्रकाशात्[2]।

---

१. काव्यप्रकाशः, उल्लास ५, का० १, २।
२. पञ्चमो उल्लासस्यारम्भे।

यस्याऽसुहृदिति—अज्ञातवासरेषु सद्रौपदीकाः पाण्डवाः प्रच्छन्नवेशैः विराटराजनगरे न्यूषुः। तत्र कन्यान्तःपुरे राजकुमारीणां प्रसाधन-कर्मणि नियुक्तां सैरन्ध्रीरूपां द्रौपदीं कदाचित् विराटराजसेनापतिः कामान्धः कीचकश्चकमे। द्रौपदी तां स्वापमानवार्ताम् अन्तःपुरे बृहन्नलाव्यपदेशेन राजकन्यकानां नृत्यगीतादिषु देशिकतां कुर्वाणमर्जुनं व्याजहार। अज्ञातवासावधौ रहस्योद्‌घाटनभयादर्जुनस्तामुदतरत् यत् यद्यपि तवापमानवार्तेयं मम कर्णयोस्तप्तायःशूलवेधव्यथां जनयति, इच्छामि तां प्रतिकर्तुं किन्तु अवधेः प्राक् तदर्थमात्मानमसमर्थं समर्थये। पद्येऽस्मिन् जीवितोऽर्जुनस्य 'जीवन्न भवामीति' वचने मुख्यार्थबाधः। बाधितं च जीवन्निति पदं श्लाघ्यजीवित्वरूपे स्वार्थान्तरे संक्रान्तम्। नञा तु तत्प्रतिषेधो बोध्यते अतिशयबोधनं च लक्षणाप्रयोजनम्। अत्र निरतिनिन्दितजीवनज्ञापनं प्रयोजनं तच्च नितरां स्फुटम्। प्रतनु-प्रावरणाच्छन्नं सौन्दर्यं या श्रियं पुष्णाति न तामनावृतम्।

यथा वा—

**उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा**
**गुञ्जन्ति मञ्जुमधुपाः गृहदीर्घिकासु।**
**एतच्चकास्ति च रवेर्नवबन्धुजीव**
**पुष्पच्छदाभमुदयाऽचलचुम्बिबिम्बम्॥**

(काव्यप्रकाश उल्लास ५)

अत्र चुम्वतेः (चुबि वक्त्रसंयोगे) मुख्याऽर्थो मुख्योऽर्थः। स च चेतनस्य व्यापारोऽचेतने रविविम्बेऽनुपन्नः सन् सामान्यविशेषभाव-सम्बन्धेन संयोगमात्रं लक्षयतीत्यस्य अर्थान्तरसंक्रान्तवाच्यत्वम्। उषः-कालागमश्च व्यङ्ग्यः। स च वाच्याथवदतिस्फुट इत्यस्याऽगूढता।

यथा वा—

**इदं पित्रे मरुतामुच्यते वचः स्वादो स्वादीयो रुद्राय वर्धनम्।**
**रास्वा च मे अमृत मर्तभोजनं त्मने तोकाय तनयाय मृळ॥**

ऋ० १।११४।६॥

देवता—रुद्रः। ऋषिः—कुत्स आङ्गिरसः। छन्दः—जगती।

इदं पित्र इति—मरुतां राष्ट्राय धर्माय वा समर्पितजीवनानाम्।

पित्रे पालकाय । रुद्राय पापिनां रोदयित्रे परमात्मने राष्ट्राध्यक्षाय वा । इदं स्वादोः स्वादीयः प्रियात् प्रियतरम् अथवा मधुरान्मधुरतरम् । वर्धनं तस्य महिमवर्धकं स्तुतिवचनं प्रार्थनावचनं वा । उच्यते निवेद्यते । किं तत् ? हे अमृत मरणरहित ! यतो यशस्वी देहेन मृतोऽपि स्वकर्मभिश्च सदा जीवतीत्यमृतः सः, तस्य सम्बुद्धौ अमृत । मे मह्यम्, त्मने आत्मने । आकारलोपश्च्छान्दसः । मम तोकाय पुत्राय पुत्र्यै च । 'तोकं पुत्रे सुतायां च' इति मेदिनी । तनयाय तयोरपत्याय च मर्तभोजनं मानवोचितं प्रशस्तं भोज्यजातं रास्व देहि । नः मृड च अस्मान् सुखय । स्वादुपदं मुख्यया वृत्त्या रसनाग्राह्यमाधुर्यमभिधत्ते । तच्च अमूर्ते आकाशगुणे वचसि बाधितम् अत्यन्ततिरस्कृतस्वार्थं प्रियरूपमर्थान्तरं लक्षयति । प्रियताऽतिशयबोधनं तत्प्रयोजनम् । उच्यत इति पदं सामान्यवचनरूपमर्थं विहाय स्वीय एव विशिष्टे प्रार्थनारूपे निवेदनरूपे वाऽर्थे संक्रान्तम् । इदमपि वाच्यवदेव अतिस्फुटमित्यगूढा व्यञ्जना ।

अथ व्यङ्ग्यार्थस्य अपरस्य रसभावादेर्वाच्यार्थस्य वाऽङ्गतायां वा गुणीभूतव्यङ्ग्यस्य काव्यस्य द्वितीयो भेदः—

यथा—

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधयः ।
स्तानेतानपि बिभ्रती किमपि न श्रान्ताऽसि तुभ्यं नमः ।।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवः ।
तावद् बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ।।

(काव्यप्रकाश उल्लास ५)

अत्र कवेर्भूविषयको रत्याख्यो भावो राजविषयकरतेरङ्गतागतः ।

यथा वा—

उत त्वः पश्यन्न ददर्श वाचम् उत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ।।

ऋ० १०।७१।४।।

देवता—ज्ञानम् । ऋषिः—बृहस्पतिराङ्गिरसः । छन्दः—त्रिष्टप् ।

उत त्व इति—उत अपि । त्वः एको दुर्मेधः । इमां वाचं ज्ञानमयीं गिरम् । पश्यन्नपि न पश्यति । पुस्तकेषु लिखितं शब्दात्मकं ज्ञानं बाह्यचक्षुषा पश्यन्नपि न पश्यति । नावबुध्यते । अप्येकः कश्चिदपरः तां वाचं गुरुमुखान्निर्गतां शृण्वन्नपि श्रवणगोचरीकुर्वन्नपि न शृणोति नाकर्णयति तस्या निगूढं रहस्यं न हृदयङ्गमं करोति । उत त्वस्मै अप्येकस्मै मेधाविने सहृदयाय च । इयं वाक् उशती प्रेम्णा कामयमाना । सुवासाः शोभनवसनपरिधाना । जायेव प्रियपत्नीव । विसस्रे आत्मनो देहं स्वरूपं भावं वा पूर्णतया विवृणोति विवृतं विदधाति प्रकाशयतीत्यर्थः । पश्यन्नपि न पश्यति, शृण्वन्नपि न शृणोतीत्यत्र विरोधः । तस्य परिहारप्रकारः प्रागेवोक्तः । अत्र शृङ्गारो रस इति तु न वाच्यम् । मन्त्रस्य मुख्यो विषयो ज्ञानं तस्य प्रशंसा वा शृङ्गारात्मको जायाव्यवहारस्तस्याङ्गम् । उपमानमात्रम् । ज्ञानस्य ज्ञानिनो वा प्रशंसा अङ्गी । तस्यैव मुख्यता । वक्तुर्ज्ञानिनं प्रति रतिभावः स्थायिभावः ।

यथा वा—

**यस्यां पूर्वे पूर्वजना विचक्रिरे,**
**यस्यां देवा असुरानभ्यवर्तयन् ।**
**गवामश्वानां वयसां च विष्ठा,**
**भगं वर्चः पृथिवी नो दधातु ॥** अथर्व० १२।१।५

यस्यामिति-यस्यां नो मातृभूमौ पूर्वे पूर्वोत्पन्नाः पूर्वजनाः नः पूर्वजाः नः पितृपितामहादय. । विचक्रिरे विविधानि वीरताया यशसश्च महान्त्यवदानानि चक्रिरे । यस्यां देवाः सत्पुरुषाः असुरान् परपीडकान् दुष्टान् असुषु शरीरपोषणकार्येषु उचितेष्वनुचितेषु वा रमन्ते इत्यसुराः । तान् अभ्यवर्तयन् पराजिग्यिरे । या गवां धेनूनाम् अश्वानां हयादीनां स्थलहारिणां चतुष्पदाम् । वयसां हंसमयूरप्रभतीनां व्योमचारिणां पक्षिणां च विष्ठा विशेषेण अवस्थानं विहारस्थली । सा पृथिवी अतिविस्तृता । नः मातृभूमिः । नोऽस्मासु भगम् ऐश्वर्यम् । वर्चस्तेजः च आदधातु स्थापयतु । वेदज्ञानस्य त्रैकालिकत्वात् सर्वदैव जातेषु जायमानेषु जनिष्यमाणेषु पूर्वोत्तरकालभावित्वात् पूर्वजादित्वं नाऽनुपपन्नम् । इह पूर्वपुरुषेषु रतिस्तेषामवदानेषु च श्रद्धा मातृभुवं प्रति रतेरङ्गम् इति भावस्य भावाङ्गताया गुणीभूतव्यङ्ग्यस्य काव्यस्य अपराङ्गनामको द्वितीयो भेदः ।

यथा वा –

जनस्थाने भ्रान्तं कनकमृगतृष्णाऽन्धितधिया,
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृताऽलङ्काभर्तुर्वदनपरिपाटीषु घटना,
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वधिगता ॥

काव्यप्रकाशे (उल्लास ५) ॥

जनस्थाने भ्रान्तमिति—जीविकोपार्जनाय धनिकजनसेवाखिन्नस्य कस्यचिन्मनस्विनो निर्वेदोक्तिरियम् । मया रामत्वमाप्तं किन्तु यथा तेन कुशलवौ सुतौ यस्याः सा सीता प्राप्ता तथा कुशलं जीवननिर्वाह-योग्यं पुष्कलं वसु यस्य तद्भावः कुशलवसुता तु न प्राप्ता । रामत्व-प्राप्तिप्रकारं विवृणोति – तत्र प्राग्याचकपक्षे, कनकं सुवर्णमेव मृगतृष्णा मरुमरीचिका । यद्वा कनकस्य या मृगतृष्णा मरुमरीचिकेव मिथ्याऽऽशा । अथवा कनकस्य मृगो मार्गणं तेनान्धिता धीर्विवेको यस्य तथाविधेन मया । जनानां स्थाने ग्रामनगरादौ भ्रान्तम् । प्रतिपदम् पदे पदे च वै निश्चयेन देहि प्रयच्छेति वचनम् । उदश्रु उद्गतानि अश्रूणि यथा स्यु-रिति क्रियाविशेषणम्, तथा प्रलपितम् । काभर्तुः कुत्सितस्य स्वामिनो वदनपरिपाटीषु विकृतमुखभङ्गीपरम्परासु । अलमतिमात्रम् । घटना निर्निमेषदृष्टिसक्तिः कृता । तथापि कुशलवसुता पर्याप्तधनता नाधि-गता । अथ रामपक्षे—कनकमृगः स्वर्णमयो मायामृगरूपधारी मारी-चस्तस्य तृष्णया लोभेन । अन्धिता धीर्यस्य तेन, विवेकरहितेनेत्यर्थः । जनस्थाने दण्डकारण्यान्तःपातिनि रावणजनस्थाने तच्छिबिरसमीपे भ्रान्तम् । तस्मिन्नन्तराले आश्रमात् सीतायां हृतायाम् । प्रतिपदं पदे पदे । तामन्विष्यता मया । उदश्रु उद्गतान्यश्रूणि यथा स्युस्तथा हा वैदेहि हे सीते इति प्रलपितम् । ततः रावणेन सीता लङ्का नीतेति ज्ञानानन्तरम् । लङ्काभर्तूं रावणस्य वदनपरिपाटीषु दशवदनेषु । अलमतिमात्रम् इषुघटना शरप्रहारपरम्परा कृता । सर्वमिमं रामस्य व्यवहारं विधायाऽपि कुशलवसुता सीता पर्याप्तधनता वा नाधिगता । 'मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः । अन्वेषणे च याच्ञायाम्' इति मेदिनी । अत्र रामवज्जनभ्रमणादिना शब्दशक्तिमूलाऽनुरणनव्यङ्ग्यो याचकरामयोरुपमानोपमेयभावः, मयाप्तं रामत्वमिति कण्ठोक्तस्य

वाच्यार्थस्य अङ्गताम् उत्कर्षकतां नीतः । 'रामत्वमाप्तम्' इत्यनेनैव वाच्यार्थसिद्धिरिति नास्याः (याचकरामयोः) उपमाया वाच्यार्थसिद्धावङ्गत्वम् । इवाद्यप्रयोगान्नोपमाऽलङ्कारः । तस्माद् गुणीभूतव्यङ्ग्यतया मध्यमकाव्यत्वमेवेति । अत्रैव 'मयाप्तं रामत्वम्' इत्यस्य स्थाने 'व्यधायीदं सर्वम्' इति पाठे तु नास्य वाच्याऽर्थाङ्गता प्रत्युत ध्वनित्वमेव !

अथ गुणीभूतव्यङ्ग्यस्य काव्यस्य वाच्यसिद्ध्यङ्गता नाम तृतीयो-भेदः—

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।
इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ।।
यजु० १७।९२।।

देवता—यज्ञपुरुषः । ऋषिः—वामदेवः । छन्दः—आर्षी त्रिष्टुप् ।

त्रिधा हितमिति – त्रिधा विभज्य त्रिषु स्थानेषु हितं निहितम् । पणिभिः वणिग्भिर्व्यवहारिभिः, स्तोतृभिर्याज्ञिकैः, जिज्ञासुभिः गुरुसेवा-परायणैर्वा गुह्यमानं सम्यग् रक्ष्यमाणं यद् घृतम् आज्यम् । 'घृतमाज्ये जले क्लीबं प्रदीप्ते चाऽभिधेयवत्' इति मेदिनी । घृ क्षरणदीप्त्योः धातोः क्तप्रत्यये रूपम् । गवि अन्वविन्दन् अलभन्त तेषां । त्रयाणां घृतानां मध्ये एकमाज्यरूपम् । इन्द्रो जजान सुशासको जनयति । सौराज्ये हि सर्वेषां भोज्यपदार्थानां प्राचुर्यं सौलभ्यं च संभवति । द्वितीयं जलरूपं घृतं देवा विद्वांसो यज्ञादिभिः । गवि सूर्यरश्मिषु अन्वविन्दन् । तदुक्तम्—सूर्य एकं जजानेति' । अन्तरिक्षात् क्षरतीति घृतं जलम् । इह गौः सूर्यदीधितयः । 'गौः स्वर्गे च वलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्वाणदिग्वाग्भूष्वप्सु भूम्नि च' इति मेदिनी । सूर्याद् वृष्टिर्भवतीति भगवद्गीता – 'अन्नाद् भवन्ति भूतानि, पर्जन्यादन्नसंभवः । यज्ञाद् भवति पर्जन्यो यज्ञः कर्म समुद्भवः' (३।१४) । तेषां घृतानामेकं तृतीयमित्यर्थः ज्ञानरूपम् । जिज्ञासवः सुशिष्याः । वेनात् ज्ञानेन प्रदीप्ताद् गुरोः सकाशात् स्वधया पितृसेवया गुरुभक्त्या गवि तस्य वाचि उपदेशेषु निष्टतक्षुः ऊहापोहैरुत्कृत्योत्कृत्य जगृहुर्गृह्णन्ति ।

वेनो वेनतेः कान्तिकर्मणः। (निरुक्ते १०।३९)। गुरोः शिष्यं प्रति क्षरणात् दीपनात् बुद्धेः प्रकाशनाद्वा ज्ञानं घृतम्[1]।

इह पणि-गो-घृत-पदानां शक्तौ अभिधया वणिग्गोसर्पीरूपेऽर्थे-नियन्त्रितायां शब्दशक्तिसमुत्थितावपरौ व्यङ्ग्यार्थौ 'त्रिधा हितम्' इति पदयुगलस्य वाच्यार्थसिद्धावङ्गतां गच्छतः। तेषां व्यङ्ग्याऽर्थ-प्रतीत्यभावे 'त्रिधा हितम्' इत्यनुपपन्नमेव भवेत्। किं च त्रिविधयो-जनानन्तरम् आज्य, जल, ज्ञानादिषु नृप, सूर्य, गुरुषु धेनु रश्मि-वाक्षु च य उपमानोपमेयभावो व्यज्यते सोऽपि वाच्यार्थसिद्धावङ्गमिति। सर्वं-मवदातम्। तथाऽत्राऽनेकोपमाध्वनीनामेकाश्रयेऽनुप्रवेशात् तेषामेका-श्रयाऽनुप्रवेशसंकरोऽपि[2]।

अथ व्यङ्ग्यार्थस्य सुहृदयैरपि दुरूहत्वेऽस्फुटनामको गुणीभूतव्यङ्ग्य-काव्यस्य चतुर्थो भेदः—

यथा—

अदृष्टे दर्शनोत्कण्ठा, दृष्टे विच्छेदभीरुता।
नाऽदृष्टेन न दृष्टेन भवता लभ्यते सुखम्॥

काव्यप्रकाशात् (उल्लास ५)॥

प्रायेण प्रवासिनं प्रियजनं प्रति तत्पत्न्या वचनमिदम। प्रवासवास-रेषु भवतां दर्शनोत्कण्ठा मामाकुलयति। सहवासदिवसेषु च अचिरादेव

---

१. 

| पणयः — | घृतम् | गौः | उत्पादकः | साधनम् |
|---|---|---|---|---|
| क—व्यवहारिणः क्रयाविक्रयकर्तारो वणिजः | आज्यम् | धेनुः | इन्द्रः सुशासकः | सुशासनम् |
| ख—याज्ञिका वैज्ञानिक वा। | जलम् | रविरश्मयः | सूर्यः | तापः आतपो वा |
| ग—सुशिष्या जिज्ञासवः। | ज्ञानम् | गुरुवाग् | वेनो मेधावी गुरुः | स्वधा, सेवा, भक्तिः |

२. इतोऽग्रे काव्यस्य चतुर्थो भेदो निर्दिश्यते। वाच्यसिद्ध्यङ्गनामकस्य तृतीयभेदस्य कश्चित् पाठो नष्टः प्रतीयते, तस्यानिर्देशात्। यु० मी०

भाविविरहभयं व्यथयति । अतस्तथा किंचित् कुरु यथा द्वयमप्येतन्न पीडयेदिति सहृदयेनाऽपि दुरूहम् । इत्यस्य ऽस्फुटता ।

यथा वा—

**समौ चिद्धस्तौ न समं विविष्टः**
**समातरा चिन्न समं दुहाते ।**
**यमयोश्चिन्न समा वीर्याणि,**
**ज्ञाती चित् सन्तौ न समं पृणीतः ॥ऋ० १०।११७।६**

समौ चिदिति—समानावपि करौ समानं कार्यं न विविष्टः न व्याप्नुतः, न कर्तुं शक्नुत इत्यर्थः । समाना एका माता ययोस्ते द्वे गावौ समं न दुहाते समानपरिमाणं दुग्धं न प्रयच्छतः । यमयोश्चिद् एकस्या एव जनन्या उदरात् सहोत्पन्नयोः सुतयोः समा समानि वीर्याणि कार्यसामर्थ्यानि न भवन्ति । ज्ञाती चित् सन्तौ एककुलोत्पन्नौ निकटसम्बन्धिनौ याचकान् समं न पृणीतः प्रीणयतः । इह कारणसामग्र्याः साम्येऽपि कार्य साम्याऽभाववर्णनाद् **विशेषोक्तिरलङ्कारः** । "सति हेतौ फलाऽभावे सा विशेषोक्तिश्च निगद्यते"[1] । किं च दातरि प्रस्तुते अप्रस्तुतानां हस्त-सहोदर-यमलानामपि समानकार्यानुत्पत्तिरूपैकधर्मसम्बन्धवर्णनाद् **दीपकालङ्कारः** । "अप्रस्तुतप्रस्तुतानां[2] दीपकं तु निगद्यते" । इह विशेषोक्तिर्दीपकस्याऽङ्गमिति तयोरङ्गाङ्गिभावसङ्करः । वचनमिदं यदि कस्यचिदीदृशस्य याचकस्यास्ति यः प्रायेण एकस्मादेव वदान्यात् प्राप्तभिक्षः कदाचित् कुतश्चित् कारणात् तमुपगन्तुमक्षमस्तत्समानधनमन्यम् अथवा तस्यैव भ्रातरम् अयं तत्समानत्वात् तत्स्वजनत्वाद्वा तादृश एव उदारः स्यादित्याशयोपगच्छति ततश्च किमप्यप्राप्य रिक्तहस्तो निवर्तते । अथवा याचकेभ्यो नित्यदातुस्तस्य वदान्यस्यैव, यः कदाचित् कारणवशाद् दातुमवसराऽभावात्—अद्य मयाऽदत्तवित्तोऽप्ययं ममासन्नवर्तिनोऽन्यस्माद् ममैव वा सहोदरात् किंचित् प्राप्स्यतीति विचार्य तद्दिने तस्मै न किंचित् ददाति । इह वक्तृभेदात् व्यङ्ग्यार्थभेदो

१ साहित्यदर्पणे दशमपरिच्छेदे ६७ तमायां कारिकायां, 'विशेषोक्तिस्तथा द्विधा' इति पाठः ।

२ साहित्यदर्पणे दशमपरिच्छेदे ४९ तमायां कारिकायाम् 'अप्रस्तुतप्रस्तुतयोर्दीपकं' इति पाठः ।

भवति। धनिकान्तराद् भिक्षुकेण तद्दिने किंचिदपि न लब्धमिति ज्ञानानन्तरं वदान्यस्य वक्तुर्वचनाद् विषादस्य नैराश्यस्य च व्यङ्ग्यता। धनिकस्योक्तौ तु स्वं प्रत्यनुशयः, अदातारं प्रति तु दानक्षमोऽप्ययं बद्धमुष्टिः कृपण इति निन्दा विस्मयो वा व्यङ्ग्यः इति पृष्ठभूमेरज्ञानादस्फुटता।

अथ वाच्यार्थव्यङ्ग्यार्थयोः प्राधान्ये सन्देहात् संदिग्धप्राधान्याख्यो गुणीभूतव्यङ्ग्यस्य **पञ्चमो भेदः**—

यथा—

**स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाप्यधृष्यम्।**
**नाऽलक्षयत् साध्वससन्नहस्तः स्रस्तं शरं चापमपि स्वहस्तात्॥**

कुमारसम्भव, सर्ग० ३ पद्य ५१॥

अत्र मनसाऽप्यधृष्यं तादृशं त्रिलोचनं तावतिसमीपे सहसा पश्यतः स्मरस्य साध्वसातिशयात् कराभ्यां शरचापयोरलक्षितं स्रंसनस्य तेन व्यङ्ग्यस्य तस्य मोहजडताविषादजन्यस्य किंकर्तव्यताविमूढत्वस्य च मध्ये कतरस्य प्राधान्यमिति सन्देहात् संदिग्धप्राधान्याख्यो गुणीभूतव्यङ्ग्यस्य काव्यस्य भेदः।

'मोहो विचित्तता भीतिर्दुःखाऽऽवेगानुचिन्तनैः।
मूर्च्छनाऽज्ञानपतनभ्रमणाऽदर्शनादिकृत्॥

अप्रतिपत्तिजडता स्यादिष्टाऽनिष्टदर्शनश्रुतिभिः।
अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र॥

उपायाऽभावजन्मा तु विषादः सत्त्वसंक्षयः।
निःश्वासोच्छ्वासहृत्तापसहायाऽन्वेषणादिकृत्॥

(सा० द० तृतीयपरिच्छेद कारिका १५०, १४८, १६७)।

इति मोहादीनां स्वरूपं साहित्यदर्पणादौ द्रष्टव्यम्।

यथा—

**अपश्यमस्य महतो महित्वम् अमर्त्यस्य मर्त्यासु विक्षु।**
**नाना हनू विभृते संभरेते असिन्वती बप्सती भूर्यत्तः॥**

ऋ० १०।७९।१॥

देवता—अग्निः । ऋषिः—सौचीको अग्निर्वैश्वानरः, सप्तिर्वा-जम्भरो वा । छन्दः—त्रिष्टुप् ।

अपश्यमिति—भगवतोऽद्‌भुतां सृष्टिरचनां पश्यन् विस्मितो भक्त-स्तत्कौशलमंशतो वर्णयति—अहम् अस्य महतः अमर्त्यस्य जन्ममरण-धर्मरहितस्य स्रष्टुः । मर्त्यासु मरणधर्मयुक्तासु विक्षु प्रजासु प्राणिनां देहेषु प्रकटं महित्वं महिमानम् । अपश्यम् साक्षात् करोमि । अनन्त-ब्रह्माण्डे तु कथैव का ? किं तन्महित्वम् । तदाह—मानवानां देहेषु नाना पृथक् अवस्थिते अपि विभृते विशेषप्रकारेण एकत्र-भूते संयोज्य विन्यस्ते । हनू शिप्रे जम्भे देहमिमं संभरेते पालयतः । ते असिन्वती अपि अखादन्त्यावपि । बप्सती भक्षयन्त्यौ भूरि अत्तः प्रचुरं खादतः । न खादन्त्यावपि खादत इति विरोधः । अयं विरोधः स्रष्टुः कृतेश्चमत्कारं प्रकाशयति । मे भोज्यं चर्वतः इत्यत्तः । न त्वस्मिन्नेव रक्षतः किन्तु तत्क्षणमुदरं प्रतिप्रेषयत इति न खादतः । "असिन्वती असंखादन्त्यौ" इति निरुक्ते (अ० ३ । खं० ४) श्रीयास्कः । यथा पिण्डे तथा ब्रह्माण्डेऽपीति सिद्धान्तानुसारं द्यावापृथिव्यौ तस्य विश्वात्मनः हनू । ययोर्मध्ये प्रलयकाले सकलं जगत् स्वमूलकारणे विलीनं प्रभवकाले च पुनः प्रभुभूतं भवति । एवं स भगवान् खादन्नपि न खादति न खादन्नपि च खादति ।

अत्र वाच्यार्थोऽधिकचमत्कारी व्यङ्ग्याऽर्थो वेति निर्णयाभावात् तयोः सन्दिग्धं प्राधान्यम् ।

अथ वाच्यार्थव्यङ्ग्यार्थयोस्तुल्ये प्राधान्ये तुल्यप्राधान्यनामको गुणीभूतव्यङ्ग्यस्य काव्यस्य षष्ठो भेदः—

यथा—

ब्राह्मणातिक्रमत्यागो भगतामेव भूतये ।
जामदग्न्यस्तथामित्रमन्यथा दुर्मनायते ॥

अयं परशुरामस्य रावणं प्रति सन्देशः । महापराक्रमी परशुरामो-ऽमित्रः सन् क्षणादेव रक्षःकुलस्य क्षयाय क्षम इति व्यङ्ग्यार्थस्य वाच्या-र्थस्य च तुल्यं प्राधान्यम् । येन एकविंशतिवारं क्षत्रियकुलस्य विध्वंसः कृतः स दुर्मनायेत चेत् तस्य दुष्परिणामस्त्वया स्वयमेव विचारणीय

इति परिमितपदा उक्तिः परशुरामस्याप्रसन्नताया भीषणतां प्रकटयितुमलम् ।

यथा वा—

उन्मा पीता अयंसत रथमश्वा इवाशवः ।
कुवित् सोमस्यापामिति ॥

उपमा मतिरास्थित वाश्रा पुत्रमिव प्रियम् ।
कुवित् सोमस्यापामिति ॥

हन्ताऽहं पृथिवीमिमां निदधानीह वेह वा ।
कुवित् सोमस्यापामिति ॥ ऋ० १०।११९।३, ४, ९॥

उन्मेति—भक्तो भक्तिरसम् अथवा सोमरसं पीतवान्, तत्प्रभावेण समुद्रिक्तप्रमदः स स्वमनोदशामेवं वर्णयति—पीता एते सोमरसाः आशवः शीघ्रगामिनः अश्वा रथमिव माम् उदयंसत उद्यच्छन्ति अन्तरिक्षे इव उच्चैरुन्नयन्ति । अहमात्मानमात्मविश्वासेन दृढोत्साहेन च नभस्युड्डीयमानमिवाऽनुभवामि । कुतस्तवेदृशी दशा ? यतोऽहं कुवित् असकृत् सोमस्य सोममित्यर्थः । द्वितीयार्थे षष्ठी प्रयोगः । अपाम् पीतवानस्मि । तेन सोमपानेन मे मतिः प्रतिभा गोचरात्प्रत्यागता वाश्रा प्रियवत्सं ह्वातु शब्दं कुर्वाणा धेनुरिव मामुपास्थित उपस्थिता । तया प्रतिभया प्रेरितोऽहमात्मनि कामपि अनिर्वचनीयां शक्तिमुन्मिषन्तीमनुभवामि । इच्छामि च पृथिवीमिमां यथाकामम् इह वा इह वा निदधानीति । कथमेतत् संभवति ? यतोऽहं कुवित् असकृत् सोमं पीतवानस्मि ।

मन्त्रेष्वेषु आतृप्ति परिपीतभक्तिरसस्योपासकस्य हृदयार्णवे दुर्दमनीयस्य उत्साहस्य च ये महोर्मय उत्तिष्ठन्ति तेषां शब्दचित्रं किंचित् वैदिककविना (परमेश्वरेण) अङ्कितम् । मानवमात्रेण पृथिव्या इत उत्थापनं यथाभिलाषमन्यत्र स्थापनं च बाधितं सत् मानवसमाजस्य गलितपरम्पराणामामूलपरिवर्तनम् अभिनवसमाजस्य निर्माणरूपम् 'व्यङ्ग्यार्थं व्यनक्ति । अत्र वाच्यार्थो यादृशः कवित्वमयो व्यङ्ग्यार्थोऽपि तादृश एव चमत्कारपूर्ण इति द्वयोस्तुल्यं प्राधान्यम् ।

अथ व्यङ्ग्याऽर्थे काक्वाऽऽक्षिप्ते तन्नामको गुणीभूतव्यङ्ग्यकाव्यस्य सप्तमो भेदः ।

**यथा—**

**मथ्नामि कौरवशतं समरे न कोपाद्**
**दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।**
**सञ्चूर्णयामि गदया न सुयोधनोरुं**
**सन्धिं करोतु भवतां नृपतिः पणेन** ।। वेणीसंहारे ।।

द्यूतसभायां सर्वजनसमक्षं प्रतिज्ञातकुरुकुलक्षयस्य भीमसेनस्य उक्तौ **न मथ्नामीति** वचनं बाधितं सत् तत्क्षणमेव '**न मथ्नामीति न, किन्तु मथ्नाम्येवेति**' तत्प्रतिषेधरूपेऽर्थान्तरे परिणमति । द्वितीय-तृतीय चरणयोः "**न पिबामि, न सञ्चूर्णयामि**" इत्यत्रापि तथैव "**न पिबामीति न, किन्तु पिबाम्येव; न सञ्चूर्णयामीति न, किन्तु सञ्चूर्णयाम्येव**" इति निषेधाऽभावमुखो विधिरूपो व्यङ्ग्याऽर्थो विपरीत-लक्षणायै अवकाशमददानः कण्ठध्वनिभेदेन हठादिव झटिति प्रतीयते । अत्र काक्वाक्षिप्तस्य व्यङ्ग्याऽर्थस्य प्रतीतिं विना वाक्यार्थ एव न संगच्छते । ननु अत्रापि—'**तथा भूतां दृष्ट्वा नृपसदसि पाञ्चालतनयाम्** (वेणीसंहारे)' इत्यादाविव काकुवैशिष्ट्याद् ध्वनिरेव कुतो न ? श्रूयताम्—तत्र 'गुरुर्युधिष्ठिरोऽद्यापि खिन्ने मयि खेदं भजति, न तु कुरुषु' इति प्रश्नमात्रेणाऽपि वाक्यार्थविश्रान्तिसंभवः । गुरुणा नित्याऽपकारिषु कुरुषु क्रोधः कार्यो, न तु नित्याऽनुगते मयीति काक्वाक्षिप्तो व्यङ्ग्याऽर्थस्तु स्वतोऽप्युपपन्नं वाक्यार्थं विशिनष्ट्येव, न तु तमुपपादयति । 'मथ्नामि' इत्यादौ तु 'अवश्यं मथ्नाम्येवेति' तत्क्षणप्रतीत-काक्वाक्षिप्ताऽर्थाऽवगमं विना वाच्यार्थ एव न संगच्छते इति द्वयोर्भेदः । अस्य वैदिकमुदाहरणं मृग्यम् ।

अथ व्यङ्ग्यस्याऽर्थस्य वाच्यादसुन्दरत्वे गुणीभूतव्यङ्ग्यकाव्यस्याऽष्टमो भेदः । यथा—

**इन्द्र जहि पुमांसं यातुधानमुत स्त्रियम् ।**
**विग्रीवासो मूरदेवा ऋदन्तु मा ते दृशन् सूर्यमुच्चरन्तम् ।।**
अथर्व० ८।४।२४।।

इन्द्रेति—हे इन्द्र राजन् त्वं प्रजाजनेभ्यः । यातुधानम् यातनादायिनं पुमांसं पुरुषं स्त्रियं वा नारीं वा । जहि मारय । प्रजापीडक-

सम्बन्धे स्त्रीपुरुषभेदविचारो न कर्तव्यः । मूरदेवाः मूढा देवाः नेतारो येषां तथाविधा आततायिनः । विग्रीवासः शासकेन छिन्नकण्ठाः ऋदन्तु नश्यन्तु । ते आगामिनि उच्चरन्तम् उद्गच्छन्तम्, सूर्यं मा दृशन् न पश्यन्तु । 'ते यथा सम्भवम् अचिरेणैव हन्तव्याः' इत्यस्य व्यङ्ग्योऽर्थः । अयं च ते आगामिनि दिने उच्चरन्तं सूर्यं द्रष्टुं न शक्नुयुरिति वाच्यार्थादसुन्दरः ।

ननु व्यञ्जनामूलकत्वाद् ध्वनेः पृथङ् निरूपणं प्रत्याख्याय तद्वदेव व्यञ्जनामूलकस्य गुणीभूतव्यङ्ग्यस्य काव्यस्य पृथङ् निरूपणमिह कस्मात् कृतम् ? इति शङ्कते

प्रदर्श्य व्यञ्जनाकुक्षावन्तर्भावं ध्वनेः पुरा ।
इदं पृथग्गुणीभूतव्यङ्ग्यकाव्यनिरूपणम् ॥१०५॥
व्यञ्जनाश्रिततारूपहेतुसाम्ये द्वयोरपि ।
आरोहति धियं नैव सुधियां तु कथंचन ॥१०६॥

तदुत्तरति—

भवता युक्तमेवोक्तं, प्रतिपद्यामहे वयम् ।
प्राचां परम्परामात्रा ऽनुरोधात्तु तथा कृतम् ॥१०७॥
व्यञ्जनायाः प्रसङ्गेऽस्य प्राप्तकालं निरूपणम् ।
तत्रैव तद्विधातव्यं पृथक्त्वं तस्य नोचितम् ॥१०८॥

किञ्च —

किञ्च काव्यस्य ये भेदा उत्तमो मध्यमाऽवरौ ।
विहिता व्यञ्जनामूला न तेऽपि हृदयङ्गमाः ॥१०९॥
रसो भावश्चमत्कारः काव्यजीवातवस्त्रयः ।
तेषामन्यतमस्यापि पाकेनोत्तमकाव्यता ॥११०॥
भवेन्मध्यमता मध्यमेन हीनेन हीनता ।
विधास्यते विचारोऽस्य सम्यग् रसनिरूपणे ॥१११॥

इति ध्वनि-विमर्शात्मकः पञ्चम उन्मेषः समाप्तः ॥

[अस्य ग्रन्थस्य 'मथ्नामि कौरवशतं ''''पणेन ॥ वेणीसंहारे'

इत्यन्तो भागो पुरा गुरुकुलपत्रिकायां क्रमशो मुद्रितोऽभूत्। ततः पञ्चमोन्मेषस्याऽवशिष्टोंऽशो लेखकस्य हस्तलिखितपत्रेषु तत्तनयेन श्रीमता विनयभूषणेन संप्राप्तः, अस्मत्सकाशे च प्रेषितः। एतेन ध्वनिविमर्शात्मकः पञ्चम उन्मेषः पूर्णतामभजत। प्रतीयते इतः परं ग्रन्थकर्त्रा ग्रन्थो न लिखितः।]

---

# ग्रन्थे समुदाहृतानां व्याख्यातानां च वेदमन्त्राणाम्

# अनुक्रमणिका[1]



१. अस्यां मन्त्रानुक्रमण्यां मूलग्रन्थे टिप्पण्यां चोद्धृता (व्याख्याता) सर्वेऽपि मन्त्राः संकलिताः सन्ति ।

# रामलाल कपूर ट्रस्ट द्वारा

## प्रकाशित वा प्रसारित प्रामाणिक ग्रन्थ

### वेद-विषयक ग्रन्थ

१. **ऋग्वेदभाष्य** (संस्कृत हिन्दी; ऋग्वेदादिभाष्यभूमिका सहित)—प्रतिभाग सहस्राधिक टिप्पणियां, १०-११ प्रकार के परिशिष्ट व सूचियां। प्रथम भाग ३५-०० द्वितीय भाग ३०-००, तृतीय भाग ३५-००।

२. **यजुर्वेदभाष्य-विवरण**—ऋषि दयानन्दकृत भाष्य पर पं० ब्रह्मदत जिज्ञासु कृत विवरण। प्रथम भाग १०० रुपये है। द्वितीय भाग मूल्य ४० रुपये।

३. **तैत्तिरीय-संहिता**—मूलमात्र, मन्त्र-सूची सहित। ४०-००

४. **तैत्तिरीय-संहिता-पदपाठः**—(दाक्षिणात्य-पाठः) १००-००

५. **अथर्ववेदभाष्य**—श्री पं० विश्वनाथ जी वेदोपाध्याय कृत। ११-१३ काण्ड ३०-००; १४-१७ काण्ड २४-००; १८-१९ वां काण्ड २०-००; बीसवां काण्ड २०-००। काण्ड ९-१० छप रहा है।

६. **ऋग्वेदादिभाष्य-भूमिका**—पं० युधिष्ठिर मीमांसक द्वारा सम्पादित एवं शतशः टिप्पणियों से युक्त। साधारण जिल्द २५-००, पूरे कपड़े की ३०-००, सुनहरी ३५-००।

७. **ऋग्वेदादिभाष्यभूमिका-परिशिष्ट**—भूमिका पर किए गए आक्षेपों के ग्रन्थकार द्वारा दिए गए उत्तर। मूल्य २-५०

८. **माध्यन्दिन (यजुर्वेद) पदपाठ**—शुद्ध संस्करण। २५-००

९. **गोपथ-ब्राह्मण (मूल)**—सम्पादक श्री डा० विजयपाल जी विद्यावारिधि। अब तक प्रकाशित सभी संस्करणों से अधिक शुद्ध सुन्दर संस्करण। मूल्य ४०-००

१०. **वैदिक-सिद्धान्त-मीमांसा**—पं० युधिष्ठिर मीमांसक लिखित वेद-विषयक १७ विशिष्ट निबन्धों का अपूर्व संग्रह। शीघ्र छपेगी

११. **कात्यायनीय ऋक्सर्वानुक्रमणी**—(ऋग्वेदीया) षड्गुरुशिष्य विरचित संस्कृत टीका सहित। टीका का पूरा पाठ प्रथम बार छापा गया है। विस्तृत भूमिका और अन्त में अनेक उपयोगी परिशिष्ट छापे गये हैं। मूल्य १००-००

१२. **ऋग्वेदानुक्रमणी**—वेङ्कट माधवकृत। इस ग्रन्थ में स्वर छन्द आदि आठ वैदिक विषयों पर गम्भीर विचार किया हैं। व्याख्याकार—श्री डा० विजयपाल जी विद्यावारिधि। उत्तम-संस्करण ३०-००; साधारण २०-००

१३. **ऋग्वेद की ऋक्संख्या**—युधिष्ठिर मीमांसक। मूल्य २-००

१४. **वेदसंज्ञा-मीमांसा**—युधिष्ठिर मीमांसक। १-००

१५. **वैदिक-छन्दोमीमांसा**—युधिष्ठिर मीमांसक। नया सं० २०-००

१६. **वैदिक-स्वर-मीमांसा**—युधिष्ठिर मीमांसक (नया सं०) २५-००

१७. **वैदिक-साहित्य-सौदामिनी**—श्री पं० वागीश्वर वेदालंकार विरचित वेदमन्त्रों का साहित्य शास्त्रीय विवेचनात्मक अभूतपूर्व ग्रन्थ (संस्कृत) मूल्य ६०-००

१८. **वेदों का महत्त्व तथा उनके प्रचार के उपाय; वेदार्थ की विविध प्रक्रियाओं की ऐतिहासिक मीमांसा** (संस्कृत या हिन्दी)—यु० मी० ५-००

१९. **देवापि और शन्तनु के आख्यान का वास्तविक स्वरूप**—लेखक—श्री पं० ब्रह्मदत्त जिज्ञासु। मूल्य २-००

२०. **वेद और निरुक्त**—श्री पं० ब्रह्मदत्त जिज्ञासु। मूल्य २-००

२१. **निरुक्तकार और वेद में इतिहास**— ,, ,, २-००

२२. **त्वाष्ट्री सरण्यू की वैदिक कथा का वास्तविक स्वरूप**—लेखक—श्री पं० धर्मदेव जी निरुक्ताचार्य। मूल्य २-००

२३. **क्या वेद में आर्यों और आदिवासियों के युद्धों का वर्णन है?**—लेखक—श्री वैद्य रामगोपाल जी शास्त्री। मूल्य १०-००

२४. **शिवशङ्करीय-लघुग्रन्थ पञ्चक**—इसमें श्री पं० शिवशङ्कर जी काव्यतीर्थ लिखित वेदविषयक **चतुर्दश-भुवन, वसिष्ठ-नन्दिनी, वैदिक-विज्ञान, वैदिक सिद्धान्त और ईश्वरीय पुस्तक कौन?** नाम के पांच विशिष्ट निबन्ध हैं। मूल्य ६-००

२५. **यजुर्वेद का स्वाध्याय तथा पशुयज्ञ समीक्षा**—लेखक पं० विश्वनाथ जी वेदोपाध्याय। बढ़िया जिल्द २०-००, साधारण १६-००।

२६. **शतपथ ब्राह्मणस्थ अग्निचयन-समीक्षा**—लेखक पं० विश्वनाथ जी वेदोपाध्याय। मूल्य ४०-००

२७. **वैदिक-जीवन**—पं० विश्वनाथ वेदोपाध्याय विरचित। अथर्ववेद के आधार पर वैदिक-जीवन का सांगोपाङ्ग वर्णन। मूल्य १६-००

२८. **वैदिक-पीयूष-धारा**—लेखक—श्री देवेन्द्र कुमार जी कपूर। चुने हुए ५० मन्त्रों की प्रतिमन्त्र पदार्थ पूर्वक विस्तृत व्याख्या, अन्त में भावपूर्ण गीतों से युक्त। उत्तम जिल्द १५-००; साधारण १०-००।

२६. **उरु-ज्योति**—डा० वासुदेवशरण अग्रवाल लिखित वेदविषयक स्वाध्याय योग्य निबन्धों का संग्रह। सुन्दर छपाई पक्की जिल्द १६-००

३०. **वेदों की प्रामाणिकता**—डा० श्रीनिवास शास्त्री। १-५०

३१. **ANTHOLOGY OF VEDIC HYMNS**—Swami Bhumananda Sarasvati. ५०-००

## कर्मकाण्ड-विषयक ग्रन्थ

३२. **बौधायन-श्रौत-सूत्रम्**—(दर्शपूर्णमास प्रकरण)—भवस्वामी तथा सायणकृत भाष्यसहित (संस्कृत) ४०-००

३३. **दर्शपूर्णमास-पद्धति**—पं० भीमसेन कृत, भाषार्थ सहित। २५-००

३४. **कात्यायन-गृह्यसूत्रम्**—(मूलमात्र) अनेक हस्तलेखों के आधार पर हमने उसे प्रथम बार छापा है। २०-००

३५. **श्रौतपदार्थ-निर्वचनम्**—(संस्कृत) अग्न्याधान से अग्निष्टोम पर्यन्त आध्वर्यव पदार्थों का विवरणात्मक ग्रन्थ। विना जिल्द ३४-००; सजिल्द ४०-००।

३६. **संस्कार-विधि**—शताब्दी संस्करण, ४६० पृष्ठ, सहस्राधिक टिप्पणियां, १२ परिशिष्ट। मूल्य लागतमात्र १५-००, राज-संस्करण २०-००। सस्ता संस्करण मूल्य ५-२५, अच्छा कागज सजिल्द ७-५०।

३७. **संस्कार-विधि-मण्डनम्**—संस्कार-विधि की व्याख्या। लेखक—वैद्य श्री रामगोपाल जी शास्त्री। अजिल्द १०-००; सजिल्द १४-००

३८. **अग्निहोत्र से लेकर अश्वमेध पर्यन्त श्रौतयज्ञों का संक्षिप्त परिचय**—इस याग में अग्न्याधान, अग्निहोत्र, दर्शपूर्णमास, सुपर्णचिति सहित सोमयाग, चातुर्मास्य और वाजपेय याग का वर्णन है। मूल्य १०-००

३९. **वैदिक-नित्यकर्म-विधि**—सन्ध्यादि पांचों महायज्ञ तथा बृहद् हवन के मन्त्रों की पदार्थ तथा भावार्थ व्याख्या सहित। यु० मी० मूल्य ३-५० सजिल्द ५-००।

## शिक्षा-निरुक्त-व्याकरण-विषयक ग्रन्थ

४०. **वर्णोच्चारण-शिक्षा**—ऋषि दयानन्द कृत हिन्दी व्याख्या ०-६०

४१. **शिक्षासूत्राणि**—आपिशल-पाणिनीय-चान्द्र शिक्षा-सूत्र। मूल्य ६-००

४२. **निरुक्त-भाष्य**—श्री पं० भगवद्दत्त कृत नैरुक्त=आधिदैविक प्रक्रियानुसारी तथा पाश्चात्त्य मत खण्डन सहित। **अप्राप्य**

४३. **निरुक्त-श्लोकवार्त्तिकम्**—केरलदेशीय नीलकण्ठ गार्ग्य विरचित। एकमात्र मलयालम लिपि में ताडपत्र पर लिखित दुर्लभ प्रति के आधार पर मुद्रित। आरम्भ में उपोद्घात रूप में निरुक्त-शास्त्र विषयक संक्षिप्त ऐतिह्य दिया गया है (संस्कृत)। सम्पादक—डा० विजयपाल विद्यावारिधि उत्तम कागज, शुद्ध छपाई तथा सुन्दर जिल्द सहित। १००-००

४४. **निरुक्त समुच्चय**—आचार्य वररुचि विरचित (संस्कृत)। सं०—युधिष्ठिर मीमांसक। मूल्य १५-००

४५. **अष्टाध्यायी**—(मूल) शुद्ध संस्करण। ३-५०

४६. **अष्टाध्यायी-भाष्य**—(संस्कृत तथा हिन्दी) श्री पं० ब्रह्मदत्त जिज्ञासु कृत। प्रथम भाग ३०-००, द्वितीय भाग २५-००, तृतीय भाग ३०-००।

४७. **धातुपाठ**—धात्वादिसूची सहित, सुन्दर शुद्ध संस्करण। ३-००

४८. **वामनीयं लिङ्गानुशासनम्**—स्वोपज्ञ व्याख्यासहितम् ८-००

४९. **संस्कृत पठन-पाठन की अनुभूत सरलतम विधि**—लेखक—श्री पं० ब्रह्मदत्त जिज्ञासु। प्रथम भाग १०-००, द्वितीय भाग (यु० मी०) १०-००

५०. The Tested Easiest Method of Learning and Teaching Sanskrit (First Book)—यह पुस्तक श्री पं० ब्रह्मदत्त जी जिज्ञासु कृत '**विना रटे संस्कृत पठन-पाठन की अनुभूत सरलतम विधि**' भाग एक का अंग्रेजी अनुवाद है। अंग्रेजी भाषा के माध्यम से पाणिनीय व्याकरण में प्रवेश करने वालों के लिये यह आधिकारिक पुस्तक है। कागज और छपाई सुन्दर, सजिल्द २५-००।

५१. **महाभाष्य**—हिन्दी व्याख्या (द्वितीय अध्याय पर्यन्त) पं० यु० मी०। प्रथम भाग ५०-००, द्वितीय भाग अप्राप्य, तृतीय भाग २५-००।

५२. **उणादिकोष**—ऋ० द० स० कृत व्याख्या, तथा पं० यु० मी० कृत टिप्पणियों, एवं ११ सूचियों सहित। अजिल्द १०-००; सजिल्द १२-००

५३. **क्षीरतरङ्गिणी**—क्षीरस्वामी कृत धातु पाठ की सबसे प्राचीन एवं प्रामाणिक व्याख्या। सम्पादक—पं० युधिष्ठिर मीमांसक तथा डा० श्री रामशंकर भट्टाचार्य। नवीन शुद्ध तथा परिवर्धित संस्करण। मूल्य ६०-००।

५४. **दैवम् पुरुषकारवार्त्तिकोपेतम्** कृष्ण लीलाशुक मुनि कृत १०-००

५५. **लिट् और लुङ् लकार की रूप-बोधक सरलविधि**— ३-००

५६. **भागवृत्तिसंकलनम्.** अष्टाध्यायी की प्राचीन वृत्ति ६-००

५७. **काशकृत्स्न-धातु व्याख्यानम्**--संस्कृत रूपान्तर । यु० मी० १५-००

५८. **काशकृत्स्न-व्याकरणम्** संपादक यु० मी० । ६-००

५९. **शब्दरूपावली**—विना रटे शब्द रूपों का ज्ञान कराने वाली ३-००

६०. **संस्कृत-धातुकोश**—पाणिनीय धातुओं का हिन्दी में अर्थ निर्देश । सं० युधिष्ठिर मीमांसक । १०-००

६१. **अष्टाध्यायीशुक्लयजुःप्रातिशाख्ययोर्मतविमर्शः**—डा० विजयपाल विरचित पीएच० डी० का महत्त्वपूर्ण शोध-प्रबन्ध (संस्कृत)। सुन्दर छपाई उत्तम कागज़ बढ़िया जिल्द सहित । मूल्य ५०-००

## अध्यात्म-विषयक ग्रन्थ

६२. **ईश-केन-कठ-उपनिषद्**—श्री वैद्य रामगोपाल शास्त्री कृत हिन्दी अंग्रेजी व्याख्या सहित । मूल्य—ईशो० १-५०; केनो० १-५०; कठो० ३-५० ।

६३. **तत्त्वमसि**—लेखक—श्री स्वामी विद्यानन्द जी सरस्वती विरचित ईश्वर जीव और प्रकृति रूप तीनों मूल तत्त्वों का प्रतिपादन करने हारा दार्शनिक ग्रन्थ । मूल्य ४०-००

६४. **ध्यानयोग-प्रकाश**—स्वामी दयानन्द सरस्वती के योग विद्या के शिष्य स्वामी लक्ष्मणानन्द कृत । बढ़िया पक्की जिल्द, मूल्य १६-००

६५. **अनासक्तियोग** लेखक पं० जगन्नाथ पथिक । मूल्य १५-००

६६. **आर्याभिविनय (हिन्दी)**—स्वामी दयानन्द । गुटका सजिल्द ४-००

६७. **Aryabhivinaya—English translation and notes** (स्वामी भूमानन्द) दोरङ्गी छपाई । अजिल्द ४-००, सजिल्द ६-००

६८. **वैदिक ईश्वरोपासना** । १-५०

६९. **विष्णुसहस्रनाम-स्तोत्रम्—(सत्यभाष्य-सहितम्)**—पं० सत्यदेव वासिष्ठ कृत आध्यात्मिक वैदिक भाष्य (४ भाग) । प्रति भाग १५-००

७०. **श्रीमद्भगवद्-गीता-भाष्यम्**—श्री पं० तुलसीराम स्वामी ६-००

७१. **अगस्त्यपन्थ के यात्री को आत्मदर्शन**—चंचल बहिन । ३-००

## नीतिशास्त्र-इतिहास-विषयक ग्रन्थ

७२. **शुक्रनीतिसार**—व्याख्याकार श्री० स्वा० जगदीश्वरानन्द जी सरस्वती । विस्तृत विषय सूची तथा श्लोक-सूची सहित उत्तम कागज सुन्दर छपाई तथा जिल्द सहित । मूल्य ४५-००

**७३. विदुर-नीति**—युधिष्ठिर मीमांसक कृत प्रतिपद पदार्थ और व्याख्या सहित। बढ़िया कागज, पक्की सुन्दर जिल्द। मूल्य ३६-००

**७४. सत्याग्रह-नीति-काव्यम्**—आ० स० सत्याग्रह १९३९ ई० में हैदराबाद जेल में पं० सत्यदेव वासिष्ठ द्वारा विरचित। हिन्दी व्याख्या सहित। मूल्य ५-००

**७५. संस्कृत व्याकरणशास्त्र का इतिहास** युधिष्ठिर मीमांसक कृत नया परिष्कृत परिवर्धित चतुर्थ संस्करण। तीनों भागों का मूल्य १२५-००

**७६. संस्कृत व्याकरण में गणपाठ की परम्परा और आचार्य पाणिनि**—लेखक डा० कपिलदेव शास्त्री एम० ए०। सजिल्द १५-००

**७७. ऋषि दयानन्द के पत्र और विज्ञापन**—इस बार इस में ऋषि दयानन्द के अनेक नये उपलब्ध पत्र और विज्ञापन संगृहीत किये गये हैं। इस बार यह संग्रह चार भागों में छपा है। प्रथम दो भागों में ऋ० द० के पत्र और विज्ञापन आदि संगृहीत है। तीसरे और चौथे भाग में विविध व्यक्तियों द्वारा ऋ० द० को भेजे गये पत्रों का संग्रह है। प्रथम भाग—३५-००, दूसरा भाग ३५-००, तीसरा भाग ३५-००, चौथा भाग ३५-००

**७८. विरजानन्द-प्रकाश**—लेखक—पं० भीमसेन शास्त्री एम० ए०। नया परिवर्धित और शुद्धसंस्करण। मूल्य ३-००

**७९. ऋषि दयानन्द सरस्वती का स्वलिखित और स्वकथित आत्म-चरित**—सम्पादक पं० भगवद्दत्त। मूल्य १-००

**८०. ऋषि दयानन्द और आर्यसमाज की संस्कृत-साहित्य को देन**—लेखक—डा० भवानीलाल भारतीय एम० ए०। सजिल्द २०-००

## दर्शन-आयुर्वेद-विषयक ग्रन्थ

**८१. मीमांसा-शाबर-भाष्य**—आर्षमतविमर्शिनी हिन्दी व्याख्या सहित। व्याख्याकार—युधिष्ठिर मीमांसक। प्रथम भाग ४०-००; द्वितीय भाग ३०-००; तृतीय भाग ५०-००; चौथा भाग ४०-००। पांचवां भाग छप रहा है।

**८२. नाडी-तत्त्वदर्शनम्** श्री पं० सत्यदेव जी वाशिष्ठ। मूल्य ३०-००

## प्रकीर्ण-ग्रन्थ

**८३. सत्यार्थप्रकाश**—(आर्यसमाज-शताब्दी-संस्करण)—१३ परिशिष्ट ३५०० टिप्पणियां, तथा सन् १८७५ के प्रथम संस्करण के विशिष्ट उद्धरणों सहित। राजसंस्करण मूल्य ३५-००, साधारण संस्करण ३०-००

८४. **दयानन्दीय लघुग्रन्थ-संग्रह**—१४ ग्रन्थ,सटिप्पण, अनेक परिशिष्टों के सहित। ३०-००

८५. **भागवत-खण्डनम्**—ऋ० द० की प्रथम कृति। अनु० युधिष्ठिर मीमांसक ३-००

८६. **संस्कृतवाक्यप्रबोध**—ऋ० द० कृत। संस्कृत वाक्यप्रबोध पर पौराणिक पण्डित अम्बिकादत्त व्यास के किये गये आक्षेपों, के पं० युधिष्ठिर मीमांसक द्वारा लिखित उत्तर के सहित। नया संस्करण छप रहा है।

८७. **ऋषि दयानन्द के शास्त्रार्थ और प्रवचन**—इसमें पौराणिक विद्वानों तथा ईसाई मुसलमानों के साथ ऋषि दयानन्द के अत्यन्त प्रामाणिक एवं महत्त्वपूर्ण शास्त्रार्थ दिये गये हैं। अनन्तर पूना में सन् १८७५ तथा बम्बई में सन् १८८२ में दिये गये व्याख्यानों का संग्रह है। इससे पूर्व के छपे पूना के व्याख्यान जो हिन्दी में उपलब्ध होते हैं, उनमें अनुवादकों ने मनमाना घटाया बढ़ाया है। हमने सन् १८७५ में व्याख्यान काल के छपे हुए मूल मराठी भाषा में प्रकाशित ट्रैक्टों के अनुसार नया प्रामाणिक अनुवाद दिया है। बम्बई के २४ प्रवचनों का सारांश तो इसमें प्रथम बार प्रकाशित हुआ है। साथ में ८-१० विशिष्ट परिशिष्ट दिये हैं। सुन्दर सुदृढ़ कागज, पूरे कपड़े की सुन्दर जिल्द, मूल्य लागत-मात्र ३०-००

८८. **दयानन्द-शास्त्रार्थ-संग्रह**—संख्या ८७ के ग्रन्थ से पृथक् स्वतन्त्र रूप से छपा है। सं० डा० भवानीलाल भारतीय। सस्ता संस्करण १०-००

८९. **दयानन्द-प्रवचन-संग्रह**—(पूना-बम्बई प्रवचन)। पूर्ववत् स्वतन्त्र रूप में छपा है। अनुवादक, सम्पा० यु० मी० सस्ता सं० १०-००

९०. **ऋषि दयानन्द सरस्वती के ग्रन्थों का इतिहास**—लेखक युधिष्ठिर मीमांसक। नया परिशोधित परिवर्धित संस्करण। मूल्य ४०-००

९१. **व्यवहारभानु**—ऋषि दयानन्द कृत। २-००

९२. **आर्योद्देश्यरत्नमाला**—ऋषि दयानन्द कृत। ०-५०

९३. **अष्टोत्तरशतनाममालिका**—सत्यार्थप्रकाश के प्रथम समुल्लास की सुन्दर प्रामाणिक विस्तृत व्याख्या। लेखक—पं० विद्यासागर शास्त्री। मूल्य ६-००

९४. **कन्योपनयन-विधि**—अर्थात् 'कन्योपनयन-प्रतिषेध' ग्रन्थ का खण्डन। श्री पं० महाराणी शंकर। अपने विषय की सुन्दर सामायिक पुस्तक। मूल्य ४-००; सजिल्द ६-००

**९५. आर्य-मन्तव्य-प्रकाश**—महामहोपाध्याय पं० आर्यमुनि। प्रथम भाग ५-००, द्वितीय भाग ५-००।

**९६. ऋषि दयानन्द और आर्यसमाज से सम्बद्ध कतिपय महत्त्वपूर्ण अभिलेख**—इसमें ऋ० द० के नये उपलब्ध पत्र, बम्बई आर्यसमाज के २८ नियमों की ऋ० द० कृत व्याख्या पं० गोपालराव हरि देशमुख लिखित दयानन्द चरित मराठी का हिन्दी रूपान्तर, आर्यसमाज काकड़वाड़ी बम्बई की पुरानी गुजराती में लिखित कार्यवाही (सन् १८८२ में जब ऋ० द० बम्वई में थे) का हिन्दी रूपान्तर आदि। मूल्य ८-००

**९७. दयानन्द अङ्क** (१) इस में ऋषि दयानन्द के जीवन से सम्बद्ध अभी तक अज्ञात और हिन्दी में अप्रकाशित घटनाओं तथा ऋ० द० की यात्रा का विवरण तिथि संवत् तारीख वार सन् सहित छापा है। अन्त में ऋ० द० के अन्तिम विशेष कार्यकाल के १० वर्षों (सन् १८७४ से १८८३ तक) का तारीख मास दिन का देशी तारीख मास और संवत् का तुलनात्मक तिथि-पत्र छापा गया है। इससे जीवनचरितों एव पत्रों में निर्दिष्ट इन वर्षों की अनेक तिथि तारीख और दिन की भूलों का परिमार्जन होता है। मूल्य १०-००

**९८. दयानन्द अङ्क** (२) ऋषि दयानन्द के नूतन उपलब्ध पत्र, पत्रांश जो पहले नहीं छपे थे तथा एक जाली पत्र और उसकी विवेचना, ऋ० द० के जीवन से सम्बद्ध अज्ञात वा अप्रकाशित घटनाएं ऋषि दयानन्द के सहयोगी महाराष्ट्रिय विशिष्ट व्यक्तियों का मराठी से अनूदित परिचय आदि अनेक विषयों का सन्निवेश किया गया है। मूल्य ८-००

**विशेष**—ये संख्या ९६,९७,९८ के तीनों अङ्क ऋषि दयानन्द के जीवन-चरित पर कार्य करने वाले भावी विद्वानों के लिये बड़े उपयोगी हैं। तीनों बहुत सीमित संख्या में छपवाये गये हैं।

पुस्तक प्राप्ति स्थान—

# श्री रामलाल कपूर ट्रस्ट

**बहालगढ़ (सोनीपत-हरयाणा)-१३१०२१**

**रामलाल कपूर एण्ड संस पेपर मर्चेण्ट, ३५९६ नई सड़क, देहली**

